अच्युतग्रन्थमालायाः पञ्चमं पुष्पम्

श्रीसदानन्दविद्वद्विरचितः
स्वोपज्ञस्वप्रभाख्यव्याख्यासंवलितः

# प्रत्यक्तत्त्वचिन्तामणिः

प्रथमो भागः

काशिकश्रीजोखीराममटरूमल्लगोयनका-संस्कृतमहाविद्यालय-पुस्तका-
लयाध्यक्षेण अच्युतग्रन्थमालाध्यक्षेण च साहित्याचार्य-
श्रीकृष्णपन्तशास्त्रिणा
सम्पादितः

प्रकाशनस्थानम्—

अच्युतग्रन्थमालाकार्यालयः,
काशी

संवत् १९८८ ] [ प्रथमावृत्तिः १५००

श्रीः

# भूमिका

जयति सतिलकः प्रत्यक्तत्त्वचिन्तामणिर्नाम अद्वैतवेदान्तस्या-मुद्रितपूर्वं किमप्यपूर्वं ग्रन्थरत्नम् । तस्येमं प्रथमभागमच्युतग्रन्थमालायां संग्रथ्य सर्वसुलभतां नयतामस्माकमहो प्रमोदभरः । मन्ये द्वितीयोऽप्यस्य भागस्तूर्णं प्रकाशमुपैष्यतीति । ग्रन्थरत्नस्यास्य रचयिता मुकुन्द-पदारविन्दमकरन्दास्वादरतमनोमधुपो ब्रह्मानन्दास्वादलुब्धस्तत्रभवान् विपश्चितामपश्चिमः सदानन्दः । वेदान्तसारनिर्मातुः सदानन्दादयमन्यः । तिलकमपि अस्यैव विदुषः कृतिः । विद्वद्वृन्दवन्दितपदारविन्दः कदायं महीमण्डलं मण्डयामासेत्यनुयोगेऽमुकवत्सरेऽस्य जनिर्जातेति समाधि-र्दुरभिधः । परन्त्वस्माद् ग्रन्थान्तिमात्पद्यात्—

वेदान्ततत्त्वमधिगम्य गुरोः श्रुतेश्च
रामात्परं न किमपीति सदैकबुद्धिः ।
विद्वन्मणिर्हि शिवलाल इति प्रतीत-
स्तेनाहमीरित इमं कृतवान् निबन्धम् ॥

इदमवगम्यते यद् शिवलालमहोदयेन प्रेरितो ग्रन्थकर्त्ता ग्रन्थमि-ममारचितवानिति । शिवलालनामानस्तावदनेके पुरुषधौरेयाः समभूवन् । (१) अद्भुतसंग्रहटीकाप्रश्नमनोरमाटीकाप्रणेता एकस्तावद् शिवलालः । (२) जातिशाङ्कर्य्यनाम्नो धर्मशास्त्रनिबन्धस्य रचयिताऽपरः शिवलालशुक्लः । (३) श्यामलारहस्यनिर्माता तृतीयः शिवलालः । (४) सिद्धान्तबिन्दु-प्रदीपिकाप्रणेता तुरीयः शिवलालशर्मा । वाल्मीकिरामायणस्य सुन्द-रीटीकाया रामार्चनसोपानस्य च निर्माता पञ्चमः शिवलालपाठक इत्यादयः । एषु को ग्रन्थकृतोऽस्य प्रेरकः शिवलाल इति गवेषणायां क्रियमाणायां 'रामात्परं न किमपीति सदैकबुद्धिः' इति विशेषणेन

अन्तिमो रामार्चनसोपानादिप्रणेता शिवलालपाठक एवास्य प्रेरक इति विज्ञायते। अस्य महाभागस्य विषये गणकतरङ्गिण्यामित्थमुट्टङ्कितमस्ति—

त्रिस्कन्धज्यौतिषशास्त्रपारदृश्वा पुराणेतिहासतत्त्ववेत्ता तन्त्रविद्यैककुशलो वेदान्तादिदर्शनेष्वपि प्रौढिमान् महाभागोऽयं निखिले भारते वर्षे परां प्रतीतिमुपगतो रामाराधनप्रधानकृतिः कृती काश्यामसीसङ्गमे न्यवसत्। अस्यैव तनयो रामानन्दपाठकः पुरा काशिकराजकीयपाठशालायां सर्वविद्वन्मूर्द्धन्यत्वेन नियुक्त आसीत्। स यदा तत्र नियुक्तिमुपगतस्तस्मिन्नेवावसरे पुत्रार्जिताङ्गलधनधान्याशनभिया गृहं विहाय श्रीसीतारामचरणारविन्दमकरन्दलुब्धचित्तो विरक्तिमुपागमत्। ज्यौतिषादिविद्याकलापेषु परं प्रावीण्यमुपगतोऽप्ययं वास्तुविद्यायामसाधारणीं चातुरीमादधाति स्म। सङ्गीतविद्यारसिकोऽयं सङ्गीतकलाकुशलस्य कस्यचिद्बालकस्य गानेन सन्तुष्टस्तं वास्तुविद्यामपाठयत्। तद्वंश्या अद्यावधि काश्यां कर्णघण्टासविधे शिल्पचतुरा वास्तुविद्यानिपुणाश्च विद्यन्ते। वाल्मीकिरामायणस्य सुन्दरी नाम टीका रामार्चनसोपानश्च विदुषानेन रचितौ। गोस्वामितुलसीदासकृतग्रन्थेषु विदुषोऽस्य परा प्रीतिरासीद्। एतच्छोधिता तुलसीदासकृतविनयपत्रिका काश्यां ज्योतिर्विद्वरश्यामाचरणशर्मसद्मनि अद्यापि वरीवर्ति। तत्रास्ति पद्यमिदम्—

शोधिता शिवलालेन भूबाणवसुचन्द्रके।
वर्षे गीतावलिरियं श्रीसीतारामतुष्टये॥

अस्य निधनसमयो न ज्ञायते। विनयपत्रिकाशोधनकाले १८५१ वैक्रमाब्दे यद्यस्य वयः षष्टिवर्षासन्नं कल्प्यते तदा जन्म १७९१ वैक्रमाब्दे समभूदिति ज्ञायते।

भारते वर्षेऽयमतीव प्रख्यातो विविधविद्यातत्त्वकुशलः सिद्धरूपश्चासीदिति वृद्धेभ्यः सर्वत्र श्रूयते इति।

अस्यैव महाभागस्य समकालिकोऽयं ग्रन्थकारः विक्रमवत्सरस्याष्टादशशतकान्ते जनिमलभतेति ज्ञायते ।

महाभागस्यास्य तत्त्वविवेकोपरि एका टीकाप्युपलभ्यते । एवं (१) प्रत्यक्तत्त्वचिन्तामणिः, (२) तट्टीका, (३) तत्त्वविवेकटीका चेति तिस्रोऽस्य कृतयो विदुषामुदमावहन्त्यस्तत्कीर्त्तिलतालवालरूपेण विद्यन्ते ।

अद्वैतमतावलम्बी सदानन्दमहोदयोऽन्तरशो भगवन्तं श्रीशङ्कराचार्यमनुसरतीति निम्नाम्नातपद्येनावगम्यते—

सारात्सारं निगमजलधेरुद्धृतं शास्त्रमेतद्
वेदान्ताख्यं सुभगमुनिना न्यायतः सन्निबद्धम् ।
तत्सारांशं यतिवरगिरा लब्धमादाय कुर्वे
प्रत्यक्चिन्तामणिमतिमुदा श्रीपतिप्रीतिकामः ॥

अस्य पद्यस्य व्याख्यामातन्वता ग्रन्थकृता स्पष्टीकृतमिदम्—निगमो वेदः स एव दुःखगाहादिगुणविशिष्टतया जलधिः समुद्रस्तस्मात्सारप्रतिपादकतया सारभूतादपि सारभूतब्रह्माद्वैतपरमेतच्छास्त्रं वेदान्ताख्यं सुभगमुनिना शोभनैश्वर्यविशिष्टेन सकलवेदार्थावगन्त्रा भगवता व्यासेनोद्धृतं वेदसमुदायान्निष्कृष्योपनिषद्भागः पृथक्कृतः सम्यगध्यायादिरूपेण स्थापितस्तमपि संगृह्य न्यायतः 'अथातो ब्रह्मजिज्ञासा' इत्यादिन्यायरूपेण सम्यङ्निबद्धं शारीरकमीमासाख्यं शास्त्रं सूत्ररूपं कृतं तत्सारांशं यतिवरगिरा यतीनां परमहंसानां मध्ये वरः साक्षाद्भगवतः पशुपतेरवतारतया वेदान्ताब्जभास्करो विनष्टप्रायब्रह्मविद्यासम्प्रदायाविर्भावहेतुर्भगवान् भाष्यकारः श्रीशङ्कराचार्यनामा तस्य गीः श्रुतिस्मृतिसूत्रभाष्यरूपा तया तत्प्रसादात्तदध्ययनादिना लब्धं स्वबुद्ध्यारूढमादाय तदेव मूलतया गृहीत्वा प्रत्यक्चिन्तामणिं प्रत्यक्तत्त्वं ब्रह्मैक्यं वेदान्तप्रमेयं यत् तद्विषयिणी चिन्ता चिन्तनप्रकारश्च तयोर्मेणिरिव मणिः सर्वार्थभासकतया स्वरूपप्रकाशकस्तद्द्बोधजनक एतन्नामको ग्रन्थस्तं कुर्वे इति सम्बन्ध इति ।

अतः शाङ्करभाष्यस्य पद्यमयः संक्षेप एवायं ग्रन्थ इत्युक्तं यदि स्यात्तर्हि व्याहृतिरियं नार्हति वाच्यताम् ।

अस्य ग्रन्थस्य संशोधनाधारभूता नातिशुद्धा एकैव मातृका । सा च तत्रभवतां काशिकराजकीयसंस्कृतपाठशालाप्रधानाध्यक्षाणां ग्रन्थमालाया अस्याः प्राणभूतानां पण्डितप्रवरगोपीनाथकविराजमहोदयानामनुकम्पया सरस्वतीभवनग्रन्थागारादधिगता । अद्यावधि ध्वान्तविलीनस्य ग्रन्थस्यास्य प्रकाशने तेषामासीन्महानभिनिवेशः, अतः पाठकमहोदयानामस्माकञ्चापश्चिमान् धन्यवादान् त एवार्हन्ति सन्तः ।

तामेकामेव मातृकामवलम्ब्य शोधनकर्म्मणि प्रवृत्तोऽहं यावन्तं परिक्लेशमसहं विपश्चितामनुभूतचरस्य तस्योल्लेखस्य नात्रावश्यकता । तथापि मदीयशेमुषीदोषेण शीशकाक्षरसंयोजकानामनवधानतया च नास्त्यत्र स्खलितानामभावः । अतो गुणैकपक्षपातिनो विद्वन्मूर्द्धन्याः सादरमभ्यर्थ्यन्ते यदत्र जातानि स्खलितानि संक्षम्य अनुगृह्णन्तु जनमिममिति ।

टीकायामुद्धृतानां श्रुत्यंशानां पौर्वापर्य्यपर्य्यालोचनेऽङ्कानां निर्देशमन्तरा कठिनतापतेदनुसन्धातृणामिति यथाशक्ति श्रुत्यध्यायादिसूचका अङ्का अप्यऽत्र सन्निवेशिताः । व्यापारोऽयं कियानपि उपकारी विदुषां यदि स्यात्तदा श्रमो मे साफल्यमुपैष्यति ।

इदमन्यच्चात्र वक्तव्यं यद् ग्रन्थस्यास्य संशोधने प्रवृत्तस्य मम सन्दिग्धस्थलेषु परामर्शदानेन साहाय्यं विदधानाः काशिकश्रीजोखीराममटरूमल्लगोयनकासंस्कृतमहाविद्यालयाध्यक्षाः पण्डितवर्य्यश्चिण्डीप्रसादशुक्लमहोदया अपि अनेकशो धन्यवादानर्हन्तीति शम् ।

| | |
|---|---|
| काशी<br>श्रीरामनवमी सं० १९८८ | सतामाश्रवः<br>**श्रीकृष्णपन्तः** |

·

# प्रत्यक्तत्त्वचिन्तामणिविषय-सूची

पृष्ठ

पृष्ठ

पृष्ठ

पृष्ठ



## प्रत्यक्स्वप्रकाशत्वसाधकमयूखाभिधं तृतीयं प्रकरणम् ... ...१११-१३८

पृष्ठ

पृष्ठ

पृष्ठ

पृष्ठ

पृष्ठ

पृष्ठ

पृष्ठ

पृष्ठ

पृष्ठ

श्रीगणेशाय नमः ।

श्रीमत्सदानन्दविद्वद्विरचितः

स्वप्रभाख्यव्याख्यासंवलितः

# प्रत्यक्तत्त्वचिन्तामणिः ।



**मेघश्यामं निरवधिरसं पीतवासो दधानं**
**कान्त्याक्रान्तत्रिभुवनवपुर्ध्येयपादारविन्दम् ।**
**सत्यज्ञानामितसुखमवाग्गोचरं बुद्ध्यतीतं**
**भक्त्या सिद्ध्यै स्वमपि कलये श्रीमुकुन्दं स्मितास्यम् ॥ १ ॥**

नन्दालये विलसितं श्रुतिभिर्विमृग्यं
ब्रह्मादिवन्द्यचरणं नवमेघवर्णम् ।
संसारतापशमनं सुपुमर्थमाद्यं
कृष्णं श्रये दलितमोहमयान्धकारम् ॥ १ ॥

आनन्दकन्दममृतायनमीशितारं
श्रीलक्ष्मणाग्रजमखण्डकलाभिरामम् ।
अज्ञानरावणरिपुं सुकुमारदेहं
सीतापतिं हनुमताश्रितमाश्रयेऽन्तः ॥ २ ॥

नत्वा साम्बं शिवं श्रीगणपतिममरैर्वन्द्यपादारविन्दं
मार्तण्डं भ्रान्तिखण्डं गुरुमतिसुहृदं शारदां संविदीशाम् ।
व्यासं वेदाब्जभानुं यतिवरममरप्रार्थ्यवेदान्तभाष्यं
व्याख्यां चिन्तामणेः श्रीहरिपदरतये स्वप्रभाख्यां प्रकुर्वे ॥ ३ ॥

कृपामृतरसापारावारं सर्वसुहृत्सखम् ।
श्रीमुकुन्दमहं वन्दे तत्पदाम्भोजभक्तये ॥ ४ ॥

प्रारिप्सितग्रन्थस्य निर्विघ्नपरिसमाप्तिप्रचयगमनादिसिद्धये विशिष्टशिष्टाचारानुमितश्रुतिस्मृतिप्रमाणकं स्वेष्टदेवतानुसन्धानात्मकं मङ्गलमाचरन्नर्थाच्छास्त्रीयाभिधेयप्रयोजने दर्शयति श्रोतृप्रवृत्तिसिद्धये—मेघश्याममित्यादिना पद्यत्रयेण । अस्मिन् वेदान्तप्रकरणे तत्त्वंपदार्थतत्त्वं तदैक्यवाक्यार्थतत्त्वञ्च प्रतिपाद्यते विषयः । तज्ज्ञानाच्च तद्गताऽविद्यातत्कार्यात्मसंसारबन्धबाधः, स्वरूपपरमानन्दाविर्भावः प्रयोजनमिति स्थितिः । तदुभयमिह मङ्गलाचरणव्याजेन पद्यत्रयेणादौ संगृह्णाति मेघश्याममित्यादिना । श्रीमुकुन्दं कलये, इत्यन्वयः । श्रिया ब्रह्मविद्यया मुक्तिं ददाति निजभक्तेभ्य इति श्रीमुकुन्दः,

"ददामि बुद्धियोगं तं येन मामुपयान्ति ते ।" ( गी० १० । १०) इति भगवद्वचनात् ।

स वासुदेवो भगवान् कृष्णः सर्ववेदान्ततात्पर्य्यविषयस्तत्पदार्थस्तं कलये—निरतिशयसौन्दर्यमाधुर्य्यसौष्ठवाद्यनन्तकल्याणगुणाभिरामं भक्तानुग्रहार्थं गृहीतलीलाविग्रहं सगुणं भगवन्तमनुसन्दधे । तद्गुणसौन्दर्यलुब्धचेतस्तया तद्दास्यमेवाङ्गीकरोमीत्यर्थः । स्वमपीत्यत्रापिशब्देन स्वं स्वात्मत्वेन शास्त्राचार्यप्रसादादभिव्यक्तमपि तदित्थंभूतगुणाकर्षितचेतस्तया तदीयदास्यसख्यादिरसास्वादनेन च प्रतिक्षणं तमेव भगवन्तं निर्द्धनः कुतश्चिद् भाग्याल्लब्धं चिन्तामणिमिवान्तः कलये इति द्योत्यते । एतदेवोपपादयंस्तत्र हेतुमाह—भक्त्येति । भक्त्या

भक्तिद्वारा, सिद्ध्यै भक्तानां मोक्षसिद्धये । वस्तुतः सत्यज्ञानाद्यात्मकमेव मेघश्यामं नवघनरमणीयकान्तिमद्वपुषं निरवधिरसमपरिच्छिन्नश्रृङ्गारादिनवरसाधारं कान्त्या सर्वसौन्दर्यसारसर्वस्वभूतयाऽऽक्रान्तं वशीकृतत्रिभुवनं येन तद्वपुर्दधानम् । दधानमित्यस्य पीतवासोदधानमित्यत्राप्यन्वयः । ध्येये अवश्यं ध्यातव्ये पादारविन्दे यस्य तं स्मितेन मन्दहसितेन निजभक्तानुग्रहसूचकेनोपलक्षितमास्यं मुखारविन्दं यस्य तं कलये—इति सम्बन्धः । एवमनन्तकल्याणगुणगणनिलयं भगवन्तमनुसन्धाय तमेवाखण्डवाक्यार्थभूतमनुसंदधानोऽखण्डवाक्यार्थसिद्धये तत्पदार्थं शोधयति—सत्यज्ञानामितसुखमिति । "आनन्दादयः प्रधानस्य" (ब्र० सू० ३ । ३ । ११) इति न्यायेन "सत्यं ज्ञानमनन्तं ब्रह्म" ( तै० २ । १ ) "विज्ञानमानन्दं ब्रह्म" ( बृ० ३ । ९ । २८ ) इति श्रुत्योः परस्परैकवाक्यतामभिप्रेत्य सत्येत्यादिभिः सुखपदस्य समासः । सत्यमनृतशून्यव्यावृत्तं बाधाभावोपलक्षितस्वरूपं सत्तात्मकमिति यावत् । ननु सत्यमपि तत् तमोवज्जडं किन्न स्यादित्यत आह—ज्ञानेति । ज्ञानं स्वप्रकाशम्, अप्रकाशजडविलक्षणत्वनिर्देशसामर्थ्यात् । "तद्देवा ज्योतिषां ज्योतिः" ( बृ० ४ । ४ । १६ ) "तस्य भासा सर्वमिदं विभाति" ( कौ० २ । ५ । १५ ) इत्यादिश्रुतेः । ननु सत्यज्ञानात्मकमपि परिच्छिन्नं स्यादित्यत आह—अमितेति । अमितशब्दोऽनन्तपदपर्य्यायः स चाविद्याध्यस्तदेशकालवस्तुभ्यः परमात्मनः परिच्छेदं व्यावर्त्तयत्येव, नञ्पदप्रयोगात् ।

तदुक्तम्—"तत्रानन्तोऽन्तवद्वस्तुव्यावृत्त्यैव विशेषणम्" इति । इतराणि तु पदानि स्वार्थापरित्यागेनैव स्वं विरोध्यर्थव्यावृत्तं ब्रह्म लक्षयन्ति । तदुक्तम्—"स्वार्थार्पणप्रणाड्या च परिशिष्टौ विशेषणम्" इति । परिशिष्टौ सत्यज्ञानशब्दावित्यर्थः । ननु सत्यज्ञानानन्तमपि ब्रह्म न प्रेप्सागोचरः, सुखदुःखाभावतत्साधनानामन्यतमत्वाभावात् । न तावत्स्वसुखदुःखाभावसाधनं ब्रह्म, स्वस्मिन्सुखदुःखयोर्नित्यनिवृत्तत्वात् ।

"अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" ( छा० ८ । १२ । १) इति श्रुतेः। नाप्यन्यगतसुखादिसाधनं ब्रह्म, अन्येषां दृष्टादृष्टसुखदुःखप्राप्तिपरिहारयोर्लौकिकवैदिकसाधनेभ्य एव सिद्धेः । तस्मान्न सुखादिसाधनं ब्रह्म, नापि दुःखाभावरूपम् ; भावात्मकस्वभावताविरोधात् । नापि सुखात्मकम्, तथात्वे प्रमाणाभावात् । इत्यत आह— सुखमिति । आनन्दस्वरूपम् । न च ब्रह्मण आनन्दात्मत्वे प्रमाणाभावः । "विज्ञानमानन्दं ब्रह्म" (बृ० ३ । ९ । २८) "आनन्दो ब्रह्मेति व्यजानात्" (तै० ३ । ६) "आनन्दरूपममृतं यद्विभाति" (मुण्ड०२।७) "यो वै भूमा तत्सुखम्"(छा० ७।२३ । १)"को ह्येवान्यात् कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्" (तै० २ । ७) इत्यादिश्रुतीनां प्रमाणत्वात् । न च प्रियाप्रियास्पर्शित्वश्रुतिविरोधः, तस्या वैषयिकप्रीतिनिषेधपरत्वादिति भावः । एवं सति सत्यज्ञानानन्तसुखं श्रीमुकुन्दं स्वं प्रत्यगभिन्नं कलये—इति ब्रह्मात्मनोः सामानाधिकरण्येन तत्त्वंपदार्थयोरैक्यं वाक्यार्थो निरूपितो भवति । एतेषाञ्च पदानां श्रीमुकुन्दपदेन प्रत्येकं प्रथममन्वितानां पश्चात्सामानाधिकरण्येन परस्परमपि सम्बन्धसिद्धिः । "अरुण्या पिङ्गाक्ष्या गवैकहायन्या सोमं क्रीणाति" इत्यत्र क्रयवाचिपदान्वितानामरुणादिपदानामिव परस्परान्वयः । न चैकार्थत्वे सत्यादिपदानां पर्यायतापत्तिरयौगपद्यञ्चेति वाच्यम्, प्रवृत्तिनिमित्तभेदात्; व्यावर्त्यभेदाच्चोक्तदोषानवकाशात् । एवं विधिमुखेनानृतजडपरिच्छिन्नदुःखरूपानात्मधर्मविलक्षणं श्रीमुकुन्दपदवाच्यं ब्रह्मेति निरूप्येदानीं "नेति नेति" (बृ० २ । ३ । ६) "अस्थूलम्" (बृ० ३ । ८ । ८) "यतो वाचो निवर्त्तन्ते" ( तै० २ । ९ ) इत्यादिश्रुतिमाश्रित्य निषेधमुखेन सकलनिषेधावधिभूतं सत्यस्य सत्यं ब्रह्मेति दर्शयति—अवाग्गोचरमिति । वाग्गोचरो न भवति यस्तम्, तत्र हेतुः—बुद्ध्यतीतमिति । नहि बुद्ध्यनारूढं वस्तु वक्तुं शक्यते । "नैव वाचा न मनसा" (क० २ । ६ । १२) "यद्वाचानभ्युदितम्" (के० १ । ४) "यन्मनसा न

मनुते" ( के० १ । ५ ) इत्यादिश्रुतेरित्यर्थः । अत इदं फलितम्—सत्यज्ञानानन्तानन्दैकरसं मुकुन्दपदवाच्यं ब्रह्म तत्पदलक्ष्यम्, स्वमिति पदस्य निर्विशेषप्रत्यक्चैतन्यमात्रनिष्ठतया त्वंपदलक्ष्यपरत्वम् । तथा च ब्रह्मात्मपदयोः सामानाधिकरण्यादैक्यवाक्यार्थसिद्धिरित्युक्तम् । तदेवं वाक्यार्थभूतं स्वं स्वात्मानं श्रीमुकुन्दं कलये । भक्त्या इत्यत्रा-प्यनुषज्यते । परप्रेमास्पदत्वेनात्यन्तानुरागेणानुसन्दधे इति सम्बन्धः ।

"भक्तानां भक्तिसिद्ध्यर्थं सच्चिदानन्दविग्रहम् ।
आविर्भावयतीशानो यस्तमेवं हरिं भजे ॥"

एवं सगुणनिर्गुणस्वरूप एक एव भगवान्मुकुन्दो ध्येयो ज्ञेय-श्चेति सिद्धम् । तेन वाक्यार्थभूतमखण्डचैतन्यात्मकं ब्रह्माज्ञातत्वेन शास्त्रस्य विषयः । श्रीमन्मुकुन्दकृपाकटाक्षनिरीक्षणेन ज्ञातं सत्तदेव प्रयोजनमिति सूचितम् । तज्ज्ञातुकामो भगवद्भक्तिपरिशोधितान्तः-करणो भगवत्प्रसादलब्धविवेकवैराग्यादिसाधनचतुष्टयसम्पन्नोऽधि-कारी । सत्यज्ञानानन्तानन्दैकरसः श्रीमुकुन्द एवानेन ग्रन्थेन प्रति-पाद्यस्तेन प्रतिपाद्यप्रतिपादकभावः सम्बन्धश्च ध्वनित इति सर्वमनव-द्यमिति ॥ १ ॥

**यत्पादाब्जस्मृतिरभयदा शान्तिदान्त्यादिहेतु-**
**र्यद्धाम्नेदं स्फुरति सकलं कल्पितं यत्र सत्ये ।**
**यं विश्वं सम्प्रविशति लये सर्वशक्तिप्रतिष्ठं**
**तं श्रीकान्तं स्वपदरतिदं संश्रये कृष्णमीशम् ॥२॥**

एवं सगुणनिर्गुणभगवदनुसन्धानमुखेन ब्रह्मणः स्वरूपलक्षणमभि-धायेदानीं स्मर्तॄणामभयप्रदातृत्वादिगुणैरलङ्कृतं भगवन्तमनुसन्दधानो जगज्जन्मादिहेतुत्वं ब्रह्मणस्तटस्थलक्षणमपि दर्शयति—यत्पादाब्जस्मृ-

तिरिति। यस्य पादाम्भोजयोः स्मृतिः स्मरणं शान्तिदान्त्यादिसकल-साधनकारणं सती अभयदा अभयशब्दवाच्यं सर्वानर्थनिवृत्त्युप-लक्षितनिरतिशयानन्दस्वरूपाविर्भावलक्षणं मोक्षं ददातीति तथा तं कृष्णं सदानन्दघनं श्रीकान्तं लक्ष्मीपतिं स्वपदरतिदं स्वात्मत्वेना-भिमतं यत्पदं "तद्विष्णोः[1] परमं पदम्" (क० १।३।९) इत्यादिश्रुतेः। तद्विषया रतिस्तत्परता तां ददाति स्वभक्तेभ्य इति तमीशं मायातत्कार्य-विश्वाधिष्ठानत्वेन सर्वस्येशितारं परमेश्वरपदाभिधेयं संश्रये—सम्यग-सम्भावनादिनिरासेन प्रपद्ये, शरणं व्रजामीत्यर्थः। तस्य सर्वाधिष्ठा-नत्वेनेश्वरत्वमेव दर्शयति—यद्धाम्नेति।

यत्र यस्मिन्नधिष्ठानभूतमायोपहितचैतन्ये सत्येऽविद्यमानमायात-त्कार्ययोः सत्ताप्रदत्वेन कालत्रयेऽप्यबाध्यस्वरूपे इदं दृश्यजातं सकलं स्थूलसूक्ष्ममूर्त्तामूर्त्तरूपं हिरण्यगर्भादिचतुर्विधभूतग्रामान्तं जगत्सर्ग-काले रज्जौ सर्प इव, मरुमयूखेषु सलिलमिव, व्योम्नि गन्धर्वनगरमि-वात्यन्तमसम्भाव्यं कल्पितमारोपितम्; स्थितिकाले यद्धाम्ना यत्स्व-रूपचैतन्यप्रकाशेन सकलं स्फुरति—नानाव्यवहारास्पदत्वेन विचित्रा-कारं विभाति; लये प्रलयकाले यं सर्वविनाशावधिभूतं सर्वाः शक्तयो यस्या मायायाः सा सर्वशक्तिस्तस्याः प्रतिष्ठा परिसमाप्तिर्यस्मिन्नव-धिभूते तं तथाभूतं तत्त्वं विश्वमध्यस्तं[2] संप्रविशति तिरोभावेन यद्भाव-मेवाप्नोतीत्यर्थः। अनेनाभिन्ननिमित्तोपादानभावेन जगज्जन्मादि-कारणत्वं ब्रह्मणस्तटस्थलक्षणं प्रदर्शितमिति ॥ २ ॥

**वाग्देवी यन्मुखसरसिजे यत्पदाब्जे स्थिता श्री-**
**र्ह्लादिन्यान्तर्हृदि जलरुहे संविदालिङ्गितो यः।**

---

१—राहोः शिर इतिवत् षष्ठी। २—अतस्मिंस्तद्बुद्धिरध्यासः।

ब्रह्मेशानामरपतिमुखैर्यः सुरैर्वन्दिताङ्घ्रि-
स्तं प्रत्यञ्चं श्रुतिमतिमतं नौमि वैकुण्ठनाथम् ॥३॥

एवं स्वरूपतटस्थलक्षणाभ्यां भगवन्तमनुसंधायेदानीं ग्रन्थकर्ता प्रार्थनीयशब्दलालित्यादिगुणाधिष्ठातृदेव्याधारत्वेन ब्रह्मादिवन्दनीयत्वेन प्रत्यगात्मत्वेन चानुसन्दधानो भगवन्तं नमस्यति—वाग्देवीति । वागधिष्ठात्री देवी द्योतनात्मिका शक्तिः सरस्वती यन्मुखसरसिजे यस्य शब्दब्रह्मयोनेर्वदनारविन्दे स्थिता सदाऽव्यभिचरितरूपेण वरीवर्ति । यत्पदाब्जे यस्य सर्वसौन्दर्यसारसर्वस्वभूतस्य भगवतः पदारविन्दे श्रीः सर्वशृङ्गारादिरसाधिष्ठात्री देवता स्वस्य स्वलावण्यविभूत्यादिगर्वं विहाय कर्म्मकरीव चाञ्चल्यादिदोषविनिर्मुक्ताऽव्यभिचरितरूपेण स्थिता स्थायीभावं प्राप्ता । ह्लादिन्या आह्लादः पञ्चक्लेशविनिर्मुक्तं यत्सुखं तद्दानशक्तिः शरणागतदीनजनोद्धरणादिशीलरूपा ह्लादिनी तया संविदा अनवच्छिन्नज्ञानरूपया अन्तर्हृदि कमले भक्तानुग्रहव्यग्रे आलिङ्गित आश्लिष्टोऽनवच्छिन्नानन्दकन्दो भगवान् अत एव चतुराननपञ्चाननसहस्रनयनादिदेवैर्वन्दिताबङ्घ्री चरणसरोजे यस्य सः । अनेन निरुपचरितब्रह्माद्यधीशोपास्यत्वेन परमेश्वरत्वमत्रैव पर्य्यवसन्नमिति ध्वनितम् । तं प्रत्यञ्चं चरमवृत्त्यारूढः सन् भक्तानां प्रतिकूलभूताविद्यातत्कार्यबन्धमञ्चति हिनस्तीति प्रत्यङ् तम्,

"तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥" (गी० १०।११)

इति भगवद्वचनात् । यद्वा, जडानृतदुःखात्मभूतेभ्यो देहादिभ्यः प्रातिलोम्येन सच्चिदानन्दस्वरूपेणाञ्चति प्रकाशते इति प्रत्यङ् तम्, "क्षेत्रज्ञञ्चापि मां विद्धि", "अहमात्मा गुडाकेश ! सर्वभूताशयस्थितः" इत्यादिभगवद्वचनात् । तं प्रत्यगात्मभूतं श्रुतिमतिमतं श्रुतिवाक्यजन्या मतिः श्रुतिमतिस्तया मतं साक्षात्कृतम् । यद्वा, श्रुतिजन्या म-

तिर्येषान्ते श्रुतिमतयो व्यासवशिष्ठप्रभृतयस्तेषां मतं सर्ववेदतात्पर्य्य-विषयत्वेनाभिमतम्। यद्वा, श्रुतिमतिभ्यां श्रवणमननाभ्यां मतं विनिश्चितं वैकुण्ठनाथं निजभक्तानुग्रहार्थं प्रादुर्भावितस्य वैकुण्ठलोकस्य नाथः साक्षान्निजभक्तेभ्यो दातृत्वेन स्वामी तं नौमि प्राह्वीभावेनाश्रयामीत्यर्थः ॥ ३ ॥

**यो ब्रह्माणं सृजति जगतां नाथ आत्मा सुहृद्यो**
**यं वेदान्तैर्विदुरविषयं सर्वबाधावधित्वात्।**
**सन्तः सन्तं सकलहृदिगं येन विश्वं समस्तं**
**व्याप्तं तं श्रीपतिमघहरं स्तौम्यहं वासुदेवम् ॥४॥**

इत्थं मङ्गलं शास्त्रार्थसंग्रहञ्च विधायेदानीं विस्तरेण शास्त्रार्थं निरूपयिष्यन्सर्ववेदान्तप्रतिपाद्यं सर्वनिषेधावधिभूतं प्रत्यगभिन्नं भगवन्तं वासुदेवमेतद्ग्रन्थप्रतिपाद्यत्वेन प्रदर्शयंश्चिकीर्षितं प्रतिजानीते—य इति। अहं तं वासुदेवं स्तौमीत्यन्वयः। तत्स्वरूपनिरूपणपरं ग्रन्थं करोमीत्यर्थः। चित्तस्य श्रीवासुदेवानुसन्धानरूपभक्तिविच्छेदपरिहाराय तत्प्रेमप्रेरितः संस्तदनुसंधानरूपग्रन्थकरणे प्रवृत्तोऽस्मीत्यभिप्रायः। ननु जगत्स्रष्टृत्वेन प्रसिद्धं चतुर्मुखं विहाय किमिति वासुदेवस्तवने प्रवृत्तिरिति तत्राह—यो ब्रह्माणमिति। ब्रह्मणोऽपि जनकत्वेन स्वतन्त्रतया प्रसिद्धो भगवान्वासुदेव एव सर्वस्रष्टेत्यर्थः। "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै। तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये" (श्वे० ६। १८) इति श्रुतेः। तथापि जगत्स्वामित्वेन प्रसिद्धानिन्द्रादीन्विहाय कथं वासुदेव एव स्तूयते इत्यत आह—जगतां नाथ इति। तथा च भगवतो वासुदेवस्यैव निरुपचरितलोकस्वामित्वं नेन्द्रादीनाम्। यतस्तेषां खण्डमण्डलपतीनामिव परतन्त्रतया परिच्छिन्नैश्वर्यवत्त्वम्। तन्नि-

यन्ता भगवानेवाखण्डैश्वर्य्यनिधिरित्यर्थः, "एको वशी" (कठ० ५। १२) "एष सर्वस्येशानः" (बृ० ५। ६। १) इत्यादिश्रुतेः। "भीष्मास्माद्वातः पवते। भीषोदेति सूर्यः भीष्मास्मादग्निश्चेन्द्रश्च। मृत्युर्धावति पञ्चमः" (तै० २।८) इति श्रुतेश्च। ननु तर्हि राजादिवत्सर्वदण्डानुग्रहकर्त्तृत्वं तस्य स्वप्रयोजनकं स्यात्, तथा च स्वतन्त्रत्वनित्यतृप्तत्वयोः क्षतिरित्याशङ्क्याह—सुहृदिति। प्रत्युपकाराकाङ्क्षां विनैव सर्वोपकर्त्ता, तस्य नित्यतृप्ततया स्वप्रयोजनाकाङ्क्षाविरहात् स्वतन्त्रत्वसिद्धिरित्यर्थः। तथापि स च सर्वनियामकत्वेन राजादिवत्सर्वनियम्यवर्गाद्भिन्न एव स्यात्, तथा च कथं तस्य प्रत्यगभिन्नवस्तुनिष्ठवेदान्तप्रतिपाद्यत्वमित्यत आह—आत्मेति। सर्वभूतानां स एव प्रत्यगात्मेत्यर्थः। ननु सर्वभूतानां स एवात्मेति कुतो विनिश्चितमिति तत्राह—यं वेदान्तैरिति। तर्हि वेदान्तप्रमाणपरिच्छेद्यतया भास्यत्वे नानात्मत्वापत्तिरित्याशङ्क्याह—अविषयमिति। सन्तस्तत्प्रसादलब्धतत्त्वज्ञाना यमविषयं विदुरित्यन्वयः। वेदान्तजन्यवृत्तिव्याप्यतया तस्य फलव्याप्यत्वानङ्गीकारान्न तथात्वमित्यर्थः। "यस्यामतं तस्य मतं मतं यस्य न वेद सः। अविज्ञातं विजानतां विज्ञातमविजानताम्" (के० २। ३) इति श्रुतेः। कथं तर्हि वेदान्तास्तं प्रतिपादयन्तीति तत्राह—सर्वबाधावधित्वादिति। सर्वस्य कार्यकारणरूपस्य प्रपञ्चस्य बाधावधित्वेनेत्यर्थः। सर्वेषां बाधानामवधित्वात्परम्पराविश्रान्तिस्थानत्वादिति वार्थः। तथा चातद्व्यावृत्त्या सर्वदृश्यनिषेधे तदवधिभूततत्त्वं नेति नेतीत्यादिवेदान्तैः प्रतिपाद्यते इति भावः। नन्वेतादृशं तत्त्वं दुर्ज्ञेयं कथं प्रतिभारूढं स्यादिति तत्राह—सकलहृदिगं सन्तमिति। प्रत्यगात्मतयैव प्रतिपत्तव्यं न तु भेदेनेत्यर्थः। नानाभेदप्रतिभासात्कथं भेदप्रतिपत्तिरित्याशङ्क्याह— येन विश्वं समस्तं व्याप्तमिति। सर्वानुस्यूततत्त्वापरिज्ञानविलसितोऽयं भेदप्रतिभासस्तत्त्वज्ञानेन तस्य बाधाद् भेदप्रतिपत्तिः स्यादेवेत्यर्थः। नन्व-

नादिभवसञ्चितानेकदुरितप्रतिबन्धेन कथं तत्स्वरूपं सुवेद्यं स्यादित्यत आह—अघहरमिति। तथा च भगवद्विमुखानां तथात्वेऽपि तं भजतां स एव सकलाघं हरतीत्यर्थः। न केवलमघनाशकत्वेनैव तद्भजनमावश्यकमपि तु विवेकज्ञानाद्यैश्वर्यप्रदत्वेनापीत्याह—श्रीपतिमिति। श्रियाः सकलसुकृतफलभूतापाङ्गनिरीक्षणायाः सकलासाधारणगुणगणालङ्कृताया रमाया अनन्यविभूतेरधिपतित्वादेव स्वभक्तानामनायासेनैव सर्वदैव सम्पत्प्राप्तिहेतुभूतमित्यर्थः। तथा च सकलदुरितक्षयहेतुभूतसकलसुकृततत्फलभूतदैवसम्पत्प्राप्तिफलकश्रीपतिभजनमेवादरेण नित्यं मुमुक्षुभिः कर्तव्यत्वेनाश्रयणीयमिति भावः ॥ ४ ॥

**कः स्तोतुं श्रीपतिमतिगुणं मादृशोऽद्धा क्षमः स्या-**
**द्वाचा वाचस्पतिरपि भयाद्वक्तुमीष्टे न धार्ष्ट्यात्।**
**यं वेदान्ता अपि सुचकिताः प्राहुरेतस्य कीर्तौ**
**भक्त्यावेशाद् व्यवसितमतिस्तीर्थकीर्तिरथाहम् ॥५॥**

स्तौमीत्युक्तेः प्राप्तमौद्धत्यं वारयन्नत्यगाधगुणमाहात्म्यभगवत्स्तुतौ स्वस्यानधिकारञ्च प्रदर्शयन् भगवद्भक्त्यावेशेन तत्र प्रवृत्तिं दर्शयति—क इति। मादृशो जनः कः श्रीपतिमतिगुणमतिशयेन गुणाः सहस्रमुखादिभिरपि प्रत्यहं तद्वर्णनपरैः सर्वज्ञकल्पैरपीयन्त इति परिच्छेत्तुमशक्या यस्य तमद्धा साक्षाद्वाचा परिच्छिन्नेन वागिन्द्रियेण स्तोतुं स्तुतिं कर्तुं क्षमः समर्थः स्यादित्यन्वयः। महतां मनसाप्यनवगाह्यमाहात्म्यं भगवन्तं वाचा स्तोतुं मादृशाऽत्यन्तपरिच्छिन्नकरणः कथमपि समर्थो न भवतीत्यर्थः। भगवतोऽनवगाह्यमाहात्म्यं विशदयति—वाचस्पतिरपीति। वाचामधिष्ठात्री देवता श्रीसरस्वती तस्याः पतिर्नियन्तृत्वेन प्रसिद्धो भगवाँश्चतुर्मुखो यं भगवन्तं व ुं वचनेन प्रति-

पादयितुं धार्ष्ट्यात् स्वप्रागल्भ्यात् नेष्टे समर्थो न भवतीत्यर्थः । अपि तु भयादेव तत्कैङ्कर्य्यमनुसृत्यैव कथञ्चिदेव स्ववाचां सार्थक्याय वक्तुमीष्टे । ननु "सर्वे वेदा यत्पदमामनन्ति" (क० १ । २ । १५) इत्यादिश्रुत्या वेदैस्तत्प्रतिपादनं क्रियत एव तद्द्वारा ब्रह्मादीनामपि तत्प्रतिपादनसामर्थ्यमव्याहतमस्त्येव कथं न तत्र ब्रह्मणः सामर्थ्यमित्याशङ्क्याह—यं वेदान्ता अपीति । वेदानामन्ता अवसानभागास्तच्छिरोभागस्थानापन्नवेदान्ता उपनिषदोऽपि यं वासुदेवमभिधावृत्त्या प्रतिपादयितुं सुचकिता अत्यन्तभीता अतदर्थ्यावृत्त्या कथञ्चिल्लक्षणया प्राहुः प्रतिपादयन्ति, पर्यवस्यन्तीत्यर्थः । तद्द्वारा ज्ञानवतां ब्रह्मादीनां साक्षात्तत्प्रतिपादने कथं सामर्थ्यं स्यादिति भावः । ननु तर्हि स्तौमीति कथं प्रतिज्ञातमित्यत आह—अथेति । यद्यपि ब्रह्माद्यनवगाह्यमाहात्म्यस्य भगवतः स्तुतौ मादृशो वराकोऽत्यन्तानधिकारी तथाप्यहं भक्त्यावेशाद् भक्तिर्भजनं भगवति तत्परत्वं तदावेशान्निमित्तादेव न तु लाभपूजाख्यात्यादिनिमित्तादित्यर्थः । एतस्य स्वत एवापरोक्षभूतस्य प्रत्यगभिन्नस्य श्रीविष्णोः कीर्तौ तत्स्वरूपनिरूपणलक्षणायां स्तुतौ व्यवसितमतिः व्यवसिता व्यवसायं निश्चयं प्राप्ता मतिर्यस्य सः । नन्वेतत्कीर्त्याऽन्येषामधिकारिणां किं फलमिति तत्राह—तीर्थकीर्तेरिति । तीर्थरूपा श्रोतृवक्त्रादिपावनकर्त्री कीर्तिर्यस्य तस्य । तथा च परमपुरुषार्थसाधनसम्पत्सिद्धये भगवत्कीर्तिरेवादर्तव्येति भावः ॥ ५ ॥

**शुद्धं वस्त्वद्वयमविदितं बोद्धुमिष्टं स्वधाम**
**स्वान्तस्थं तद्विमलममृतं प्रत्यगानन्दरूपम् ।**
**बुद्ध्यारूढं फलति सकलाज्ञानबाधादखण्डं**
**श्रीकृष्णाख्यं जयति सततं कीर्तिरेवास्ति विष्णोः ॥६॥**

सा कीर्तिः किंस्वरूपा स्यादित्याकाङ्क्षायां कीर्तिस्वरूपकथनव्याजेन सकलवेदान्तशास्त्रप्रमेयभूतं तत्त्वंपदार्थत्वं वाक्यार्थ-

भूततदैक्यत्वञ्च सफलं संक्षेपेण निरूपयति—शुद्धमिति। विष्णो-र्व्यापनशीलस्य प्रत्यगभिन्नस्य श्रीकृष्णस्यैवैषा कीर्तिरस्तीत्यन्वयः। एषा केत्यपेक्षायामाह—शुद्धमिति। शुद्धं मायातत्कार्यसम्पर्कशून्यं वस्त्वनारोपितं तत्त्वमद्वयं द्वितीयवर्जितं तत्पदलक्ष्यं ब्रह्म अविदितं शास्त्रस्य विषयत्वेन प्रतिपाद्यमत एव शास्त्रप्रमाणजनिताखण्डाकारवृत्त्या बोद्धुं स्वात्मत्वेन ज्ञातुमिष्टं प्रेप्सागोचरो भवतीत्यर्थः। एवं तत्पदलक्ष्यं प्रतिपाद्य त्वंपदलक्ष्यं निरूपयति—स्वान्तस्थमिति। स्वान्तमन्तःकरणं तत्र तत्साक्षितया तिष्ठतीति स्वान्तस्थमन्तःकरणोपहितं तद्ब्रह्मैव त्वंपदलक्ष्यम्। नन्वन्तःकरणसम्बन्धात् तस्य तद्धर्मभाक्त्वं स्यादित्यत आह—विमलमिति। अन्तःकरणस्योपाधित्वेन तटस्थतया वस्तुकोटावप्रवेशात्तद्धर्ममलसम्पर्करहितं तत्साक्षितया न तद्धर्मभाग्भवतीत्यर्थः। ननु साक्षिणि प्रमाणमस्ति न वा। अस्ति चेत् तर्हि तस्य परिच्छेद्यतया दृश्यस्यानात्मत्वं स्यात्, नास्ति चेत् तर्हि खपुष्पादिवदलीकत्वापत्तिरित्याशङ्क्याह—स्वधामेति। स्वप्रकाशमित्यर्थः। तथा च सकलप्रमाणादिवस्तुभासकस्य साक्षिणः प्रमाणाभावेनालीकत्वापादनं कथं युक्तिपथमवतरेदिति भावः। ननु तथापि कदाचित्तस्य नाशः स्यादित्यत आह—अमृतमिति। अविनाशिस्वभावमित्यर्थः। निःसाक्षिकस्य नाशस्यानुपपत्तेर्न साक्षिणोऽमृतस्य नाशशङ्कावकाश इति भावः। एवं त्वंपदलक्ष्यं निरूप्याखण्डवाक्यार्थं निरूपयति—प्रत्यगानन्दरूपमिति। वेदान्तजन्यवृत्त्यारूढं सत् प्रतिकूलमज्ञानतत्कार्य्यं त्यजतीति प्रत्यक् त्वंपदलक्ष्यमानन्दरूपं तत्पदलक्ष्यं प्रत्यक् च तदानन्दरूपञ्च प्रत्यगानन्दरूपं प्रत्यगभिन्नाद्वयानन्दं ब्रह्मेत्यर्थः। ननु कथं प्रत्यगेवानन्दरूपं स्यात्तदुपाधेरज्ञानतत्कार्यस्य सत्त्वादित्याशङ्क्याह—सकलाज्ञानबाधादिति। कलाभिः स्वकार्यवर्गैः सह वर्त्तते इति सकलं सकलञ्च तदज्ञानं सकलाज्ञानं तस्य बाधो निरसनं

तस्मादित्यर्थः। कथं तन्निरसनमित्यत आह—बुद्ध्यारूढमिति। वेदान्तवाक्यविचारजन्यबुद्धिवृत्त्यारूढं सच्चैतन्य यदा फलति तदा सकलाज्ञानबाधः स्वतः सिद्ध एव भवतीत्यर्थः। एवं शास्त्रार्थं निरूप्य तत्फलभूतं दृश्यानर्थोच्छेदोपलक्षितं निरतिशयानन्दाविर्भावं मोक्षं दर्शयति—अखण्डं श्रीकृष्णाख्यमिति। श्रीकृष्णाख्यमखण्डं वस्तु सततं जयति सर्वोपरि वरीवर्ति—नित्यमुक्तस्वभावं सच्चिदानन्दघनं त्रिविधपरिच्छेदशून्यं निजभक्तान्तःकरणे प्रतिफलितं सत्सततं प्रकाशते इत्यर्थः। तथा च सकलवेदान्तप्रमेयभूतं श्रीकृष्णाख्यं ब्रह्मैव तत्त्वमस्यादिवाक्यजन्यान्तःकरणवृत्तौ समारूढं सकलमज्ञानं तत्कार्यञ्च विनिवर्त्य निरतिशयानन्दपदे स्वभक्तमभिषेचयतीति भावः॥ ६॥

**ध्यायं ध्यायं नवघनरुचिं सर्वसौन्दर्यसारं**
**स्मारं स्मारं व्रजपतिगृहे चेष्टितं तन्मुरारेः।**
**पायं पायं हरिगुणसुधां सत्पयोधेः समुत्थां**
**भूयो भूयो यदुपतिपदे धावतीयं मतिर्मे॥७॥**

भक्त्यावेशादित्युक्तं पूर्वं तद्विवृणोति—ध्यायं ध्यायमिति। नवघनरुचिं मुरारेर्मुरनामासुरस्य हन्ता श्रीकृष्णो मुरारिरिति सर्वपुराणेतिहासादौ प्रसिद्धम्। स च जगत्पालनाय कृतावतारो भगवान् वासुदेवस्तस्य नूतनजलधररुचिवद्रुचिं कान्तिं सर्वसौन्दर्यसारश्चन्द्रकन्दर्पपद्मादयो यत्सौन्दर्यलवाभासेन कान्तिमन्तो लोके उपमानं गतास्तादृशीं सर्वसौन्दर्यसारसर्वस्वभूतां कान्तिं ध्यायं ध्यायं पुनःपुनरतिशयेन ध्यात्वा, "आभीक्ष्ण्ये णमुल्" (पा० सू० ३।४।२२) "नित्यवीप्सयोः" (पा० सू० ८।१।४) इति द्विर्वचनम्। तस्यैव भगवतो मुकुन्दस्य व्रजपतिगृहे सकलश्रुतिसारग्राहिसुरमुनि-

सुजनप्रादुर्भावभूमेर्व्रजस्य पतिः पालकतया प्रसिद्धो हरिर्मकुटचूडा-मणिः श्रीनन्दाख्यो गोपाधिपतिस्तस्य गृहे निवासभूमौ गोकुले वृन्दावने च यच्चेष्टितं सकलविश्वाधीशब्रह्मादिजनकत्वेऽपि शिशुत्व-नाटनम्, सर्वभूतसमत्वेऽपि विश्वपालनार्थं धर्मप्रतिपन्थिपूतनाद्यनेका-सुरसंहरणम्, निजानन्दतृप्तत्वेऽपि पयोदधिनवनीताद्यभ्यवहरणम्, शिवसनकादिसमाधिभाव्यत्वेऽपि वयस्यैर्विहरणम्, असाम्यानधि-कैश्वर्य्याधिपतित्वेऽपि वत्सगवाद्यनुसरणम्, सर्वसौहार्दनिधित्वेऽपि ब्रह्मेन्द्रादिदर्पहरणम्, निरतिशयानन्दस्वभावत्वेनात्मारामाराध्यत्वेऽपि गोपवधूभिः सार्कं रासक्रीडादिभिर्विहरणमित्यादिरूपं तच्चेष्टितं स्मारं स्मारं पुनः पुनरतिशयेन स्मृत्वा, हरिगुणसुधां भक्ताना-मविद्यादि हरतीति हरिः गजेन्द्रनरेन्द्रद्रुपदजादिशरणागतार्तिहरण-शीलत्वेन प्रसिद्धस्तस्य गुणाः कारुण्यशरण्यकृतज्ञत्वादयोऽनन्त-रसार्णवास्त एव सुधाश्रवणस्मरणकीर्तनादिना जननमरणादि-भयध्वंसपुरःसरपरमपुरुषार्थमोक्षामृतदानेन परमामृतस्वरूपास्ता-दृशीं हरिगुणसुधां सत्पयोधेः समुत्थां सन्तो ब्रह्मात्मसाक्षात्कारवन्तः सारग्राहिणो व्यासवाल्मीकिप्रभृतयः सद्वस्तुपर्यवसायिनो वेदाश्च त एव क्षीराब्धिरूपास्ततो विचारमथननिष्पन्नां पुनः पुनरतिशयेन पीत्वा श्रवणादिभिस्तत्स्वादुतामनुभूयेत्यर्थः भूयो भूयः पुनः पुनरियं मम मतिर्मदीया निश्चयात्मिका चेतोवृत्तिरिदमेव तत्त्वं नातः परं किमपि तत्त्वमिति सम्यङ्निश्चित्यैव यदुपतिपदे यदुवंशस्य देवसमूहावतारभूतस्य कंसपरितापितस्य पतिः कंसादिदुष्टनिबर्हणेन पालकस्तस्य श्रीकृष्णस्य पदे पदारविन्दे धावति गङ्गाप्रवाहसरणिरिव सिन्धावप्रतिबन्धेन तत्रैव पर्यवसानभूमौ पर्य्यवसन्ना सती निमग्ना भवतीत्यर्थः ॥ ७ ॥

**सारात्सारं निगमजलधेरुद्धृतं शास्त्रमेत-**
**द्वेदान्ताख्यं सुभगमुनिना न्यायतः सन्निबद्धम् ।**

**तत्साराशं यतिवरगिरा लब्धमादाय कुर्वे**
**प्रत्यक्चिन्तामणिमतिमुदा श्रीपतिप्रीतिकामः॥ ८॥**

इदानीं निर्मूलत्वशङ्कानिवारणायास्य ग्रन्थस्य सम्प्रदायमूलकत्व-कीर्तनपुरःसरं नामतो निर्दिशन् स्वचिकीर्षितं प्रतिजानीते—सारादिति । निगमो वेदः स एव दुरवगाहादिगुणविशिष्टतया जलधिः समुद्रस्तस्मात्सारप्रतिपादकतया साररूपादपि साक्षात्सारभूतब्रह्माद्वैत-परमेतच्छास्त्रं वेदान्ताख्यं सुभगमुनिना शोभनैश्वर्यविशिष्टेन सकल-वेदार्थावगन्त्रा भगवता व्यासेनोद्धृतं वेदसमुदायान्निष्कृष्योपनिषद्भागः पृथक्कृतः सम्यगध्यायादिरूपेण स्थापितस्तमपि संगृह्य न्यायतः "अथातो ब्रह्मजिज्ञासा" ( ब्र० सू० १ । १ । १ ) इत्यादिन्यायरूपेण सम्यङ्निबद्धं शारीरकमीमांसाख्यं शास्त्रं सूत्ररूपं कृतमित्यर्थः । तत्साराशं तस्य शास्त्रस्यापि साराशं यतिवरगिरा यतीनां परमहंसानां मध्ये वरः साक्षाद् भगवतः पशुपतेरवतारतया वेदान्ताब्जभास्करो विनष्टप्रायब्रह्मविद्यासम्प्रदायाविर्भावहेतुर्भगवान् भाष्यकारः शङ्करा-चार्यनामा तस्य गीः श्रुतिस्मृतिसूत्रभाष्यरूपा तया तत्प्रसादात्तदध्य-यनादिना लब्धं स्वबुद्ध्यारूढमादाय तदेव मूलतया गृहीत्वा प्रत्यक्-चिन्तामणिं प्रत्यक्तत्त्वं ब्रह्मैक्यं वेदान्तप्रमेयं यत्तद्विषयिणी चिन्ता चिन्तनमनुसन्धानं प्रत्यक्तत्त्वञ्च तद्विषयिणी चिन्ता चिन्तनप्रकारश्च तयोर्मणिरिव मणिः सर्वार्थभासकतया स्वरूपप्रकाशकस्तदवबोध-जनक एतन्नामको ग्रन्थस्तं कुर्वे इति सम्बन्धः । एतेन स्वकपोलकल्पित-त्वमेतद्ग्रन्थस्य नास्तीति दर्शितम् । करिष्यमाणग्रन्थे स्वस्योत्साहं दर्शयति—अतिमुदेति । ग्रन्थकरणप्रवृत्तौ प्रवर्तकमाह—श्रीपति-प्रीतिकाम इति । लक्ष्मीकान्तस्य श्रीकृष्णस्य प्रीतिरेव कामो यस्य सः । यद्वा, श्रीपतौ या प्रीतिरनुरागप्रेमभक्तिरित्यादिशब्दवाच्या तद्विषयः कामोऽभिलाषो यस्य सः । एतेन श्रीकृष्णेऽव्यभिचारिणी

रतिरेव परमपुरुषार्थाद् मोक्षादप्यभ्यर्हितत्वादादरणीयेति दर्शितमिति भावः ॥ ८ ॥

**यद्वीक्ष्यासौ जनिमृतिभयागारसंसारभारं**
**त्यक्त्वा ब्रह्माद्वयसुखनिधौ क्रीडतीशानभक्त्या ।**
**प्रत्यक्तत्त्वं श्रुतिभिरुदितं यद्विचारान्मुमुक्षु-**
**र्जानात्येतत्स्वयमत इमं ग्रन्थमीक्षेत भक्त्या ॥९॥**

श्रोतृरुच्युत्पादनाय करिष्यमाणग्रन्थं महीकरोति—यद्वीक्ष्येति । असौ मुमुक्षुरीशानस्य भगवतः श्रीकृष्णस्य भक्त्या नवधा-रूपयाऽधिकारी भूत्वा, यत्प्रत्यक्तत्त्वं श्रुतिभिः वेदान्तैरुदितं प्रति-पादितं तं वीक्ष्य साक्षात्कृत्य, जनिमृतिभयागारभूतं संसा-रभारं दुःसहभारवद्वोढुमशक्यं त्यक्त्वा ज्ञानेनाज्ञाननाशादप-बाध्य, ब्रह्माद्वयसुखनिधौ क्रीडति । तदेतत् प्रत्यक्तत्त्वं यद्विचाराद्यस्य प्रत्यक्तत्त्वचिन्तामणिग्रन्थस्य पौर्वापर्यालोचनया स्वयमनायासेन जानाति साक्षात्करोति । अतो भक्त्या आदरेण इमं चिन्तामणिनामकं ग्रन्थमीक्षेत पौर्वापर्यालोचनया विचारयेदित्यर्थः ॥ ९ ॥

**त्यक्त्वा चिन्तां भवभयफलां भोगनिष्ठां कनिष्ठां**
**दोषाविष्टां सुमतिहरिणीमत्यनिष्टां बहिःस्थाम् ।**
**प्रत्यङ्निष्ठां भवमृतिहरां सद्भिरिष्टां वरिष्ठां**
**शास्त्रोद्दिष्टां भज सुखफलां भक्तिमृष्टां बलिष्ठाम् ॥१०॥**

एवं चिकीर्षितं प्रतिज्ञाय तत्फलञ्च प्रदर्श्य मुमुक्षूणां हितमुपदि-शति—त्यक्त्वेति । हे मुमुक्षो ! भोगनिष्ठां चिन्तां त्यक्त्वा प्रत्यङ्निष्ठां चिन्तां भजेति सम्बन्धः । भोगनिष्ठायाश्चिन्तायास्त्याज्यत्वे हेतुगर्भ-

विशेषणानि षट् । प्रथमेन विशेषणेन तस्या भोगनिष्ठायाश्चिन्तायाः संसारानर्थहेतुत्वम्, द्वितीयेनात्यन्तकुत्सितविषयत्वान्निकृष्टत्वम्, तृतीयेन सकलपापहेतुभूतकामादिदोषविशिष्टत्वम्, चतुर्थेन शास्त्राचार्योपदेशजनितप्रज्ञाविनाशकत्वम्, पञ्चमेनासुरीत्वादनिष्टक्रूरयोनिहेतुत्वम्, षष्ठेन विवेकिजनधिक्कृतत्वेन हेयत्वं दर्शितमिति विवेकः । प्रत्यङ्निष्ठायाश्चिन्ताया अवश्यकर्त्तव्यत्वे हेतुगर्भविशेषणानि सप्तोपादेयत्वात् । प्रथमेन सर्वानर्थनिवृत्तिहेतुत्वम्, द्वितीयेन सज्जनैरिष्टत्वेन स्वीकृतत्वम्, तृतीयेन श्रेष्ठविषयत्वाद्वरिष्ठत्वम्, चतुर्थेन प्रामाणिकत्वम्, पञ्चमेन निरतिशयसुखाविर्भावहेतुत्वम्, षष्ठेन प्रबलसाधनजन्यत्वम्, सप्तमेनाबाधितवस्तुविषयत्वादबाधितत्वं स्वप्रतिपक्षिनाशने प्रबलत्वञ्च दर्शितमिति विवेकः । अक्षरार्थस्तु निगदव्याख्यातः ॥ १० ॥

**त्रेधा निष्ठा श्रुतिभिरुदिता कर्म्म भक्तिश्च बोधः**
**कर्म्मापीशार्चनमधिफलं चित्तशुद्ध्येकहेतुः ।**
**भक्तिस्तज्जा हरिपदरतिः प्रेमदार्ढ्याद्विरागः**
**तत्त्वज्ञानं जनयति दृढं मुक्तिरेतेन जन्तोः ॥ ११ ॥**

एवं शास्त्रस्योपोद्धातं* सपरिकरमुपवर्ण्येदानीं शास्त्रमारभते—त्रेधेति । एकैवनिष्ठा वेदतात्पर्यविषयीभूता तत्राधिकारिभेदेन साध्यसाधनभेदं परिकल्प्य त्रेधेत्युक्तिः । एकस्यैव वस्तुनो ज्ञेयध्येयसमर्च्यरूपेण वेदतात्पर्यविषयत्वात् । न वस्तुतो निष्ठात्रयमिति द्रष्टव्यम् । तत्रादौ कर्म्मनिष्ठास्वरूपं तत्फलञ्च संक्षिप्य दर्शयति—ईशार्चनमिति । भगवदाराधनलक्षणं नित्यनैमित्तिकाद्यनुष्ठानं कर्म्मस्वरूपमित्यर्थः । अधिफलमधिकं मोक्षफलात्परम्परया ज्ञानमेव फलं यस्य तत् । साक्षा-

*—चिन्तां प्रकृतसिद्ध्यर्थामुपोद्धातं प्रचक्षते ।

त्फलमाह—चित्तशुद्ध्यैकहेतुरिति । भक्तिनिष्ठामाह—भक्तिरिति । तज्जा तस्याश्चित्तशुद्धेः सकाशाज्जायत इति तज्जा । भक्तिं प्रति तस्या हेतुत्वमित्यर्थः ।

"तावत्कर्माणि कुर्वीत न निर्विद्येत यावता ।

मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते" ॥ (भा० ११ । २० । ९)

इत्यत्र वैराग्यादिप्रवृत्तिहेतुत्वमिव भक्तिं प्रत्यपि चित्तशुद्धेर्हेतुत्वमुक्तम् । भक्तेः स्वरूपमाह—हरिपदरतिरिति । भगवत्पदारविन्दे तत्परत्वं भक्तेः स्वरूपमित्यर्थः । तत्फलमाह—प्रेमेति । प्रेमदार्ढ्यं प्रेमप्रकर्ष एव भक्तेर्मुख्यं फलं तस्या अवान्तरफलमाह—विराग इति । यथा यथा हरिपदप्रेमप्रकर्षस्तथा तथा तदन्यविषयेभ्यो विरागस्तथातथा तत्त्वज्ञानदार्ढ्यम् । एतेन तद्दार्ढ्येन जन्तोरधिकारिणो जीवत एव संसारबन्धान्मुक्तिरित्यर्थः ॥ ११ ॥

**शुद्धस्वान्ताः प्रशमकरणा वीतरागा विमाना**
**वेदान्तोक्तौ भगवति गुरौ श्रद्दधाना अहिंस्राः ।**
**स्वच्छाचारा निपुणमतयो नित्यमोक्षैकपक्षा ये**
**ते वीक्ष्येमं परमममृतं प्राप्नुवन्त्यात्मबोधात् ॥ १२ ।**

एवं निष्ठात्रयं सफलं संक्षेपेण निरूप्येदानीम् "अथातो ब्रह्मजिज्ञासा (ब्र० सू० १ । १ । १) इति सूत्रस्याथशब्दार्थानन्तर्यापेक्षितसाधनचतुष्टयरूपाण्यधिकारिविशेषणानि दर्शयंस्तेषामधिकारिणामेतद्ग्रन्थविचारो ब्रह्मैक्यसाक्षात्कारपर्यवसायो नेतरेषामिति दर्शयति—शुद्धस्वान्ता इति । शुद्धमीश्वराराधनलक्षणेन धर्मेण निर्दोषं स्वान्तमन्तःकरणं येषान्ते तथोक्ताः । अनेन कर्मणां चित्तशुद्धिद्वारा ज्ञानोपयोगो दर्शितः, "कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्त्तते" इति स्मृतेः । अत एव प्रशान्तानि शमदमाभ्यां निग्रहेणोपरतानि बाह्यान्यभ्य-

न्तराणि च करणानि येषान्ते । अनेन शमादिसम्पदुपलक्षिता । रागः ऐहिकामुष्मिकभोगस्तदुपायेच्छा स विगतो येभ्यस्ते । अनेनेहामुत्रार्थफलभोगविराग उक्तः । विगतो मानः स्वस्मिन्पूज्यत्वादिबुद्धिर्येभ्यस्ते । अदम्भित्वादेरप्युपलक्षणमेतत् । वेदान्तोक्तौ तत्त्वमस्यादिवाक्येषु भगवति श्रीकृष्णे गुरावात्मतत्त्वोपदेष्टरि च श्रद्दधानाः श्रद्धा आस्तिक्यं तद्वन्त इत्यर्थः । अहिंस्राः सर्वभूतानुकम्पया मनोवाक्कायैः परद्रोहशून्याः । अनेनोपरतिशब्दितः संन्यास उक्तः । स्वच्छोऽत्यन्त निर्मलः यथाशास्त्रमाचारो येषान्ते । अनेन स्वधर्मनिष्ठत्वं दर्शितम् । नित्यानित्यवस्तुविवेचनचतुरा मतिर्येषान्ते । अनेन नित्यानित्यवस्तुविवेकसम्पदुक्ता । नित्यो यो मोक्षपदार्थस्तन्मात्राभिलाषिणो नित्यमोक्षेप्सवः । अनेन मुमुक्षुत्वमुक्तम् । उक्तलक्षणसम्पन्ना ये मुमुक्षवः "प्रदीप्तशिरा इव जलराशिं विविक्षुः" इति पञ्चपादिकोक्तलक्षणोत्कटसच्चिदानन्दाद्वयस्वात्मलाभरूपमोक्षेच्छाशालिनः पुरुषधौरेयास्ते इमं परमपुरुषार्थोपायं प्रत्यक्तत्त्वचिन्तामणिनामकं ग्रन्थं वीक्ष्य पौर्वापर्येणावलोक्य तद्विचारजनितप्रत्यगात्मबोधात्तत्त्वसाक्षात्काररूपात्परमं निरतिशयममृतं कैवल्याख्यं पदं प्राप्नुवन्ति तद्रूपा एव भवन्तीत्यर्थः । अनेन "अथातो ब्रह्मजिज्ञासा" ( ब्र० सू० १।१।१ ) इति शास्त्राद्यसूत्रस्थाथशब्दानन्तर्य्येण योग्यत्वात्साधनचतुष्टयसम्पत्तिरेवावधित्वेनापेक्ष्यते । न वेदाध्ययनमात्रं धर्म्मजिज्ञासायामिवेति सूचनेन धर्म्मब्रह्मजिज्ञासयोर्भिन्नाधिकारित्वमपि दर्शितं बोध्यम् ।। १२ ।।

**ब्रह्मैवाग्रे परमममृतं केवलं तत्त्वमासी-**
**न्मायाशक्त्याश्रितमकलनं सृष्टिकाले समस्तम् ।**
**तस्माज्जातं विषमरचनं भूतमात्रादिहेतु**
**स्वस्वाविद्यादिभिरविरलं भोक्तृभोग्यादि विश्वम् ।१३।**

इदानीं संसारबन्धनस्य तत्त्वज्ञाननिवर्त्यत्वसिद्धये ब्रह्माज्ञानान्मायादिशब्दवाच्यादेव संसारोत्पत्तिरिति दर्शयति—ब्रह्मेति। अग्रे सृष्टेः पूर्वं ब्रह्मैवासीदिति सम्बन्धः। कार्यब्रह्मादिशङ्काव्यावृत्त्यर्थमाह—परममिति। तस्य द्वितीयसंसर्गशङ्कावारणायाह—केवलमिति। अध्यस्तत्वशङ्काव्यावृत्त्यर्थमाह—तत्त्वमिति। अनारोपितस्वरूपमित्यर्थः। मुक्तैरधिगम्यत्वदर्शनायाह—अमृतमिति। एवं शुद्धं वस्तुतत्त्वं निरूप्य तस्याध्यस्तविश्वाधिष्ठानत्वयोग्यतानिरूपणपुरःसरम् 'अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते' इति न्यायेन ततो विश्वोत्पत्तिप्रकारं दर्शयति—मायेति। अघटितघटनापटीयसी अनाद्यनिर्वाच्याऽज्ञानाविद्यादिशब्दवाच्या माया शक्तिवत्परतन्त्रतया शक्तिस्तयाश्रितं शबलितं वस्तुतोऽकलनं सकलकल्पनाशून्यमपि सृष्टिकाले तस्मादभिन्ननिमित्तोपादानान्मायाशबलाद्ब्रह्मणः सकाशाद्भोक्तारोऽन्तःकरणोपाधिका जीवा भोग्यं शब्दादिविषयजातम्। आदिपदेन भोगालयभोगभूम्यादयो गृह्यन्ते। भूतमात्राः शब्दादितन्मात्रपदवाच्यानि अपञ्चीकृतव्योमादीनि पञ्चसूक्ष्मभूतानि, आदिपदात्तान्येव स्थूलानि पञ्चीकृतानि, तेषां सर्वत्र तुल्यत्वेऽपि स्वस्वाविद्याकामकर्मादिभिर्विषमा विचित्रा रचना यस्य विश्वस्य तदविरलं जीवैस्तत्कर्मादिभिश्च निविडं समस्तं निःशेषं जातमुत्पन्नमित्यर्थः। एतदुक्तं भवति वस्तुतो ब्रह्मैकमेवाद्वितीयमसंगोदासीनमकर्त्रादिरूपं दुर्घटघटनापटीयसीं मायामादाय "मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्" (श्वे० ४।१०) इत्यादिश्रुतिसिद्धाध्यस्तविश्वाधिष्ठानत्वेन कारणतां भजते। यदि कारणसमसत्ताकं कार्यमभ्युपगतं स्यात्तदाऽसंगोदासीनं केवलं नित्यकूटस्थं ब्रह्मकथमभिन्ननिमित्तोपादानरूपं कारणं स्यात्? मिथ्याभूतन्तु कार्य्यमविकृतरज्ज्वादौ सर्पादिवदज्ञानादविकृतेऽपि वस्तुन्यध्यस्यमानं वस्तुतो नाधिष्ठानं स्पृशति, अद्वितीयवस्तुन एव श्रूयमाणजगत्कारणत्वनिर्वाहाय कल्प्यमाना माया धर्मिग्राहकमानादुपजीव्यानुसाराच्च मिथ्या-

भूतैव सिद्ध्यतीति न तत्कृतेन जगत्कारणत्वेन ब्रह्मणो विकारित्वम् । तथा च भाष्यम्—यत्र हि यदध्यासस्तद्गतेन गुणेन दोषेण वा अणुमात्रेणापि न स सम्बध्यत इति ॥ १३ ॥

**स्वात्मानन्दादमितपदतो ब्रह्मणो निर्विकारा-**
**दात्माविद्यावृतमतितया प्रच्युताः स्वप्नदृग्वत् ।**
**जीवाः कर्माद्यमितनिगडा देहमात्राभिमाना**
**मायाबद्धा जनिमृतिसृतौ विभ्रमन्त्याकुलाङ्गाः ॥१४॥**

इदानीं जीवानां ब्रह्मपदात्प्रच्युतिरेव सर्वानर्थहेतुरिति वदन् वैराग्यादिसिद्धये स्वात्माज्ञानहेतुकं संसृतिसिन्धुपातं सप्रकारं वर्णयति—स्वात्मानन्दादिति द्वाभ्याम् । स्वस्वरूपानन्दादपरिच्छिन्न पदात्कूटस्थाद्ब्रह्मणः स्वात्माज्ञानेनाच्छादितविवेकदृष्टितया स्वप्नदृष्टिवद् जीवाः प्रच्युताः सन्तो जनिमृतिसृतौ संसरणमार्गे संसारसिन्धुचक्रे विभ्रमन्तीत्यन्वयः । अत्यन्तपारवश्यं दर्शयति—मायाबद्धा इति । अत एव देहमात्राभिमानाः परिच्छिन्नदेहादावयमहमस्मीत्यहङ्कारिण इत्यर्थः । बन्धनसामग्रीं दर्शयति—कर्माद्यमितेति । कर्माणि सञ्चितादीनि, आदिपदात्कामद्वेषाभिनिवेशादिग्रहणम्, तैरमितास्तत्त्वज्ञानं विना कालापरिच्छेद्या निगडा बन्धका नानादेहभाविनो येषान्ते । यद्वा, कर्मादीन्येवामितानि बन्धनानि येषान्ते । ननु शास्त्रादीनां तत्त्वज्ञानसाधनानामपि संसारे सत्त्वात्तान्यादाय कथं ते बन्धमोक्षणोपायमनुतिष्ठन्तीत्याशङ्क्याह—आकुलाङ्गा इति । आकुलानि तत्तन्मनोरथादिभिरङ्गानि बुद्धिमनःप्राणेन्द्रियादीनि येषान्ते तथा । शास्त्रार्थब्रह्मैक्यविचारे क्षणमप्यवकाशं न लभन्त इत्यर्थः ॥ १४ ॥

**संसाराब्धौ प्रचुरभयदे कामकर्माद्यगाधे**
**भ्रान्त्यावर्ते जडरतिजले जन्ममृत्युप्रवाहे ।**

**तृष्णाग्राहे नरकगहने द्वेषरागादिनक्रे**
**मिथ्याध्यासादिह निपतिता नैव शान्तिं लभन्ते॥१५॥**

संसारं सिन्धुरूपकेण वर्णयंस्तत्र निरूपितानां विश्रान्त्यभावमाह—संसाराब्धाविति। प्रलयसिन्धुवत्प्रचुरभयदेऽत्यन्तदुःसहयातनादिभयदायके, कामकर्मादिभिरत्यन्तागाधे, भ्रान्तिर्मिथ्याज्ञानमधऊर्ध्वभ्रमणहेतुतया आवर्तो यस्मिन्। जडेषु देहादिष्वहङ्कारास्पदेषु पुत्रकलत्रवित्तगृहादिषु ममत्वास्पदेषु रतिः स्नेहादिरूपैव जलं यस्मिन्। जन्ममृत्युपरम्परैव प्रवाहो यस्मिन्। तृष्णैव लोभादिशब्दवाच्या ग्राहोऽधआकर्षकत्वसाम्याद्यस्मिन्। नरक एव गहनं संकटप्रदस्थानं यस्मिन्। द्वेषः परानिष्टचिन्तनं, रागः विषयेष्वासक्तिः, आदिपदेनेर्ष्यादयो गृह्यन्ते, त एव नक्राः संसृतिसिन्धौ निमज्जनहेतवो यस्मिन्। इत्थंभूते संसाराब्धौ अनिर्वाच्यदेहाद्यात्मत्वाध्यासान्निपतिताः निमज्जनोन्मज्जनादिभिर्भ्रमन्तो नैव विश्रान्तिसुखं क्षणमपि लभन्त इत्यर्थः ॥ १५ ॥

**कश्चित्पुण्यप्रकृतिरनघोऽधीत्य वेदं यथावद्**
**बुध्वास्यार्थं तदुदितमसौ धर्मीशार्चनाख्यम्।**
**कुर्वन्कृष्णे प्रवणधिषणो भक्तियोगेन नित्यं**
**प्रेम्णाविष्टो जयति सुमतिर्वैभवं प्राप्य बौद्धम् ॥१६॥**

संसाराब्धिपातहेतुरात्माज्ञानमित्युक्तं तत्राज्ञानं तत्कार्यभूतं कर्मादि च जडत्वात्परतन्त्रं तदाश्रया जीवा अप्यज्ञतया ततोऽपि परतन्त्रतरास्तन्नियामकः सर्वज्ञः सर्वशक्तिः परमेश्वरः। एष ह्येव साधु कर्म कारयति। तं यमेभ्यो लोकेभ्य उन्निनीषते, एष एवासाधु कर्म कारयति। तं यमेभ्यो लोकेभ्योऽधो निनीषते।

"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन! तिष्ठति।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥"
(गी० १८ । ६१)

"मत्त स्मृतिर्ज्ञानमपोहनञ्च" । (गी० १५ । १५)

"दैवी ह्येषा गुणमयी मम माया दुरत्यया।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥"

(गी० ७ । १४) "पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्य्ययौ" (ब्र० सू० ३ । २ । ५) "फलमत उपपत्तेः" (ब्र० सू० ३ । २ । ३८) इत्यादिश्रुतिस्मृतिन्यायकदम्बैर्भगवद्वैमुख्यमेव सर्वानर्थरूपाज्ञानतत्कार्य्यकर्मादिबन्धहेतुः, तदाभिमुख्यमेव सर्वानर्थनिवृत्त्युपलक्षितस्वस्वरूपानन्दाविर्भावमोक्षहेतुः, तदाभिमुख्यन्तु महापुण्यैर्विना दुर्लभम् । मनुष्याणां सहस्रेष्वपि कश्चिदेव पुरुषधौरेयो भगवद्भक्तिरसिको जायते। तथा च परमपुरुषार्थसिद्धये भगवान् कृष्ण एव परमप्रेमास्पदत्वेनाश्रयणीय इत्यभिप्रेत्याह—कश्चिदिति। मनुष्याणां सहस्रेष्वपि दुर्लभः पुण्यैकस्वभावोऽत एवानघः पापाचरणरहितो वेदं स्वाध्यायशब्दवाच्यं स्वशाखाध्ययनरूपं वेदाध्ययनं कृत्वा यथावद् ब्रह्मचर्यादिव्रतपुरःसरं गुरुप्रसादादस्य वेदस्यार्थं धर्मब्रह्मरूपं बुद्ध्वा—आपाततोऽनुष्ठेयत्वेन रूपेण ज्ञात्वा—असावधिकारी तदुदितं वेदोक्तं स्ववर्णाश्रमादिप्रयुक्तधर्मं निष्कामकर्मरूपमीश्वराराधनलक्षणं कुर्वन्नाचरन्निष्कामधर्म्मस्वाभाव्यादेव कृष्णे भगवद्वासुदेवे भक्तियोगेन प्रवणा प्रवाहीकृता धिषणा बुद्धिवृत्तिर्यस्य स तत्फलभूतभगवत्प्रेम्णाविष्टो ग्रहाविष्टवद्विस्मृतदेहाभिमानस्ततोऽवर्जनीयतया सुमतिः शोभना भगवत्प्रसादलब्धा मतिर्ब्रह्मात्मैक्याकारा बुद्धिवृत्तिर्यस्य। स च बैाद्धं वैभवं प्राप्य तत्त्वज्ञानात्मकमैश्वर्यं स्वसाम्राज्याभिषेकरूपं लब्ध्वा जयति सर्वोपरि वरीवर्ति। यद्वा, जयति संसारमिति शेषः। तथा च भगवद्भक्तानां वैराग्यादिपुरःसरतत्त्वज्ञानलाभोऽनायासेनैव सिद्ध्यतीत्यतो

भगवद्भक्तिरेव सर्वपुरुषार्थकामधेनुरिति सर्वैरेव मुमुक्षुभिः कर्त्तव्यत्वेनादर्त्तव्येति भावः ॥ १६ ॥

**यावत्कृष्णे परिचितमतिर्जायते नो मुमुक्षु-**
**स्तावद् भ्रान्तिं विषमभयदां नैव भेत्तुं समर्थः ।**
**तस्माद्धीमान् हरिपदयुगे प्रेमभक्तिं विशुद्धां**
**संधायासौ प्रभवति भवं छेत्तुमध्यासमूलम् ॥१७॥**

एतदेव दृढीकर्त्तुं "यस्य देवे परा भक्तिः" ( श्वे० ६ । २३ ) "तपः-प्रभावाद्देवप्रसादाच्च" ( श्वे० ६ । २१ ) "ईश्वराज्ज्ञानमन्विच्छेद्" इत्यादिश्रुतिस्मृतिशतैः परमेश्वरप्रसादायत्तत्वात् तत्त्वज्ञानस्य, तत्प्राप्त्यर्थं भक्तिश्रद्धाप्रणिपातपुरःसरं परमेश्वरस्यैवाश्रयणीयत्वेनान्वयव्यतिरेकाभ्यां प्रदर्शयंस्तद्भक्तिमेवोररीकुर्वन्नाह—यावदित्याद्यष्टाभिः पद्यैः । अध्यास एव मूलं कारणं यस्य तमित्यर्थः । शेषमतिरोहितार्थम् । १७ ॥

**शान्त्यागारे भ्रमहरपदे कान्तिकान्ताङ्किताङ्गे**
**स्वादुस्वादुस्मितमधुरनालंकृतास्येऽच्छधाम्नि ।**
**प्रेम्णा लभ्ये जलधितनयालिङ्गिते वेदगीते**
**कृष्णे भक्तिं श्रयत सुजनाः संसृतिध्वान्तभेत्रीम् ॥१८॥**

भक्तिरसालंबनं भगवन्तं सौन्दर्य्यमाधुर्य्यसौष्ठवादिगुणैरलङ्कृतं वर्णयंस्तद्भक्तेरवश्यकर्तव्यत्वं दर्शयति—शान्त्यागार इति । अविद्यात-त्कार्यनिवृत्तिरेव शान्तिस्तस्या आगारे तदास्पदे निरावरणज्ञानघनत्वात् सर्वमायिकविकारातीतेऽत एव ध्यातॄणां भ्रममनाद्यध्यासं हरतीति तादृशं परं चरणारविन्दं यस्य तस्मिन्, कान्तिलक्षणया कान्तया नित्यमव्यभिचरितरूपया अङ्कितान्यङ्गानि यस्य तस्मिन्, स्वादुतो-

ऽपि स्वादु भक्तानुग्रहसूचकतया स्मितं हसितं तेन या मधुरता माधुर्य्यं तयाऽलङ्कृतमास्यं मुखारविन्दं यस्य तस्मिन्, स्वच्छं धाम स्वरूपप्रकाशो यस्य तस्मिन् कृष्णे भक्तिमनुरागरूपां हे सुजनाः सफल-जन्मानः श्रयत आश्रयतेति सम्बन्धः । शेषं स्पष्टम् ।। १८ ।।

**भोगासक्तिं परिहृतवतो भक्तियोगो मुकुन्दे**
**सिद्धयेद् धीरो विषयविरतिं दोषदृष्ट्याश्रयेत ।**
**सा धीशुद्ध्या विरतिरुदिता सद्विवेकान्मुमुक्षो-**
**र्मोक्षे हेतुं जनयति रतिं केशवे केशिशत्रौ ।।१६।।**

भक्तियोगोपायं विषयवैराग्यमवश्यं कर्त्तव्यमिति दर्शयति— भोगासक्तिमिति । वैराग्योपायमाह—दोषदृष्ट्येति । तस्या अपि कारण-माह—सेति । सा विषयेभ्यो विरती रत्यभावहेतुर्दोषदृष्टिरन्तः-करणशुद्ध्या सद्विवेकात् सम्यग्विवेकद्वारा उदिता सती केशिनो दैत्य-विशेषस्याश्वरूपधारिणः शत्रुर्घातकस्तस्मिन् केशवे ब्रह्मरुद्रजनकत्वेन सर्वे-श्वरे श्रीकृष्णे रतिं सर्वसाधनफलभूतां प्रेमप्रकर्षलक्षणां भक्तिं सकला-नर्थनिवृत्त्युपलक्षिताद्वयानन्दाविर्भावरूपे मोक्षे हेतुमवर्जनीयतया तत्त्व-ज्ञानमप्युत्पाद्य मोक्षपर्यवसायिनीं मुक्तिमिच्छोः पुरुषस्योत्पादयतीत्यर्थः । यद्यपि श्रवणकीर्तनादिभिर्वक्ष्यमाणैरेव साधनैः प्रेमप्रकर्षोत्पत्तिस्तथापि तैरपि भगवतोऽन्यपदार्थेभ्यो वैराग्यमुत्पाद्यैव प्रेमप्रकर्षोत्पादनं क्रियते । अन्यत्र विषये आसक्तचित्तस्य तादृशप्रेमोत्पत्तिर्दुर्लभेति भावः ।।१६।।

**धर्माच्छुद्धिर्भवति विहितात्स्वं प्रतीशार्चनाख्यात्**
**कुर्वन्धर्मं न च परिभवं याति कुर्यात्ततस्तम् ।**
**श्रौतं मार्गं कुमतिहरमाश्रित्य कृष्णाङ्घ्रिसेवी**
**संसाराब्धिं तरति सुखतो भ्रान्तिमुच्छिद्य धीमान्।।२०।।**

भगवद्भक्तिरेव सर्वानर्थोन्मूलिनी सर्वोपायैर्मुमुक्षुभिः संपाद्येत्यभिप्रेत्याह—धर्मादिति स्वं प्रति विहिताच्छास्त्रेणेति शेषः। स्ववर्णाश्रमप्रयुक्तात्परमेश्वराराधनलक्षणाद्धर्माद्भक्तियोगोत्पादिका चित्तशुद्धिर्भवतीति सम्बन्धः। ननु धर्मं कुर्वन्तोऽपि संसरन्त एव दृश्यन्ते, कथं धर्माच्छुद्धिर्भवतीति नियमः? इत्याशङ्क्याह—कुर्वन्निति। धर्मं भगवदाराधनलक्षणमाचरन् परिभवं संसृतिरूपतिरस्कारं न चाप्नोति तस्मात्तं भगवदाराधनलक्षणमेव धर्म्मं कुर्यादित्यर्थः। तथा च पुरुषापराधकामनैव संसारहेतुर्न तु धर्मः। "धर्म्मो नित्यः सुखदुःखे त्वनित्ये" इति भारतोपसंहारे भगवदाराधनलक्षणस्यैव धर्म्मस्य भगवत्प्राप्तिफलकत्वान्नित्यत्वमुक्तम्, न तु धर्म्माभासस्य। ईश्वराद्विमुखैः सकामपुरुषैरनुतिष्ठितस्य "सुखदुःखे त्वनित्ये" इत्यनेन तत्फलकस्य धर्म्मस्याप्यनित्यत्वमुक्तं वेदितव्यम्। अत एव कुमतिहरं श्रौतं श्रुतिप्रोक्तं पन्थानं समाश्रित्य कृष्णाङ्घ्रिसेवी सुखतोऽनायासेन धीमांस्तत्त्वज्ञानवान् सन् ततो भ्रान्तिमविद्यातत्कार्य्यमुच्छिद्यापबाध्य संसारसमुद्रं तरत्यतिक्रामति। जीवन्नेव विमुक्तो भवतीत्यर्थः॥ २०॥

**त्रेधा भक्तिर्निगमविहिता केशवे मोक्षहेतुः**
**सख्यं श्रद्धास्मरणमनिशं नैजदेहार्पणञ्च।**
**औदासीन्यं स्वतनुभरणे पोषणादौ स्वकीये**
**न्यस्यात्मानं भगवति हरौ मानसी भक्तिरेषा॥२१॥**

भगवति निरतिशयप्रेमोत्पादिकां साधनभक्तिं त्रेधा विभज्य दर्शयति—त्रेधेति। मोक्षो निरतिशयानन्दाविर्भावस्तद्धेतुर्भगवति निरतिशयप्रेमोत्पादनद्वारा साधनभक्तिः केशवविषये त्रेधा मानस्यादिभेदेन त्रिप्रकारा निगमविहिता श्रुतिस्मृतिभिरुपदिष्टा। तत्रादावभ्यर्हितत्वान्मानसीं भक्तिं निरूपयति—सख्यमिति स्नेहास्पदत्वे-

नाश्रयणम् । श्रद्धा तत्रातिशयेनास्तिक्यबुद्धिः । स्मरणमनिशं नित्यं तदनुसन्धानम् । स्वात्मत्वेनाभिमतो यो देहस्तस्यार्पणम्, दास्यभावेन समर्पणमित्यर्थः । स्वतनुभरणे स्वशरीरपोषणे स्वकीये पुत्रादौ यत्पोषणादिस्तत्रौदासीन्यं पक्षपातराहित्यम्, ममेत्यभिनिवेशाभाव इति यावत् । आत्मानमहङ्कारास्पदं जीवं हरौ भगवति समर्प्य तस्यापि बन्धमोक्षादावौदासीन्यं कृत्वा यच्चेतसोऽवस्थानमिति शेषः । एषा मानसी भक्तिः । निगमविहितेत्यत्राप्यनुषज्यते ॥ २१ ॥

**कर्णाभ्यां तच्छ्रवणमनिशं सज्जनानां मुखाब्जाद्**
**नित्यं सेवा मधुरिपुगृहे मार्जनादिप्रकारैः ।**
**अर्चा विष्णोर्विविधसुरभिद्रव्यलेपादि देहे**
**पञ्चाङ्गाद्यैर्नमनमुदितं वन्दनं कायिकीयम् ॥२२॥**

कायिकीं भक्तिं दर्शयति—कर्णाभ्यामिति । सज्जनानां भगवत्पराणां मुखारविन्दात्तच्छ्रवणं तस्य भगवतो नानालीलास्पदत्वेन श्रवणं कर्णाभ्यामक्षरानुपूर्व्यावधारणम् । यदा तात्पर्यावधारणं तदा मानसी भक्तिः । यत्र भगवत्परा भगवन्तं कीर्तयन्ति तत्रादरेण नित्यमेव गन्तव्यमित्यर्थः । मधोरसुरविशेषस्य प्रलयसमुद्रे हिरण्यगर्भविनाशोन्मुखस्य वेदाहरणे प्रवृत्तस्य रिपुर्निजभक्तस्य ब्रह्मणो रक्षणार्थं घातकस्तस्य भगवतो गृहे हरिमन्दिरे मार्जनोपलेपनादिप्रकारैर्नित्यमत्यन्तोत्साहेन सेवा सेवनं तत्कैङ्कर्यमिति यावत् । विष्णोर्देहे श्रीमूर्तिविग्रहे विविधसुरभिविशिष्टद्रव्याणि श्रीखण्डचन्दनादीनि तैर्लेपादि लेपनम्, पत्रभङ्ग्यादिरचनारूपम्, अर्चा आह्वानादिषोडशोपचारैर्भगवतः श्रीकृष्णस्य पूजनम्, पञ्चाङ्गाद्यैर्नमनं पञ्चाङ्गादिप्रणामस्तदेव शास्त्रे वन्दनमिति कथितम् । इयं कायिकी भक्तिरुपदिष्टेत्यर्थः ॥ २२ ॥

विष्णोर्नाम्नां कथनमनिशं कीर्तनं तद्गुणानां
दास्यं कर्माखिलमपि कृतं केशवस्याज्ञयाऽस्तु ।
तत्संतुष्ट्यै स च मम गतिस्तस्य दासोऽस्मि नित्यं
सर्वं विश्वं हरिरिति वचो वाचिकी भक्तिरिष्टा ॥२३॥

वाचिकीं भक्तिमाह—विष्णोरिति। दास्यं कैङ्कर्य्यं केशवस्य ममाऽस्तु, तदाज्ञयाऽखिलमपि मया कर्म्म कृतं तत्सन्तुष्ट्यै, स च मम गतिरित्यादिकथनं वाचिकी भक्तिरिष्टा। शेषं स्पष्टम्। ननु

"श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥"

(भा० ७। ५। २३)

इत्यादिना नवविधा भक्तिः श्रूयते कुतस्त्रैविध्यमिति चेन्मैवम्। उत्पत्तिवाक्ये संख्यातिरेकेऽपि कायिकत्वादिना समुदायत्रयं कृत्वा अधिकारवाक्ये फलसम्बन्धविधानेन त्रित्वाविरोधात्। "आग्नेयोष्टाकपालः पुरोडाशः पौर्णमास्याममावास्यायाञ्चाच्युतो भवति" इत्युभयत्राष्टाकपालः प्रथमं हविर्भवति। एवमग्नीषोमीयः पौर्णमास्याम्, ऐन्द्राग्नोऽमावस्यायां द्वितीयं हविरिति। एकादशकपालः पुरोडाशः अग्नीषोमीयः पौर्णमास्याम्, ऐन्द्राग्नो द्वादशकपालः पुरोडाशो दर्शे द्वितीयम्। एवमग्नीषोमावुपांश्वाज्यस्य विष्णुर्वाऽमावस्यायामिति। पौर्णमासे अग्नीषोमौ चतुर्गृहीताज्येन, दर्शे विष्णुं चतुर्गृहीताज्येन, उभयत्र अन्तरा यागः* इत्याग्नेयादिवाक्ये षट् कर्माणि विधाय "दर्शपूर्णमासाभ्यां स्वर्ग-

---

* सारांशोऽयं श्रुतीनाम्, श्रुतयस्त्वानुपूर्व्येणेत्थं सन्ति—

"यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति"

(तै० सं०)

"ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्"

(तै० सं०)

कामो यजेत'' इति समुदायद्वयं कृत्वा फलसम्बन्धविधानवत् तत्र सख्यस्मरणात्मनिवेदनानि मानसी भक्तिः, तत्र स्मरणं नाम सत्यः सर्वगः सर्वशक्तिरित्याद्यनन्तकल्याणगुणादिवैशिष्ट्येन चिन्तनम्, सख्यं श्रद्धादि, आत्मनिवेदनं देहसमर्पणं विक्रीतपशुवद्भरणपोषणौदासीन्येन भगवदेकशरणत्वम् । श्रवणम्, पादसेवनं परिचर्या, अर्चनादि कायिकी, कीर्त्तनं गानम्, भगवद्दास्याद्यभिधानादि वाचिकी भक्तिरित्यादि विवेचनीयमिति सर्वमनवद्यम् ॥ २३ ॥

**भक्तिं प्रोक्तामथ कृतवतः प्रेमभक्तिर्मुरारेः**
**पादाम्भोजे भवति च ततोऽध्यासपाशप्रहाणेः ।**
**हेतुर्बोधो निजभगवतोरैक्यनिष्ठः प्रमात्मा**
**सिद्ध्येत्सिद्धा भवजलनिधेर्मुक्तिरेतेन जन्तोः॥२४॥**

यथोक्तसाधनभक्तेः फलं निरूपयति—भक्तिमिति । प्रोक्तां यथोपदिष्टां साधनरूपां भक्तिं कृतवतः पुंसोऽथानन्तरं मुरारेः श्रीकृष्णस्य पादाम्भोजे प्रेमभक्तिर्निरतिशयरतिर्भवति । ततः प्रेमभक्तेरध्यासोऽतस्मिंस्तद्बुद्धिरूपो मिथ्याप्रत्ययरूप इति यावत् । स एव बन्धकत्वात् पाशस्तस्य प्रहाणिः प्रकर्षेण मूलबाधेन बाधस्तस्या हेतुभूतो निजस्य त्वंपदार्थस्य भगवत्प्रसादात् त्रिविधमलनाशेन परिशोधितलक्ष्यरूपस्य प्रत्यगात्मनः भगवतः स्वत एव नित्यशुद्धबुद्धमुक्तस्वभावस्य तत्पदलक्ष्यस्य तयोस्तत्त्वंपदार्थयोरैक्ये वाक्यार्थभूताखण्डवस्तुनि निष्ठा पर्यवसानं यस्य स च बोधः प्रमाऽनधिगताऽबाधितार्थविषयं यथार्थज्ञानं

---

''तावब्रूतामग्नीषोमावाज्यस्यैव तावुपांशु पौर्णमास्यां यजन्''

( श० ब्रा० )

''ऐन्द्राग्नो द्वादशकपालोऽमावास्यायां भवति''

( श० ब्रा० )

तद्रूपः सिद्ध्येदाचार्यमूर्तिस्थभगवत्प्रसादादनायासेनैव भवति। जन्तोरधिकारिणो मुमुक्षोरेतेन यथोक्तबोधेन भव एव दुस्तरत्वादिगुणविशिष्टतया जलनिधिः समुद्रस्तस्मात् तत्त्वबोधबाधितान्मुक्तिः स्वस्वरूपावस्थानलक्षणा सिद्धा, न तु साध्या; चतुर्विधकर्म्मफलविलक्षणत्वादित्यर्थः ॥ २४ ॥

**विष्णोरङ्घ्रौ हृदि धृतवतः शुद्धबुद्धेर्मुमुक्षो-**
**र्वैराग्यादि प्रबलकरणं तत्प्रसादादुदेति ।**
**प्राप्याचार्य्यं निरवधिपदप्राप्तिनिष्ठानिविष्टं**
**भक्तिश्रद्धाप्रवणमनसा संश्रयेत्तं स धीमान् ॥२५॥**

भगवत्प्रसादलब्धतत्त्वज्ञानान्मोक्ष इत्युक्तमेवार्थं विस्तरेण निरूपयिष्यन् जिज्ञासूनां प्रवृत्तिविशेषसिद्ध्यर्थं "आचार्यवान्पुरुषो वेद" ( छा० ६ । १४ । २ ) "आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापयति" ( छा० ४ । ९ । ३ ) "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ" ( श्वे० ६ । २३ ) "तद्विज्ञानार्थं समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" । ( मु० १ । २ । १२ )"तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया"। (गी० ४ । ३४ ) इत्यादिश्रुतिस्मृतिसहस्रैः सद्गुरूपसदनसेवनादिनियमपूर्वकश्रवणादिभिर्वेदान्तार्थावगतिः फलाय, न मेधाविनोऽपि स्वयमेव ग्रन्थपरिशीलनादिभिरिति नियमं प्रदर्शयन्नेव तत्त्वज्ञानोपदेशक्रमं शिक्षयति — विष्णोरङ्घ्रीति । भगवत्पादाम्भोजद्वयं हृदि धृतवतोऽत एव शुद्धा कामाद्यैरकलुषिता बुद्धिर्यस्य तस्य मुमुक्षोर्मोक्षमात्रैकनिष्ठस्य तस्य भगवतः प्रसादाद्वैराग्यमिहामुत्रार्थफलभोगविरागः, आदिपदेन शमादिसम्पत् । प्रबलञ्च तत्करणञ्च साधनेषु प्राबल्यञ्च तत्पौष्कल्यमेवोदेति । तथा च भगवत्प्रसादलब्धसाधनचतुष्टयसम्पन्नोऽधिकारी धीमान् परीक्ष्यकारी स चाचार्यं दैशिकवर्यं निरवधिपदे

ब्रह्मणि प्राप्ता या निष्ठा पर्यवसानं तत्रैव नितरां सर्वविक्षेपनाशात् कृतकृत्यतया पर्यवसन्नं श्रुत्युक्तविशेषणविशिष्टं प्राप्य भगवत्प्रसादादासाद्य भक्तिर्गुरोरानुकूल्यम्, श्रद्धा तद्वचनेष्वास्तिक्यबुद्धिः, ताभ्यां प्रवणं तदाभिमुख्यं नीतं यन्मनस्तेन तमाचार्यं संश्रयेत्——सम्यक् संसाराब्धितरणाय शरणत्वेनाश्रयेदित्यर्थः ॥ २५ ॥

**तत्पार्श्वेऽसौ विजितकरणो वीतरागो विवेकी**
**तिष्ठन्सेवाप्रमुखसुगुणैः स्वप्रसादानुकूलम् ।**
**आराध्यामुं श्रुतिनयविदं सुप्रसन्नञ्च बुद्ध्वा**
**पृच्छेत्प्रश्नान्विविधविशयान्स्वान्तगान्बोधसिद्ध्यै २६**

गुरोः सन्निधौ प्राप्तस्य मुमुक्षोः कृत्यमाह——तत्पार्श्व इति । तस्य गुरोः समीपे तिष्ठन्नसौ मुमुक्षुर्विवेकी नित्यानित्यवस्तुविवेकवान्, वीतराग आब्रह्मलोकभोगतृष्णारहितः, विजितकरणः शमदमोपेतः, सेवा तच्चिन्त्वानुकूला या या चेष्टा तत्र स्थितिः, प्रमुखशब्देन प्रणिपातादिग्रहस्तादृशैः सुगुणैः स्वप्रसादानुकूलं स्वस्मिन् गुरोः प्रसादः स्वप्रसादस्तदनुकूलं यथा स्यात्तथामुं दैशिकवर्यमाराध्य सम्यगाराधनं कृत्वा, श्रुतयो वेदान्ताः, नयास्तदनुकूलतर्काः, तान् सम्प्रदायतो वेत्तीति तमौपनिषदब्रह्मात्मविज्ञानपरिपूर्णं सुप्रसन्नं सुष्ठुप्रसादानुकूलं विज्ञाय, तदनुज्ञयैव प्रश्नान्विविधविशयान् नानासंशयबीजगोचरान् स्वान्तगान् स्वान्तःकरणनिष्ठान् मुमुक्षुभिः कर्त्तव्यतया शास्त्रोक्तान् पृच्छेत् । बोधो वेदान्तवाक्यविचारजन्यो ब्रह्मात्मसाक्षात्कारस्तस्य सिद्ध्यै प्राप्तये, न तु कौतुकाद्यावेशेन स्वपाण्डित्यख्यापनायेत्यर्थः ॥ २६ ॥

**कोऽहं कस्य प्रचुरभयदा संसृतिः काऽस्त्यविद्या**
**का विद्या तत्क्षयपटुतरा कोऽस्त्युपायस्तदाप्तौ ।**

**मोक्षः स्यात्तत्फलमपि कथं कीदृशाः स्युर्विमुक्ता**
**इत्थं पृष्टो गुरुरपि वदेदुत्तरं तत्क्रमेण ॥ २७ ॥**

अथ मुमुक्षुणा कर्त्तव्यान् प्रश्नान्निरूपयति—कोऽहमिति। किं देहादिसङ्घातरूपः? किं वा देहमात्रम्? अथवा अहं कर्त्ता भोक्ते-त्यादिप्रत्ययविषयो लिङ्गदेहः? उताहो तद्विलक्षणः? इत्याद्यहं-प्रत्ययविषयक एकः प्रश्नः। प्रचुरभयदा अत्यन्तदुःसहा संसृति-र्जन्ममरणप्रवाहरूपा कस्य—किं देहादिसङ्घातस्य? उताहो तद्विल-क्षणस्य कस्यचित्? इत्याद्यहंप्रत्ययास्पदगतबन्धविषयको द्वितीयः। अविद्या कास्ति? किं तार्किकादिलोकप्रसिद्धज्ञानाभावरूपा? अथवा तद्विलक्षणा? इति बन्धकारणविषयकस्तृतीयः। तस्या अविद्यायाः क्षये निवर्त्तने बाधने पटुतरा अत्यन्तप्रगल्भा विद्या का? किं कर्मोपासनादिरूपा? किं वा तद्भिन्ना? इति तन्निवर्तकविषयक-श्चतुर्थः। तस्या विद्याया प्राप्तौ कोऽस्त्युपायः? किं ध्यानादिरूपो योगः? किं वा वेदान्तवाक्यविचाररूपः श्रवणादिः? इत्यादितत्त्व-ज्ञानप्राप्त्युपायप्रश्नः पञ्चमः। तत्फलं तस्या विद्याया फलम्। अपिर्भिन्नक्रमः। मोक्षोऽपीत्यत्र सम्बध्यते। स किं स्वरूपः? किं स्वर्गा-दिवत्कश्चिद्देशविशेषः? किं वा तद्विलक्षणः? इत्यादितत्फल-विषयकः षष्ठः। ये विमुक्ता मोक्षफलं प्राप्तास्ते कीदृशाः स्युः? किम-स्मदादिना साधारणव्यवहारवन्तः? किं वा विलक्षणव्यवहाराः? इत्यादिजीवन्मुक्ततत्त्वविद्विषयकः प्रश्नः सप्तमः। इत्थमेतत्प्रकार-कानन्यानपि प्रश्नान् पृष्टः शिष्येण स्वाभिमुखीकृतो गुरुः। गृणाति उपदिशति तत्त्वं शिष्येभ्य इति गुरुः। अपि शब्दात्ख्यात्यादिस्वप्र-योजनशून्योऽपि केवलं स्वभावभूतकरुणया प्रेरित एव शिष्येभ्यस्तत्त्व-मुपदिशतीति सूचितम्। तत्क्रमेण तेषां शिष्यकृतप्रश्नानां क्रमेणोत्तरं तत्तत्प्रश्नसमाधानं वदेत्, तत्संशयनिराशपर्यन्तमुपदिशेदित्यर्थः ॥२७॥

**तत्राप्यादौ गुरुवदनतः शास्त्रसिद्धस्त्वमर्थो**
**वक्तव्यः स्यात्तदनुविविधप्रश्नवाक्यानुसारात् ।**
**शास्त्रे द्वेधा भवति रचना वस्तुबोधाय तस्मा-**
**दत्राप्येवं भवति गुरुणा बोध्यते शिष्य आदौ ॥२८॥**

ननु शास्त्रे वादिप्रतिवादिरूपेण तत्त्वं प्रतिपाद्यते, तथा प्रतिपादनं च नानाशङ्कानिरासेन शास्त्रसिद्धान्तस्थापनार्थम्, तत्कथं तत्परित्यज्य गुरुशिष्यरूपेण तत्त्वनिरूपणमारभ्यते ? इत्याशङ्क्याह—तत्रापीति । तत्र शास्त्रेऽपि द्वेधा रचना भवतीत्यन्वयः । शिष्यतेऽनेन शिष्येभ्यस्तत्त्वं यथावत्प्रतिपाद्यते तच्छास्त्रं वेदान्तरूपं तन्निर्णायकविचारप्रधानाभियुक्तकृतनिबन्धरूपश्च तस्मिन् वस्तुबोधाय अनारोपिततत्त्वज्ञापनाय न तु विजिगीषामात्रफलाय द्वेधा द्विप्रकारा रचना निर्माणं भवति । वादिप्रतिवादिरूपा गुरुशिष्यसंवादरूपा च । एवं सति आदावभ्यर्हितत्वाद् गुरुशिष्यसंवादरूपा प्रदर्श्यते, वेदान्तेषु छान्दोग्यबृहदारण्यककेनप्रश्नोपनिषदादौ सर्वत्र प्रायस्तस्या एवोपलम्भात् । वेदस्यानादित्वेऽपि सर्वार्थावभासकतया गुरुशिष्यादिभावं प्रकल्प्य तथावर्णनम् । वेदशब्दानुरोधेनैव सृष्टिरचना । यथावेदबोधितमेव वैदेहयाज्ञवल्क्यादीनां समागमादि जायते । यथोक्तमेव तेषां वेदार्थभानमपि तत्तत्काले भवतीति द्रष्टव्यम् । तस्माच्छास्त्रानुरोधादत्रापि वेदान्तप्रकरणे गुरुवदनतः गुरुमुखेन शास्त्रसिद्धो वेदान्तनिर्णीतस्त्वंपदार्थो वक्तव्यः स्यात् । तत्पदार्थस्य शास्त्रतात्पर्यविषयतयाऽभ्यर्हितत्वेऽपि त्वंपदार्थस्य मोक्षफलभागितया ततोऽभ्यर्हितत्वात्तस्यादौ वक्तव्यत्वमिति द्रष्टव्यम् । तदनु गुरुशिष्यसंवादनिरूपणात् पश्चाद् विविधप्रश्ननिर्णायकवाक्यानुसाराद्वादिप्रतिवादिरूपेणेति यावत् । अतः शास्त्रसिद्धत्वादेव गुरुणाचार्येण शिष्यः शासनार्ह आदौ प्रथमतो बोध्यते बोधाभिमुखीक्रियत इत्यर्थः । "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समि-

त्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् । तस्मै स विद्वानुपसन्नाय सम्यक्प्रशान्तचित्ताय शमान्विताय।" (मु० १।२।१२, १३) इत्यादिश्रुतेः॥२८॥

**श्रौतं तत्त्वं शृणु शुभमते ! त्वं पदार्थं विशुद्धं**
**प्रत्यञ्चं स्वं त्रिगुणविधुरं वस्तुतस्तुर्यमच्छम् ।**
**सत्यं ज्ञानं सुखघनमजं साक्षिणं जाग्रदादे-**
**स्तस्मिन्शुद्धे त्रिगुणमनृतं कल्पितं भावमान्ध्यम् २९**

शिष्यं तत्त्वश्रवणायाभिमुखीकुर्वंस्तस्मै तत्त्वं संक्षेपेण गुरुरुपदिशति—श्रौतमिति । हे शुभमते ! शुभा संसारभोगेभ्यो विरज्य परमात्मपदाभिमुखत्वात्सुकृतपुञ्जफला मतिर्निश्चयात्मिका चेतोवृत्तिर्यस्य स त्वं श्रौतं तत्त्वं श्रुतिप्रमाणकं वस्तुतत्त्वं शृणु—श्रोतुं सावधानो भवेत्यन्वयः । कोऽहमिति त्वया पृष्टे त्वंपदार्थं श्रुतिप्रतिपादितं वस्तुत आजानतो विशुद्धं मायातत्कार्यमलात्यन्तासंस्पृष्टम्, प्रत्यञ्चं सर्वान्तरत्वादस्मत्प्रत्ययगोचरम्, स्वं स्वात्मानम्, त्रिगुणमज्ञानं तत्कार्यञ्च तेन विधुरं वस्तुतस्तच्छून्यम्, तुर्य्यं विश्वतैजसप्राज्ञेषु जाग्रदाद्यभिमानिषु जीवत्वेनाभिमतेषु जाग्रदाद्यवस्थासु चानुगतत्वात् "शिवमद्वैतं चतुर्थं मन्यन्ते" (माण्डू० ७) इत्यादिश्रुतिसिद्धं तुरीयम्, अच्छमपाहतपाप्मादिगुणकम्, सत्यं कालत्रयेप्यबाध्यम्, ज्ञानं स्वप्रकाशचिद्रूपम्, सुखघनमानन्दैकरसम्, अजं जन्मोपलक्षितषड्भावविकारवर्जितम्, जाग्रदादेरवस्थात्रयस्य साक्षिणं साक्षाद्द्रष्टारम्, त्वंपदार्थं शृण्विति सम्बन्धः । नन्वेवंस्वरूपोऽहं चेत्तर्हि कथं मम संसारः ? इत्याशङ्क्यैतादृशस्वरूपापरिज्ञानादेवेत्याह तस्मिन्निति । वस्तुतः शुद्धे संसारासंस्पृष्टे आन्ध्यमन्धयति स्वरूपमावृणोतीत्यन्धं तस्य भावस्तदेव वा आन्ध्यमज्ञानमविद्यामायादिशब्दवाच्यं, तस्य भावरूपप्रपञ्चं प्रति कारणत्वयोग्यतामाह—भावमिति। तेनाज्ञानप्रागभावादौ नातिव्याप्तिः।

आत्मवत्सत्यत्ववारणायाह—अनृतमिति । ऋतं सत्यं तद्भिन्नमनृतमनिर्वाच्यमित्यर्थः । तस्य तत्त्वज्ञानैकनिवर्त्यत्वसिद्धये आह—कल्पितमिति । अध्यस्तमित्यर्थः । न च ब्रह्मैक्यतत्त्वज्ञाननिवर्त्यप्रपञ्चेऽतिव्याप्तिस्तस्याज्ञानोपादानकत्वेनाज्ञानानतिरेकादिति भावः । विचित्रकार्योत्पादकयोग्यतामाह—त्रिगुणमिति । यद्वा, मिथ्याज्ञानव्युदासायाह त्रिगुणमिति । तथा चानाद्यनिर्वाच्यं भावरूपं ज्ञानविरोधि त्रिगुणात्मकमज्ञानं तस्मिन्नात्मतत्त्वे परिकल्पितम्, तदेव संसारं त्वयि कल्पयति । तन्निरासितत्त्वज्ञानसिद्धये यथोक्तलक्षणस्यात्मतत्त्वस्यावश्यश्रोतव्यत्वादिति भावः ॥ २९ ॥

**तद्द्वाराहंकृतिरपि जडारोपितानर्थहेतु-**
**स्तत्रात्मन्यप्यखिलमनृतं कल्पितं देहमुख्यम् ।**
**मिथ्याध्यासादहमिति मतिः स्थूलदेहे च सूक्ष्मे**
**भ्रान्त्या जीवो व्रजति नितरां संसृतिं स्वप्रमादी ३०**

केवलमज्ञानं नानर्थावहं सुषुप्तौ तस्मिन्विद्यमानेऽपि दुःखाद्यनर्थाभावात्; ततो यद्द्वारा तदनर्थावहं तमध्यासं प्रदर्शयन्नादावहङ्काराध्यासं साक्षादनर्थमूलं दर्शयति—तद्द्वारेति । अज्ञानद्वारा तत्रोक्तलक्षणाज्ञानोपहिते आत्मनि अहङ्कृतिरप्यारोपितेत्यन्वयः । अहङ्करणमहमिति प्रत्ययः शब्दश्च । जडा अज्ञानकार्यत्वाद् । अनर्थहेतुः सकलानर्थकारणमज्ञानमप्येतद्द्वारैवाऽनर्थहेतुः । आध्यात्मिककार्याध्यासेष्वहमिति प्रथमोऽध्यासः । न चाधिष्ठानारोप्यांशद्वयानुपलम्भान्नायमध्यास इति वाच्यम् । अयो दहतीतिवदहमुपलभे इति दृग्दृश्यांशयोरुपलम्भात् । तत्राप्यात्मनि अहङ्काराध्यासवति तस्मिन्नखिलं देहमुख्यं देहेन्द्रियप्राणमनोबुद्धिरूपं कल्पितमज्ञानेन, अनृतमनिर्वाच्यमित्यर्थः ।

ननु कथमनृतस्य निरात्मकस्याहङ्कारादेरध्यासो यावता कश्चिद्दृष्टपूर्वस्य सत एव वस्तुनः क्वचिदारोपो दृष्टः। उक्तञ्च भट्टपादैः—

"अध्यस्यते खपुष्पत्वमसत्कथमवस्तुनि।

प्रज्ञातगुणसत्ताकमध्यारोप्येत वा न वा॥" इति।

तत्राह—मिथ्याध्यासादिति। अयमर्थः—संस्कारजन्यो हि भ्रमस्तत्सिद्ध्यर्थे पूर्वप्रतीतिमात्रमपेक्ष्यते, न पुनः पूर्वप्रतीतस्य परमार्थसत्त्वमपि व्यतिरेकाभावात् संशयविपर्ययदृष्टेऽपि संस्कारकार्यस्मृतिदर्शनात्। तथा हि—लोकेऽनुभवोऽस्मिन् वल्मीककूटे मम पुरा "स्थाणुः पुरुषो वा" इति सन्देह आसीत्, अस्मिन् शुक्तिशकले "रजतमिदम्" इति भ्रम आसीदित्यादिः। न च संशयविपर्यययोरेवेयं स्मृतिर्न तदर्थयोरिति वाच्यम्, अर्थशून्ययोस्तयोः स्मृतिविषयत्वानुपपत्तेः। तस्मान्निरुपाख्यविलक्षणस्य पूर्वपूर्वभ्रमदृष्टस्याप्युत्तरोत्तरारोपोपपत्तेर्भ्रमप्रवाहस्य चानादित्वेनान्योन्याश्रयानवस्थादिप्रसङ्गानवकाशात्। युक्तमज्ञानोपहिते परमार्थसत्यात्मनि मिथ्याभूतस्यानिर्वाच्यस्याहङ्कारादेरध्यास इति। अनिर्वचनीयाज्ञानकार्यत्वादनिर्वचनीयोऽध्यासोऽतस्मिंस्तद्बुद्धिरूपः। तस्मादहमिति प्रत्ययः सूक्ष्मे लिङ्गशरीरे सप्तदशावयवात्मके, स्थूलदेहे च भवतीत्यर्थः।

नन्वज्ञानद्वाराऽऽत्मनि कल्पितोऽहमिति प्रत्ययः शब्दश्च, तत्राहमस्मीति भानं युज्यते, पुरोवर्तिनि शुक्तिशकलादाविदं रजतमित्यादिप्रत्ययवद्। देहादौ तु कथमहमस्मीति विपर्ययभानम्? नहि देहादावारोपितेऽहङ्काराध्यासो न वा कल्पितेऽहङ्कारे देहादेरध्यासः, कल्पितस्याज्ञातत्वाभावेनाधिष्ठानत्वायोगादित्याशङ्क्य नह्यहमस्मीतिप्रत्ययस्तयोरधिष्ठानाधिष्ठेयभावप्रयुक्तः, किन्त्वेकस्मिन्नात्मन्यहङ्कारस्य देहद्वयस्य चाध्यासाद्देहादावहमस्मीति प्रत्ययः, यथा 'अहमज्ञः' इति प्रत्यये चिन्मात्रनिष्ठस्याप्यज्ञानस्याहङ्कारनिष्ठतया भानम्।

नह्यहङ्कारस्याज्ञानकार्यस्याज्ञानाश्रयत्वं संगच्छते, किन्त्वेकस्मिन्नात्मनि तयोरध्यासादेवाज्ञोऽहमिति प्रत्ययः, तद्वदत्रापीत्यभिप्रेत्याह—स्वप्रमादीति। स्वात्मनि प्रमादोऽनवधानताऽज्ञानं तदस्यास्तीति तथा। स्वात्माज्ञानादेव जीवः प्राणधारणाद्युपाधिवशाद्देहादावहमिति प्रत्ययं करोतीत्यर्थः। अज्ञोऽहमित्यपि तथैव भानमज्ञानस्य तत्कार्यस्य चैकस्मिन्नात्मनि सर्वस्याध्यस्तत्वाद् युज्यते। अत एव भ्रान्त्या मिथ्याध्यासेन नितरां घटीयन्त्रवत्संसृतिमनवच्छिन्नजन्ममरणपरम्परां व्रजत्यनुभवतीत्यर्थः। तथा चाघटितघटनापटीयस्त्वादज्ञानस्य तदुपहिते परमात्मनि स्वप्नद्रष्टरीव न किमप्यसंभावितमिति भावः॥ ३०॥

**अध्यासोऽयं परिमिततनौ कामकर्मादिहेतुः**
**कर्तृत्वाद्यैर्दृढतरभवं प्रापयत्येष जन्तून्।**
**तद्वश्यास्ते पुनरपि पुनः संसृतिं भ्रान्तिमूलां**
**प्राप्यानादौ क्वचिदपि सुखं यान्ति नास्मिन्प्रवाहे ३१**

नन्वध्यासस्यैकरूपत्वात्कथं देवतिर्यङ्नरादिदेहग्रहणत्यागरूपतया विचित्रायाः संसृतेर्हेतुत्वम्? विचित्रकारणादेव विचित्रकार्योत्पत्तेर्विचित्रतन्तुकार्यविचित्रपटोत्पत्तिवद् दृष्टत्वादित्याशङ्क्याह—अध्यासोऽयमिति। अयं सर्वलोकप्रत्यक्षोऽहं ममेदमित्यध्यासो मिथ्याज्ञानरूपः परिमिततनौ परिच्छिन्नशरीरादौ कर्तृत्वाद्यैः कर्ताऽहमेतस्य कर्मणः एतत्फलस्य भोक्ताहमित्यादिरूपेण कामकर्मादिहेतुः। काम इदं मे स्यादिदं मे स्यादितीच्छारूपः, कर्माणि विहिताविहिताद्यनुष्ठानजनितधर्माधर्मशब्दवाच्यानि सञ्चितागामिप्रारब्धरूपाणि, आदिशब्देन रागाभिनिवेशास्मितादेर्ग्रहः, तेषां हेतुः कारणं प्रसिद्ध एष जन्तून् स्वस्वरूपाज्ञानिनो जीवान् दृढतरभवं तत्त्वज्ञानमन्तरेणोच्छे-

त्तुमशक्यतयात्यन्तदुःसहं सत्यत्वप्रतीतिविषयतया वाऽत्यन्तदृढं भवं देवतिर्यङ्नरादिदेहग्रहणपरित्यागरूपं संसृतिचक्रं प्रापयति। अविद्यमानमपि सत्यतया प्रत्याययतीत्यर्थः। तथा च कामकर्मादीनां वैचित्र्यात् संसृतिवैचित्र्यमप्यध्यासकार्य्यमेवेति भावः।

ननु कदाचिदेतस्य संसृतिचक्रस्य स्वयमेवोपरमः स्यात्, तदनुपरमेऽपि जीवानां क्वचिन्निरतिशयं सुखं संसारेऽपि स्यात्, तथा च किं तत्त्वज्ञानोत्पादकाद्वैतशास्त्रविचारेण ? इत्याशङ्क्य सत्यज्ञानेऽध्यासो दुर्वारः, तस्मिँश्च सति कामकर्मादीनामप्यवश्यंभावात्। तथा च संसारोपरमस्तत्त्वज्ञानमन्तरेणात्यन्तासम्भावितः।

"यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः।
तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति" (श्वे० ६। २०)

इत्यादिवचनाच्च देहाभिमानिनां देवादीनामपि सुखगन्धोऽपि दुर्लभ इत्यभिप्रेत्याह—तद्वश्या इति। अध्यासव्याप्तास्ते जीवाः पुनः पुनरपि भूयो भूयो भ्रान्तिमूलामज्ञानभ्रान्तिनिदानां संसृतिं तत्त्वज्ञानमात्रैकनिवर्त्यां प्राप्य स्वाज्ञानेन स्वीकृत्य अनादावस्मिन्संसृतिप्रवाहे क्वचिदपि देशे वा काले वा सुखं निरतिशयं नैव प्राप्नुवन्तीत्यर्थः। तस्मात्तन्निवर्तकतत्त्वज्ञानसिद्धयेऽद्वैतशास्त्रसिद्धान्तविचारोऽत्यन्तावश्यक इति भावः॥ ३१॥

**कश्चिद्धीरो विषयविरतिं शुद्धबुद्धिः समेत्य**
**श्रुत्योद्दिष्टं विजितकरणो वीक्ष्य तत्त्वं यथावत्।**
**स्वात्मानन्दं श्रयति सकलानन्दलेशप्रतिष्ठं**
**विद्याध्वस्ताखिलजडरतिः शान्तसंसारतापः॥३२**

ननु तर्हि सर्वेषामपि जीवानामध्यासप्रयुक्तकर्मादिसत्त्वे कस्यापि संसृतेर्मोक्षो न स्यात्, तथा च वृथा शास्त्रारम्भोपदेशादित्याशङ्क्य

कर्मादीनां वैचित्र्यादेव केषाञ्चित्पुरुषधौरेयाणां भगवत्प्रसादलब्धसाधन-चतुष्टयतया तत्त्वजिज्ञासासम्भवात्तेषां शास्त्रोपदेशेन तत्त्वसाक्षात्कारे जाते संसारोपरमोपलक्षितानन्दस्वरूपात्मावस्थानलक्षणो मोक्षः स्यादेवेति न वैयर्थ्यं शास्त्रारम्भोपदेशादेरित्यभिप्रेत्याह—कश्चिदिति । मनुष्यसहस्रेषु दुर्लभो धीरोऽक्षप्राबल्येऽपि विषयसन्निधानेऽप्यविकृतचित्तः, तत्र हेतुः—विषयविरतिं समेत्य सम्यग्वैतृष्ण्यं प्राप्य, तत्रापि हेतुः—शुद्धबुद्धिरिति । भगवदाराधनलक्षणाद्धर्माच्छुद्धा विषयैरकलुषिताऽन्तःकरणवृत्तिर्यस्य सः । अत एव विजितकरणो जितेन्द्रियः । इत्थंभूतोऽधिकारी श्रुत्या तत्त्वमस्यादिवाक्येनोद्दिष्टं गुरुणोपदिष्टं तत्त्वं ब्रह्मैक्यं वीक्ष्य साक्षात्कृत्य यथावदसन्दिग्धाविपर्यस्तस्वानुभवारूढं यथा स्यात्तथा तत्फलं स्वात्मानन्दं सकलानन्दलेशप्रतिष्ठमामनुष्यादाविरिञ्च्यं सकलविषयानन्दलेशानां प्रतिष्ठापरिसमाप्तिर्यस्मिन्, यमपेक्ष्य लोके आनन्दलवोऽपि नास्ति, तादृशं स्वस्वरूपभूतभूमानन्दशब्दवाच्यमानन्दं तदवस्थानलक्षणं मोक्षं श्रयति आश्रयति । दृश्यजालं परित्यज्य तद्रूपेणावस्थितो भवतीत्यर्थः । तद्रूपेणावस्थितस्य लक्षणमाह विद्येति । विद्यया स्वरूपसाक्षात्कारेण ध्वस्ता मिथ्यात्वेन बाधिता अखिलजडेषु भोग्यभोगालयभोगभूमितत्साधनेषु रतिरासक्तिर्यस्य सः । अत एव शान्तो मूलोच्छेदेनोच्छिन्नः संसारताप आध्यात्मिकादिलक्षणो यस्य स तथेत्यर्थः ॥ ३२ ॥

**देहाध्यासे सति कथमहो भोगवैराग्यसिद्धि-**
**र्धर्मादीनां फलमपि यतो दातुमस्त्येव शक्तिः ।**
**कर्मानन्त्यादपि भवनिधिर्दुस्तरः कामभीष्म-**
**स्तर्तुं शक्यः स कथमिति चेदुच्यते तत्समाधिः॥३३॥**

स्यादेतद्, यदि वैराग्यं सिद्ध्येत्; तदेव दुर्घटम् । देहाद्यध्यासे सति विषयेषु रागोऽवश्यंभावी, तस्य विषयसौन्दर्याध्यासजन्यत्वात् । तत्र

भोगप्रदकर्म्मणो हेतुत्वम्, कर्मणाश्चानन्त्याद्भोगदानं विना नाशासम्भवात्। तथा च कथं संसारतापशान्तिः? कथं वा विषयभोगवैराग्यम्? इति शङ्कते—देहाध्यास इति। अहो यदुक्तं त्वया तदाश्चर्यं दुर्घटमित्यर्थः। दुर्घटत्वमेवोपपादयति—देहेति। देहादावात्मबुद्ध्या भोक्तृत्वमित्यविवादम्। तथा च भोगेभ्य ऐहिकेभ्यः स्रक्चन्दनवनितादिभ्य आमुष्मिकेभ्योऽमृताप्सरआदिभ्यो वैराग्यं वैतृष्ण्यं तस्य सिद्धिर्भोक्तुर्जीवस्य प्राप्तिः कथं स्यात्? न कथमपीत्यर्थः। नहि भोगाः स्वत एव ग्रहीतुं हातुं वा शक्याः। किन्तु धर्मोऽदृष्टशब्दवाच्यस्तस्माद्भोगाः पुरुषमायान्ति। तथा च धर्मादेः स्वफलं दातुं शक्तिरप्यस्त्येव। यत एवं ततः कथं भोगवैराग्यसिद्धिरिति सम्बन्धः। किञ्च, कर्म्मशब्दवाच्यं धर्माधर्मरूपमदृष्टं तद्यदि परिमितं स्यात्तर्हि स्यात्कदाचिन्मोक्षे प्रत्याशा। तदपि नास्तीत्याह—कर्मेति। कर्मणामप्यानन्त्यात्तत्फलभूतो भवनिधिः संसारसमुद्रो दुस्तरः प्रसिद्ध एवास्ति। किञ्च, सर्वस्य कर्मादेरपि बीजभूतः कामस्तेन भीष्मोऽत्यन्तभयङ्करः। तथा च कामकर्मादिमूलोच्छेदं विना स च कथं तर्त्तुं शक्यः, न कथमपीत्यर्थः। इति चेदिति शङ्कायां समाधिः समाधानमुच्यते त्वदुक्तशङ्कानिरासायेत्यर्थः॥ ३३॥

**नानाजन्मार्जितसुकृततः प्रेमभक्तिर्मुकुन्दे**
**सम्यग्जाता विषयविरतिं साधयत्याशु तीव्राम्।**
**ब्रह्मात्मैक्यं निगमविषयं ज्ञातुमिच्छुर्विरक्तो**
**भूत्वा तत्त्वश्रवणमननध्याननिष्ठः स तिष्ठेत्॥३४॥**

भगवद्विमुखानामध्यासप्राबल्याद्रागादिसत्त्वेऽपि श्रीमन्मुकुन्दपदारविन्दमकरन्दासक्तचित्तानान्तु तदैश्वर्यभूतविषयवैराग्यं तत्प्रसादादेव सुलभम्, तथा तत्त्वज्ञानमपि सकलकामकर्मादिबीजभूताज्ञानोच्छे-

दनन्तमं सपरिकरं तत्कृपाकटाक्षेणैव सुलभम्। तथा च संसारतापोपशमः सांसारिकसुखे रत्यभावश्च भगवद्भक्तानां सिद्धयत्येवेत्यभिप्रेत्याह—नानेति। अनेकजन्मसुसञ्चितं सुकृतं भगवत्प्रसादानुकूलं यत्तस्मात्तत्फलं प्रेमभक्तिरनुरागात्मिका चेतोवृत्तिर्मुकुन्दे मुक्तिफलदे सम्यगप्रतिबन्धेनाव्यभिचारिणी उद्भूता सती ऐहिकामुष्मिकफलभोगवैतृष्ण्यमत्यन्ततीव्रतया तत्त्वज्ञानपुष्कलसाधनं वैराग्यं झटित्येवोत्पादयति। ततो विरक्तो ब्रह्मात्मैक्यं तत्त्वंपदार्थयोरैक्यं प्रत्यगभिन्नं ब्रह्माखण्डैकरसं ज्ञातुमिच्छुः साक्षात्कर्तुमुद्यतः श्रवणं सकलवेदान्तानां समन्वयोक्तरीत्या ब्रह्मणि शक्तितात्पर्यावधारणलक्षणम्, मननं श्रुतार्थस्य श्रुत्यनुग्राहकतर्कैः पुनः पुनश्चिन्तनम्, ध्यानं विजातीयदेहादिप्रत्ययतिरस्कारपूर्वकं सजातीयात्मैक्यप्रत्ययप्रवाहीकरणं निदिध्यासनसञ्ज्ञम्, तत्त्वस्य ब्रह्मैक्यस्य श्रवणमननध्यानानि तन्निष्ठस्तत्रैकतत्परो भूत्वा स विरक्तो मुमुक्षुस्तिष्ठेत्—यावत्तत्त्वसाक्षात्कारं नैश्चल्येनावस्थानं कुर्यादित्यर्थः ॥ ३४ ॥

**साक्षात्कारो यदि भगवतः प्रत्यगानन्दभूम्नः**
**सिद्धस्तर्हि व्रजति विलयं कर्मजालं समूलम्।**
**कर्तृत्वाद्या सकलकलना तत्क्षणे नाशमेति**
**ध्वस्ते मोहे भवजलनिधिर्नास्ति कालत्रयेऽपि॥३५॥**

तत्त्वसाक्षात्कारे सिद्धे किं फलं स्यात्? इत्यत आह—साक्षात्कार इति। यदि यस्मिन् काले भगवतः स्वत एवानावृतस्वरूपानन्दस्य प्रत्यगानन्दभूम्नः सर्वान्तरत्वात्प्रत्यगेव परप्रेमास्पदतया सुखस्वरूपः स एव भूमा पूर्णं ब्रह्म तद्रूपस्य साक्षात्कारोऽयमहमस्मीति निश्चयरूपः सिद्धः नैश्चल्यं प्राप्तस्तर्हि तस्मिन्नेव समये समूलं मूलेनाज्ञानतत्कार्यभूतकामादिना सह वर्तते समूलं कर्म्मजालं जालवद्बन्धकं

कर्म्ममात्रं विलयं मूलोच्छेदेनोच्छेदं प्राप्नोतीत्यर्थः। ननु तत्त्वज्ञानात्पूर्वं कृतं कर्म्म ज्ञानेन विनश्यतु, तथापि क्रियमाणं कर्म्मैव संसारफलकं किन्न स्यात्? इत्याशङ्क्य तन्मूलभूतकर्तृत्वादिबाधेन कर्म्ममात्रं विनश्यति, "यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हाऽस्य सर्वे पाप्मानः प्रदूयन्ते" ( छा० ५। २४। ३ ) इति "न कर्मणा वर्द्धते नो कनीयान्" ( बृ० ४। ४। २३ ) इत्यादिश्रुतेः,

"ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा।"

( गी० ४। ३७ )

बीजान्यग्न्युपदग्धानि नारोहन्ति यथा पुनः।
ज्ञानदग्धैस्तथा क्लेशैः नात्मा सम्पद्यते पुनः॥

इत्यादिस्मृतेश्च, "तदधिगमे उत्तरपूर्वोत्तराघयोरश्लेषविनाशौ तद्व्यपदेशात्"—( ब्र० ४। १। १३ ) इति न्यायाच्च ज्ञानिनः सर्वकर्मदाहश्रवणान्न तस्य पुनः संसारप्राप्तिशङ्काऽवकाशं लभते इत्यभिप्रेत्याह—कर्तृत्वाद्येति। तत्क्षणे तत्त्वज्ञानोदयसमसमये समग्रापि कर्तृत्वाद्या कलना संसारबीजत्वेनाभिमता नाशं समूलोन्मूलतामेति प्राप्नोति।

ननु तथापि संसारः स्वभावादेव बन्धकः स्यादनिच्छतोऽपि गन्धादिज्ञानवदित्यत आह—ध्वस्त इति। सकार्याज्ञाने ध्वस्ते ज्ञानेन बाधिते सति भवजलनिधिः संसारसिन्धुः कालत्रयेऽपि नास्ति स्वाप्नसिन्धुरिव प्रबोधे सति, नासीदस्ति भविष्यतीत्यर्थः। तथा चाहुरत्र भवन्तो वार्तिककाराः—

"तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः।
अविद्या सह कार्येण नासीदस्ति भविष्यति॥" इति।

( सं० वा० १८३ )

तथा च गगनारविन्दसुगन्धवत् संसारस्वभावो ह्यज्ञानमन्तरेण न निरूपणपथमवतरतीति भावः॥ ३५॥

**स्थूलो देहो जनिमृतियुतो भौतिको नायमात्मा**
**गौरश्यामप्रभृतिकलनासंश्रयः कर्म्मवश्यः ।**
**नानासंज्ञाविषय उदितः काष्ठलोष्ठादिवद्योऽ-**
**चिद्रूपोऽसावहमिति कृतेर्गोचरोऽर्हः कथं स्यात् ॥ ३६ ॥**

एवं सफलं ससाधनं तत्त्वज्ञानं भगवत्प्रसादाद्भगवद्भक्तानामनायासेन भवतीति प्रदर्श्येदानीं मोक्षस्य वाक्यार्थज्ञानाधीनत्वात्, तस्य च पदार्थज्ञानाधीनत्वात्, तदर्थं त्वंपदार्थशोधनमारभते। तत्र तावद्देहात्मवादिनो मन्यन्ते—अहमित्यनुभवे देह एव प्रथते, न देहान्तर्वर्त्यन्यः, कुण्ड इव बदराणि, अत एव स्थूलो गौरो गच्छामीच्छामि जानामि बिभेमीत्यापण्डितपामरं स्थौल्यगौरतेच्छाज्ञानादेः सामानाधिकरण्यानुभवः । नहि धर्मिभेदे धर्माणां सामानाधिकरण्यानुभवः । नहि भवति मधुरं कुण्डं कम्बुग्रीवादिमन्ति बदराणीति । लोहितः स्फटिक इति धीस्तु स्फटिकलोहितद्रव्ययोः पृथक्करणे बाध्यते । न च 'नाहं मनुष्यः' इति कस्यचिद्बाध्यप्रत्ययोऽस्ति, विदुषामपि गच्छामि तिष्ठामि ब्राह्मणोऽहं मनुष्योऽहमित्याद्यनुभवात् । यद्यपि समस्तेषु व्यस्तेषु पृथिव्यादिषु न चैतन्यं दृष्टम्, तथापि कायाकारपरिणतेषु भविष्यति मदिराकारपरिणतेष्विव किण्वादिषु मदशक्तिः । खदिरचूर्णादिसंवलिततताम्बूले इव च रागोदयः । देहाधीनोपलम्भनियमाच्च ज्ञानादेर्देहधर्मत्वम् । तथा चाहुः 'चैतन्यविशिष्टः कायः पुरुषः' इति तेषामन्यधर्मत्वे दृष्टहानिरदृष्टकल्पना च स्यादिति देह एवात्मेति तान् द्वाभ्यां निराकरिष्यन्नादौ जडत्वादिभिर्हेतुभिर्देहेऽहंप्रत्ययायोग्यताञ्च प्रदर्शयन् स्थूलदेहात्त्वंपदार्थं विवेचयति—स्थूल इति । जनिमृतियुत इति । प्रागभावप्रध्वंसयोः प्रतियोगी भूतविकारोऽयं प्रत्यक्षमानसिद्धः स्थूलो देह आत्मा न भवति, गौरश्यामादिकलनासंश्रयत्वात् । जन्मारभ्य गौरत्वादेर्नानापरिणामोपलम्भात् न स्थायि-

त्वमित्यविवादम् । तथा च अहमिति प्रत्ययगोचरतां कथमपि नार्ह-तीत्यर्थः । कदाचित् सुखित्वेन कदाचिद् दुःखित्वेनानुभव एकस्मिन्नपि देहे दृश्यते तत्कस्य हेतोः ? तस्मिन्पुण्यपापातिरिक्तहेत्वसम्भवात् । तयोश्चास्मिन् जन्मनि क्रियमाणयोः पश्चाद्भावात् पूर्वजन्मसंबन्ध्यात्मावश्यक इत्याशयेनाह—कर्मवश्य इति । कर्म्म धर्माधर्मरूपं तद्वश्यस्तदधीन इत्यर्थः । स्थौल्यगौरताचैतन्यादेः सामानाधिकरण्यानुभवस्तु अन्योन्याध्यासाद् 'अयो दहति' 'रक्तः स्फटिक' इति प्रत्ययवद् भ्रान्तिरेव । न च बाधाभावः, प्रदीपघटयोरिव प्रकाश्यप्रकाशकयोर्धर्म्मधर्मिभावानुपपत्तिलक्षणयौक्तिकबाधसत्वात्, जातिस्मराणां तत्त्वज्ञानानाञ्च प्रत्यक्षेणात्मनि देहातिरेकानुभवात्, ग्रहावेशेनाभिभूतस्य व्यवहरतोऽपि प्रत्यभिज्ञाद्यदर्शनाच्चातिरिक्तात्मसिद्धिरिति बोध्यम् । नानासंज्ञा बालः, युवा, वृद्ध इत्यादिव्यभिचारिव्यवहारगोचरत्वेन लोक उदितः स च नियमेनाहमिति प्रत्ययस्य कथं गोचरार्हः स्यादिति सम्बन्धः । यत्तूक्तं चैतन्यस्य देह एवोपलम्भाद् देहधर्मत्वमिति तदसदित्याह—काष्ठलोष्ठादिवद्योऽचिद्रूप इति । मृतस्य देहस्य काष्ठादितुल्यत्वेन तदानीं ज्ञानाभावे किं कारणं देहाकारपरिणतभूतानां तदानीमपि सत्वाज्ज्ञानप्रसक्तेर्दुर्वारत्वात् । तथा च तादृशस्थले व्यभिचारान्न देहाकारपरिणतेर्ज्ञानहेतुतेति भावः ॥ ३६ ॥

**चार्वाकाणामतिजडधियां कामुकानामकानां**
**रागान्धानां विषमविषयेऽत्याग्रहाणां गृहाणाम् ।**
**बद्धास्थानामनृतवपुषि व्याकुलानां कुलानां**
**त्यक्त्वा पक्षं भज सुमनसां सज्जनानां जनानाम् ॥ ३७ ॥**

न केवलं युक्तिशून्यत्वादेव चार्वाकपक्षोऽनुपादेयोऽपि तु नैष्फल्याद्विपरीतफलाच्च सर्वथा हेय एवेत्यभिप्रेत्याह—चार्वाकाणामिति ।

चार्वाकाणां देहात्मदृष्टीनामतिशयेन जडा मन्दा स्थूला च धीर्येषाम्, कामुकानां केवलैहिकस्रक्चन्दनवनितादिविषयभोगलम्पटानाम्, अत एवाकानां तत्सम्पादनासमर्थतया तत्रैवात्यन्तव्यग्रचेतस्तया न विद्यते कं सुखं येषाम्, रागेण विषयासक्तिरूपेणान्धानां शास्त्रजन्यदृष्टिशून्यानाम्, अत एव विषमविषये महताऽपि प्रयत्नेन सम्पादयितुमशक्येऽपि सर्वापेक्षोत्कर्षादिरूपे अतिशयेन य आग्रहोऽभिनिवेशस्तस्य बहुत्वं तत्तद्विषयभेदेन तद्गृहाणामाग्रहमात्रैकशरणानाम्, अनृतवपुषि स्वप्नदेहवन्मिथ्याभूते शरीरे बद्धा आस्था उत्कटजीवनेच्छा येषाम्, अत एव नानोपायव्यग्रतया व्याकुलानां विक्षिप्तचित्तानां कुलानाम्, तेषां बहूनामपि सहस्रान्धानामिव मूर्खाणां पक्षं स्वकपोलकल्पितं भोगलाम्पट्यप्रत्युक्तवेदद्वेषमूलत्वाच्चाप्रमाणं देहात्मवादं त्यक्त्वा सुमनसां शास्त्रीयधर्माराधितेश्वरत्वाच्छुद्धान्तःकरणानां व्यासादीनां महर्षीणाम्, सज्जनानां परमार्थसद्वस्तुनिष्ठानाम्, जनानां सफलजन्मनां पुरुषधौरेयाणाम्। पक्षमिति काकाक्षिन्यायेनोभयत्र सम्बध्यते। तं भज सेव्यत्वेन समाश्रयस्व तेनैव कृतकृत्यो भविष्यसीत्यर्थः ॥ ३७ ॥

**स्थूले देहे श्रुतिनयबलान्निश्चितेनात्मभावात्**
**स्वस्माद्भिन्ने विगलति जडेऽहङ्कृतिर्भ्रान्तिसिद्धा।**
**तन्निष्ठातः पृथगहमिति ज्ञानमादृत्य धीरः**
**प्रत्यक्तत्त्वं विमृशति धियाऽऽचार्यवेदान्तवाक्यैः ॥ ३८॥**

एवं स्थूलदेहाद्विवेचिते त्वंपदार्थे फलितमाह—स्थूल इति। श्रुतिनयबलात् श्रुतिः "अशरीरं शरीरेषु" ( कठ० २ । २१ ) इत्यादिरूपा, नय उक्तलक्षणः, तद्बलात् तदनुसारेणानात्मभावादनात्मत्वादेव स्वस्माद्भिन्नेऽत्यन्तविलक्षणे स्थूलदेहे उक्तरीत्या निश्चिते सति तत्र भ्रान्तिसिद्धाऽनाद्यध्यासोत्पादिताऽहङ्कृतिरयमहमस्मीति प्रत्ययो

विगलति विलयं प्राप्नोतीति योजना। ततः किमित्यत आह—तन्निष्ठात इति। तस्याः स्थूलदेहानहङ्कृतेर्निष्ठातो दृढाभ्यासस्थितेः स्थूलादेहादहं पृथगिति ज्ञानमादृत्य यथार्थरूपतयाऽऽदरेण स्वीकृत्य धीरो विवेकादिविशिष्टो मुमुक्षुः प्रत्यक्तत्त्वं त्वंपदार्थस्वरूपं धिया शान्त्यादिगुणवत्या चेतोवृत्त्या आचार्योपदिष्टवेदान्तवाक्यैर्देहादिभ्यः पृथगात्मतत्त्वप्रतिपादकैरुपनिषद्वचोभिर्विमृशति विचारयतीत्यर्थः॥३८॥

**सूक्ष्मः प्राणेन्द्रियमतिहृदां सङ्घ एषोऽप्युपाधि-**
**र्नानारूपोऽप्यतिचलगतिर्भौतिकत्वाज्जडत्वात्।**
**दृश्यत्वाच्छिन्नभस इतरो भ्रान्तिकार्योऽत्यनर्थो**
**नैवात्मायं त्रिगुणजनितो याति नाशं सुषुप्तौ॥३९॥**

विचारे क्रियमाणे यथा स्थूलदेहात्त्वंपदार्थस्य पृथक्त्वं विनिश्चितं तथैव सूक्ष्मादपि पृथक्त्वं तस्य सिद्ध्यतीत्यतो लिङ्गदेहादपि त्वंपदार्थं विवेचयति—सूक्ष्म इति। प्राणाः प्राणापानादिभेदेन पञ्चधा, इन्द्रियाणि दश ज्ञानकर्म्मसाधनानि, मतिर्निश्चयात्मिकाऽन्तःकरणवृत्तिर्बुद्धिः, हृत् सङ्कल्पात्मिकान्तःकरणवृत्तिर्मनः, एते सप्तदश तेषां समुदायः सूक्ष्मो लिङ्गदेहः। एषोऽप्युपाधिरात्मन इति शेषः। न त्वात्मेत्यर्थः। आत्मन एकरूपत्वं श्रुतिस्मृतिन्यायानुभवसिद्धम्, अयन्तु न तथा, यतो नानारूपः। नन्वेकस्मिन्देहे बहूनामात्मनामैकमत्यं सम्भाव्यते, न वा तेषामेकप्रयोजनवशादैकमत्यम्, विरुद्धनानाप्रयोजनानामपि कदाचित्प्रसक्तेरवर्जनात्। गुणप्रधानाभावे च विनिगमकाभावात्। उपभोक्तुरन्यस्यानभ्युपगमेन सांख्यमते गुणानामिवैकमत्याभावात्। न चैकसार्थान्तर्गतपुरुषाणामिवैकमत्योपपत्तिरिति वाच्यम्, तत्रानियमात्। न चैकसार्थान्तर्गतपुरुषाणामपि यावज्जीवमैकमत्यनियमो मेलननियमो वास्ति, प्रयोजनभेदे वैमत्यविश्लेषादिदर्शनात्। न वा तेषां सप्त-

दशानां समुदाय एवात्मेत्यपि साधुः, चक्षुरादिष्वेकैकोपघातेऽपि तद्घटितसमुदायभङ्गेनात्मोपघातादन्धा मूकाश्च म्रियेरन्, न जीवेयुः । समुदायोऽपि समुदायिभ्योऽन्योऽनन्यो वेत्यादिविकल्पासहत्वेन निरूपयितुमशक्य इति भावः । किञ्च, मनःप्रधानं हि लिङ्गशरीरं तस्य च चाञ्चल्यं लोकप्रसिद्धं नह्यतिचलगतेरात्मत्वं युक्तम्, अक्रियस्यैवात्मत्वप्रसिद्धेः । अतोऽपि सूक्ष्मो नात्मेत्याह—अतिचलगतिरिति । अपि च "अशब्दमस्पर्शमरूपमव्ययम्" (का० १ । ३) इति शास्त्रादात्मा पञ्चभूतविकारादन्यो विनिश्चितः । अयन्तु न तथेत्याह—भौतिकत्वादिति । भूतविकारत्वादित्यर्थः । चिद्रूपो ह्यात्मा, "विज्ञानमानन्दं ब्रह्म" (बृ० ३ । ९ । २८) इति श्रुतेः । अयन्तु न तथेत्याह—जडत्वादिति । आत्मा द्रष्टा, "विज्ञातारमरे केन विजानीयात्" (बृ० ४ । ५ । १५) इत्यादिश्रुतेः । अयन्तु तद्विपरीत इत्याह—दृश्यत्वादिति । अतश्चिन्नभसश्चिद्रूपादात्मनः सकाशादितरो भ्रान्तिकार्यतया जडदुःखमिथ्यात्मकः । अत एवात्यनर्थरूपकामाद्याश्रयतयाऽत्यनर्थो दुःखैकमूलत्वात् सर्वानर्थनिविड इत्यर्थः । आत्मा हि निर्गुणः, "साक्षी चेता केवलो निर्गुणश्च" (श्वे० ६ । ११) इत्यादिश्रुतेः । अयन्तु तद्विपरीत इत्याह—त्रिगुणेति । त्रिगुणात्मकाज्ञानेन सूक्ष्मभूतोत्पत्तिद्वारा जनित उत्पादित इत्यर्थः । "तद्यथा सोम्य वयांसि वासो वृक्षं सम्प्रतिष्ठन्ते एवं ह वै तत्सर्वं परे आत्मनि सम्प्रतिष्ठते" (प्र० ४ । ७) इति "सुषुप्तिकाले सकले विलीने" "सलिल एको द्रष्टाऽद्वैतो भवति" (बृ० ४ । ३ । ३२) "न तु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तम्" (बृ० ४ । ३ । २६) इत्यादिश्रुतिभिः सर्वकार्यविलयप्रतिपादनादपि नायं सूक्ष्मदेह आत्मेत्याह—यातीति । सुषुप्त्यवस्थायां नाशं स्वकारणे प्राज्ञे संस्कारमात्रावशेषेण विलयं प्राप्नोति । तथा च तत्र दर्शनादप्यस्य नात्मत्वमित्यर्थः ॥ ३९ ॥

**कर्ता भोक्ता परिमिततया ज्ञानकार्यो विकार्य्यः**
**कर्म्माधीनस्तडिदिव चलस्तापसारोऽत्यसारः ।**
**जाग्रत्स्वप्नान्सृजति बहुधानेकरूपोऽस्वरूपः**
**तस्मादन्योऽस्य दृगिरमलोऽस्त्यन्तरात्मा चिदात्मा ४०**

ननु मास्तु करणसमुदायस्यात्मत्वम्, विज्ञानशब्दवाच्याया बुद्धेस्तु स्यात् । ननु निराकृतं बुद्धेरप्यात्मत्वं तन्मध्यपातित्वादिति चेत्, सत्यम्; करणात्मकत्वेन तस्यास्तन्निराकृतम्, कर्त्तृरूपस्य विज्ञानस्य तु न निराकर्तुं शक्यम्, श्रुत्यनुभवसिद्धत्वात् । "विज्ञानं यज्ञं तनुते", (तै० २ । ५) इत्यादिना सर्वयज्ञादिकर्म्मकर्त्तृभूतं तत्प्रस्तुत्य "विज्ञानं ब्रह्म चेद्वेद । तस्माच्चेन्न प्रमाद्यति । शरीरे पाप्मनो हित्वा । सर्वान्कामान्समश्नुते" (तै० २ । ५) इति तज्ज्ञानस्यैव सर्वपापनिवृत्तिसर्वकामावाप्तिफलश्रवणात् । आत्मज्ञानफलत्वेन च ते प्रसिद्धे । अत एव न मनःसाम्यम्, तस्य करणत्वात् । अस्य च "यज्ञं तनुते । कर्माणि तनुते" (तै० २ । ५) इति वैदिकलौकिकसर्वकर्मकर्त्तृत्वश्रवणात् । कर्त्ता हि सर्वैरात्मेष्यते, "शास्त्रफलं प्रयोक्तरि" (मी० सू० ३ । ७ । १८) इति जैमिनिसूत्रात्, कर्म्मकाण्डप्रामाण्यानुरोधात्; "स हि कर्त्ता" इति श्रुतेश्च । एतच्च "कर्त्ता शास्त्रार्थवत्वात्" (ब्र० सू० २ । ३ । ३३) इति सूत्रयतो भगवतो बादरायणस्यापि सम्मतम् । तस्माद्धि ज्ञानमय एवात्मेत्येकदेशिनामुपासकमीमांसकादीनां च मतम् । तन्निराचष्टे—कर्त्तेति । योऽयं कर्त्ता भोक्तेत्यादिरूपेण प्रसिद्धो विज्ञानमयश्चैतन्यप्रतिबिम्बगर्भोऽन्तःकरणविशेषोऽहंकारादिशब्दवाच्यः सोऽपि परिच्छिन्नतयाज्ञानकार्यत्वेन विकार्य एव भूतविकारान्तःपातित्वात् परिणाम्येव । "बुद्धेर्गुणेनात्मगुणेन चैव" (श्वे० ५ । ८) "यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह" (का० ६ । १० ) । "बुद्धिश्च नेङ्गते तत्र परमात्मानमश्नुते" । "बुद्धिश्च न विचेष्टते तामाहुः परमां गतिम्" ( का० ६ । १० ) इत्यादिश्रुतिभिः गुण-

क्रियावत्त्वेन प्रसिद्धस्य परिच्छिन्नद्रव्यस्य बुद्धिशब्दवाच्यत्वनिश्चयात् नायमात्मेत्यर्थः । किञ्च, अयं कर्माधीनः धर्माधर्मपरतन्त्रतया तत्तच्छरीरे तादात्म्याध्यासेन तत्तद्रूपेण प्रतीयमानतया तडिदिव विद्युल्लेखेव चलश्चञ्चलः । नहीदृशस्य व्यभिचारिण आत्मत्वं संगच्छते । आत्मा हि परप्रेमास्पदतया सुखस्वरूपः । अयन्तु तद्विपरीत इत्याह—तापसार इति । आध्यात्मिकादिताप एव सारो यस्य यावद् यावदहं करोमीत्यादिकर्त्तृत्वादिदार्ढ्यं तावत्तापाधिक्यमित्यर्थः । किञ्च, विचार्यमाणे पञ्चभूतकार्यत्वाविशेषादप्यस्य स्थूलदेहवन्निःसारत्वमित्याह—अत्यसार इति । नहि मुग्धकल्पितपिशाचस्येवास्य निःसारस्यात्मत्वं सङ्गच्छते इत्यर्थः । नानापरिणामशीलत्वादप्यस्यानात्मत्वं स्फुटमित्याह—जाग्रदिति । इन्द्रियैरर्थोपलब्धिरूपावस्था जाग्रत्, स्वप्नो जाग्रद्वासनासंस्कारजनितेन्द्रियाजन्याऽन्तःकरणवृत्तिरूपावस्था बहुधा बहुप्रकारेण तान् जाग्रत्स्वप्नान् सृजति । किञ्च, अपञ्चीकृतभूतकार्यत्वात्पञ्चभूतात्मकमन्तःकरणं चित्प्रतिबिम्बग्राहि ज्ञानक्रियाशक्तिप्रधानमेव विज्ञानशब्दवाच्यम् । तस्यात्मत्वे तुल्यन्यायेन स्थूलदेहेन्द्रियादीनामप्यात्मत्वं दुर्वारं स्यात्, साधकबाधकयुक्तिसाम्यात् । तथा नानात्मता स्यादित्यभिप्रेत्याह—अनेकरूप इति । मनुष्योऽहं पश्यामि, गच्छामि, सङ्कल्पविकल्पवानहमित्याद्यनेकरूपत्वादप्यस्यात्मत्वं न स्यादित्यर्थः । "अविनाशी वा अरे अयमात्मा अनुच्छित्तिधर्मा मात्रासंसर्गस्त्वस्य भवति" ( बृ० ४ । ५ । १४ ) इति श्रुतौ आत्मनोऽविनाशित्वं निर्णीतम् । एतस्य तु तद्विपरीतत्वमित्याह—अस्वरूप इति । सुषुप्त्यादौ विलयश्रवणाज्जाग्रदादौ विक्रियमाणत्वान्न विद्यते स्वमसाधारणं देहादिभ्यो विलक्षणं रूपं यस्य स । तथा च देहादितुल्यत्वादस्यानात्मत्वमित्यर्थः, "तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तरात्मा आनन्दमयः" ( तै० २ । ५ ) इति स्पष्टमेवात्मनो विज्ञानमयातिरिक्तस्य प्रदर्शनाद्, विज्ञानमयस्य कोशत्वप्रसिद्धेः, भृगु-

वल्ल्यां विज्ञानादप्युत्तरत्र "आनन्दो ब्रह्मेति व्यजानात्" (तै० ३ । ६) इति दर्शितत्वात्, "यो विज्ञाने तिष्ठन् विज्ञानादान्तरः" इति सर्वान्तरस्य पृथङ्निर्देशाच्च। विज्ञानस्यापि साक्षो नित्यदृक्स्वरूपः परमात्मान्योऽस्तीत्याह—तस्मादिति। तस्मादुक्तहेतोरस्य विज्ञानमयस्य दृशिः साक्षादव्यवधानेन द्रष्टा, अमलोऽपगतनानामलसम्पर्कशून्यः चिदात्मा चिद्रूपत्वात्स्वप्रकाशः अन्तरात्मा सर्वान्तरत्वेन श्रुतिप्रसिद्ध आत्मा अस्ति, न नास्ति, तस्याभावे ग्राहकाभावान्निःसाक्षिकं विज्ञानादिजगदालोकासत्त्व इव रूपमस्ति नास्तीत्युपदेशानर्हं खपुष्पायमाणं स्यादित्यर्थः। तथा च स्मृतिः—

"असत्यस्मिञ्जगन्नाथे अन्धीभूतमिदं भवेत्।
सूर्येणेव विहीनत्वान्निरालोकं जगद्यथा ॥"

इति। अयं भावः—"विज्ञानं यज्ञं तनुते" (तै० २ । ६) इति श्रुतिर्यज्ञं तत्फलोपभोगयोग्यं व्यावहारिकं सर्वान्तरात्मज्ञानोपायत्वेन प्रस्तुतं कोशविशेषमाह न पारमार्थिकमात्मानम्। अत एव तत्रत्यं सर्वपापक्षयसर्वकामावाप्तिफलकीर्त्तनमापेक्षिकस्यान्यत्र सिद्धहिरण्यगर्भोपास्तिफलस्यानुवादोऽर्थवादो वा अपापश्लोक*श्रवणवाक्यवत्। अन्यथाऽत्रैवोपक्रमोपक्षिप्तसर्वकामावाप्तिफलेनोपसंहारे ज्ञातव्यान्तरापरिशेषादभिलषितफलान्तरासम्भवाच्चोत्तरत्रानन्दमयकोशनिरूपणं पुच्छब्रह्मनिरूपणं तदुपपादनार्थं उत्तरो ग्रन्थश्च निरर्थकः स्यात्। "कर्त्ता शास्त्रार्थवत्त्वात्" (ब्र० सू० २ । ३ । ३३) इत्यादिसूत्राणि तु "तद्गुणसारत्वात्तु तद्व्यपदेशः" (ब्र० २ । ३ । २९) इति सूत्रोपदर्शितबुद्धिसम्बन्धाधीनकर्त्तृत्वादिप्रपञ्चनार्थानि, कर्मोपासनाकाण्डोपयोगितया तावतैव कर्मकाण्डप्रामाण्योपपत्तेः। "शास्त्रफलं प्रयोक्तरि" (मी० सू० ३ । ७ । १८) इत्यादिकमपि बुद्ध्युपहितव्यावहारिकतादृशात्मविषयम्, न पारमार्थिकमात्मविषयमिति ॥ ४० ॥

---

* यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति।

**कामक्रोधप्रभृतिविकृतिर्भ्रान्तिजन्येऽस्ति सूक्ष्मे**
**कर्तृत्वाद्या सकलकलनाहङ्कृतौ न प्रतीचि ।**
**धर्माधर्मौ त्रिदिवनरकौ जन्ममृत्यू सुखार्के**
**सर्वे धर्मा अनृतवपुषि स्थूलदेहेऽथ सूक्ष्मे ॥४१॥**

एवं धर्मिभ्यां स्थूलसूक्ष्माभ्यां देहाभ्यां प्रत्यगात्मानं विविच्य तद्धर्मेभ्योऽपि विविनक्ति—कामेति । कामः स्त्र्यादिविषयकोऽभिलाषः, केनचित्तत्प्रतिघाते कृतेऽभिज्वलनात्मकान्तःकरणवृत्तिः क्रोधः, तदाद्या विकृतिर्विक्रिया भ्रान्तिजन्यतया स्वसमानधर्मिणि भ्रान्तिजन्ये स्वस्वरूपाज्ञानजाध्यासहेतुके सूक्ष्मशरीरेऽस्ति, न तु प्रतीचि प्रत्यगात्मतत्त्वे; तस्याऽसंगतयाऽन्यधर्मासंस्पृष्टत्वात् । ननु तर्हि मास्त्वन्यधर्मसंस्पर्शः प्रतीचि, कर्तृत्वादयः स्वधर्मा एव किं न स्युः ? तथा च तेषां सत्त्वात्कथमसंगतेत्याशङ्क्य निर्धर्मकश्रुतिविरोधान्नैवमित्याह—कर्तृत्वाद्येति । कर्तृत्वं कारकान्तरैरप्रयोज्यत्वे सति कारकान्तरप्रयोक्तृत्वलक्षणं तदाद्या सकला कल्पनाऽहङ्कृतावहमाकारान्तःकरणवृत्तावेव, न प्रतीचि; तस्य कूटस्थतया क्रियासंसर्गशून्यत्वात् । कर्तृत्वाद्यभावादेव तस्य धर्माधर्मौ पुण्यपापे, तत्फले स्वर्गनरकौ, जन्म अपूर्वदेहसम्बन्धः, मृत्युरुपात्तदेहविच्छेदः, सुखं स्रगादिविषयभोगजन्या चित्तवृत्तिराह्लादरूपा, अर्कं दुःखमनिष्टादिसम्बन्धजन्यसन्तापरूपाऽन्तःकरणवृत्तिरेते सर्वे धर्माः "योग्यं योग्येन सम्बध्यते" इति न्यायेनानृतवपुषि अनिर्वाच्याज्ञानकार्यतया निर्वाच्यात्मके सूक्ष्मे लिङ्गशरीरे, अथ च स्थूलदेहे यथायथं भवन्ति; न तु निर्धर्मके कूटस्थे प्रत्यगात्मतत्त्वे इत्यर्थः ॥ ४१ ॥

**योऽयं देहोऽनृतजडमयो जन्मनः प्रागभावो**
**मृत्युग्रस्तोऽखिलमलगृहं त्वंपदार्थः कथं स्यात् ।**

**जाग्रत्कालादितरसमये नान्वयो यस्य दृष्टः**
**तस्माद्भिन्नोऽनुभववपुषा प्रत्यगात्मा विभाति ॥४२॥**

एवं देहद्वयतद्धर्मेभ्यः प्रत्यगात्मानं विविच्यापि सर्वजनानां देहाभिमानस्य दृढतरत्वात्तस्यैव सर्वानर्थमूलत्वात्तत्परित्यागमात्रेण च मोक्षस्य करप्राप्तप्रायत्वात्तन्निरासाय "बहुकृत्वोऽपि पथ्यं वदितव्यम्" इति न्यायेन देहासारतां प्रतिपादयन् पुनश्च ततः प्रत्यगात्मानं विवेचयति—योऽयमिति । योऽयं सर्वप्रत्यक्षसिद्धोऽनिर्वाच्याज्ञानकार्यत्वादनृतजडात्मको देहः जन्मनः प्राक् पूर्वमभावो यस्य स प्रागभावप्रतियोगितया घटादिवदनित्यः, अत एव मृत्युग्रस्तो ध्वंसप्रतियोगी, अखिलमलानां विण्मूत्रश्लेष्माऽसृगादीनामागारभूतः कथं त्वंपदार्थः स्यादिति सम्बन्धः । तथा च अत्यन्तसारत्वाद्विवेकिना अनात्मत्वेन निश्चेतुं शक्योऽयं देहो मृत्पिण्डादिवदचेतनत्वान्न कथमपि त्वंपदार्थ इति भावः । किञ्च, जन्मनः प्राङ् मरणादूर्ध्वं नास्तीत्येतावतैवानित्य इति न, अपि तु जाग्रत्कालादितरसमये स्वप्नसुषुप्तिमूर्च्छास्वपि यस्य देहस्यान्वयोऽनुवृत्तिर्न दृष्टः; स कथं नित्यः सर्वावस्थानुगतस्त्वंपदार्थः स्यात् ? तस्मात्स्थूलदेहात्प्रत्यगात्मा त्वंपदार्थोऽनुभवरूपेण स्वप्रकाशचिद्रूपतया भिन्नोऽत्यन्तविलक्षणः साक्षी स्वज्योतिषा प्रकाशते इत्यर्थः ॥ ४२ ॥

**सूक्ष्मः सुप्तौ व्रजति विलयं त्वं सुषुप्त्यैकसाक्षी**
**दृश्योऽसौ त्वं दृगसि विमलस्त्वं स्थिरश्चञ्चलोऽयम् ।**
**एकोऽसि त्वं विविधकलनो लिङ्गदेहोऽस्त्यनेको**
**भिन्नोऽतस्त्वं निगमवचनैर्विद्धि शुद्धात्मतत्त्वम् ४३**

एवं देहादिभ्यो विविक्तं त्वंपदार्थं प्रत्यगात्मानमनुभवारोहाय सूक्ष्मशरीराद्विरुद्धधर्मतया पृथक् कुर्वन्नुपदिशति—सूक्ष्म इति ।

लिङ्गदेहः सुप्तौ सुषुप्त्यवस्थायां स्वहेत्वविद्यायां लयमेति । त्वं तदभाव-प्रकाशकतया तत्कारणस्याज्ञानस्य साक्षाद् द्रष्टा । घटादिवल्लिङ्गदेहः साक्षिभास्यतया दृश्यो दर्शनकर्मैवास्ति । त्वमेतत्संसर्गरहितत्वात्स्व-च्छदृगसि । स्फूर्तिरूपतया कस्यापि ज्ञानस्य कर्म्म न भवसि । अयन्त्वभ्रादिपदार्थवदत्यन्तचलतया न स्थायी । त्वन्तु स्थिरः, तद्भा-वाभावसाक्षितया नित्यकूटस्थोऽसि । विविधानेककलनारूपतयानेकोऽ-नेकावयवसमुदायो लिङ्गदेहोऽस्ति । त्वं सर्वावस्थासु साक्षिरूपेण सोऽहमिति प्रत्यभिज्ञायमानत्वादेकोऽसि । अतस्त्वं तस्माल्लिङ्गदेहा-द्भिन्नोऽतीवविलक्षणः शुद्धं देहद्वयतद्धर्माऽसंस्पृष्टतया निर्मलमात्मतत्त्वं प्रत्यगात्मस्वरूपम् "असंगो ह्ययं पुरुषः" (४ । ३ । १४) "असंगो नहि सज्जते" ( बृ० ४ । ४ । २२ ) "सपर्यगाच्छुक्रमकायमव्रणम्" ( ई० ८ ) "अप्राणो ह्यमनाः शुभ्रः" ( मुण्ड० २ । १ । २ । ) इत्यादिनिगमकदम्बैर्विद्धि, जानीहीत्यर्थः ॥ ४३ ॥

**धीधर्माणां भ्रमजनिधियां साक्षिणः सिद्धिरिष्टा**
**तत्प्रत्यक्षं न हि करणजं ह्यान्तरत्वादमीषाम् ।**
**भावाभावौ सकलमनसां वेत्ति साक्ष्येव तस्माद्**
**ज्ञेयो भिन्नः सकलकरणात्प्रत्यगात्माऽनुभूत्या ४४**

स्यादेतत्, यदि कश्चित्साक्षी देहद्वयविलक्षणः सिद्ध्येत्, प्रमा-त्रादिचतुष्टयेन समस्तव्यवहारसंभवात्, साक्षिकल्पनां विनाऽनुपपत्त्य-भावात्, साक्षिस्वरूपानिरूपणाच्च । तथाहि—न तावज्जीवान्तर्गतः साक्षी, तथात्वे प्रमातैवासौ भवेत् । नहि साक्षित्वं नामापरमस्ति । ब्रह्मान्तर्भावे तु तस्य श्रुत्यैकसमधिगम्यत्वात् संसारसमयेऽनाविर्भा-वाच्च । साक्षिप्रत्यक्षं नाम व्यवहाराङ्गत्वेन वेदान्तवादपरिकल्पितं न सिद्ध्येत् । यतः सकलकरणगोचरत्वाच्च न प्रत्यक्षगम्यः । नाप्यागमो

जीवब्रह्मणोरन्यतरस्य तद्व्यतिरिक्तस्य साक्षित्वं प्रतिपादयन् दृश्यते। तस्मात्प्रमाणाभावान्न साक्षी नाम कश्चिदस्तीत्याशङ्क्य सर्वैरपि साक्षिस्वरूपमभ्युपगन्तव्यम्, अन्यथा व्यवहारानुपपत्तेरित्यभिप्रेत्याह—धीधर्माणामिति। ज्ञानरागद्वेषप्रयत्नादीनां बुद्धिधर्माणां तावदनुभूयमानत्वमुपलभ्यते। न च तेषां प्रमाणगम्यत्वमस्ति। प्रत्यक्षं तावद् द्विविधमभ्युपगतं बाह्यमाभ्यन्तरञ्च। न तावद् बाह्यं प्रत्यक्षं ज्ञानादिग्राहकम्, तस्यात्मनि प्रवृत्त्यभावादित्यभिप्रेत्याह—तत्प्रत्यक्षमिति। अमीषां बुद्धिधर्माणां हि परैरपि आत्मधर्मत्वाभ्युपगमेनान्तरत्वं स्वीकृतमिति प्रसिद्धिद्योतनाय हिशब्दः। न च मनोजन्यप्रत्यक्षत्वमपि तेषां सम्भवति, वृत्तिविषयवृत्त्यन्तरानङ्गीकारात्, कर्मकर्तृविरोधप्रसङ्गाच्च; विमता धीधर्माः स्वातिरिक्तग्राहकग्राह्याः, अचेतनत्वाच्छब्दादिवदित्याद्यनुमानाच्च। परिशेषात्साक्षिप्रत्यक्षगम्यत्वमेव तेषामित्यभिप्रेत्याह—साक्षिण इति। साक्षादेतद्द्रष्टृभूतात्साक्षिणः सकाशादेतेषां सिद्धिरिष्टा विद्वद्भिरिति शेषः। किञ्च, भ्रमजनिधियां भ्रान्तिजनितप्रत्ययानां सिद्धिर्न तावत्प्रमाणात्, तेषां प्रमाणबाध्यतया विरोधात्, न स्वतः, तेषां परतस्त्वस्वीकारात्। परिशेषात्साक्षिण एव तत्सिद्धिः। किञ्च, सकलमनसां समस्तबुद्धिवृत्तीनां भावाभावौ आविर्भावतिरोभावौ साक्ष्येव वेत्ति। तस्मात्सकलकरणात् समस्तलिङ्गशरीरात् प्रत्यगात्मा त्वंपदार्थो भिन्नः अत्यन्तविलक्षणोऽनुभूत्या स्वप्रकाशमहिम्ना स्वात्मत्वेनैव ज्ञेयो बोद्धव्य इत्यर्थः। अतस्तत्त्वमसीति वाक्यप्रमाणज्ञानादज्ञानाभिभवे सति स एव साक्षी संसारोपमर्देनावभासमानो ब्रह्मभाव इत्युच्यते। साक्षिरूपस्य स्वयंप्रकाशत्वेन प्रत्यक्षत्वाच्च न प्रमाणवेद्यत्वप्रसङ्गः। तस्मात्प्रमातृप्रमाणप्रमेयप्रमितिभेदविभ्रमाधिष्ठानतया तत्साक्षिणः प्रतिभासतस्तदन्तर्भावेऽपि वस्तुतो ब्रह्मत्वमेवेति न किञ्चिदनुपपन्नमिति भावः॥ ४४॥

**ज्ञानं ज्ञेयं युगपदितरः सप्रमात्रेष साक्षी**
**स्वीयस्फूर्त्या व्यवहृतिभुवि स्फोरयेत्स्वप्रकाशः ।**
**स्वप्ने सर्वं सविषयधियं स्फोरयन्नात्मभासा**
**सूक्ष्मान्भोगान्निरवधिदृशा भासयंश्चावसेयः ।४५।**

जाग्रत्स्वप्नावस्थयोः साधकत्वेन विविच्य साक्षिणं पुनर्दर्शयति—ज्ञानमिति । ज्ञानं जानातीति क्रिया । ज्ञेयं तत्कर्मतया ज्ञातताश्रयो घटादिः । प्रमाता जानामीति क्रियाश्रयान्तःकरणावच्छिन्नं चैतन्यम् । एतत्त्रयं ज्ञानं ज्ञेयं सप्रमातृ प्रमात्रा सह वर्तते इति सप्रमातृ । एष साक्षी इतरस्तेभ्यो विलक्षण एव सन् युगपदेकदैव स्वीयस्फूर्त्या स्वरूपप्रकाशेन स्वयंप्रकाश इतरनिरपेक्षप्रकाशो व्यवहृतिभुवि व्यवहारभूमौ जाग्रद्दशायां स्फोरयेत् प्रकाशयतीत्यर्थः । तदुक्तम्—

"कर्त्तारञ्च क्रियां तद्वद् व्यावृत्तविषयानपि* ।
स्फोरयेदेकयत्नेन योऽसौ साक्ष्यत्र चिद्वपुः ॥" इति ।

**स्वप्ने** स्वप्नावस्थायां **सर्वं सविषयधियं** विषयसहितं तज्ज्ञानञ्चात्मभासा स्वरूपचैतन्येन प्रकाशयन् सूक्ष्मान् वासनामयान् भोगान् शब्दादीन् भोग्यत्वाकारेण भासयन् स्वीकुर्वन्निवापरिच्छिन्नदृष्ट्याऽवसेयो निश्चेतव्यः "अत्रायं पुरुषः स्वयंज्योतिर्भवति" (बृ० ४ । ३ । १४ ) इति श्रुतेरित्यर्थः ॥ ४५ ॥

**सुप्तौ सर्वं व्रजति विलयं मातृमानादि विश्वं**
**द्रष्टुर्दृष्टेर्न भवति लयो नाशशून्यत्वहेतोः ।**

---

* व्यवहारविषयानपि ।

**तत्राज्ञानं सकलविलयं स्फोरयन्बोधरूपो**
**निश्चेतव्यः सुखवपुरयं प्रत्यगात्मा तुरीयः ॥**

जाग्रत्स्वप्नावस्थयोः सर्वबुद्धिवृत्त्यवभासकतया साक्षिणं प्रसाध्य सुप्तौ तल्लयप्रकाशकत्वेन तं साधयति—सुप्ताविति। सुप्त्यवस्थायां सर्वं मातृमानादि विश्वं स्वकारणभूताज्ञाने विलयं व्रजति। तत्र सर्वबुद्धिवृत्तिविलयावभासकत्वेन द्रष्टुः स्वरूपभूताया दृष्टेर्न विलयो भवति, तन्नाशस्य ससाक्षिकत्वे साक्ष्यन्तरकल्पने तस्यापि तादवस्थ्यादनवस्थानादाद्यस्यैवावस्थानात्। निःसाक्षिकत्वे तु साधकाभावादेव साक्षिविनाशासिद्धेः। प्रत्युत "नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात्" (बृ० ४।३।२३) "अविनाशी वा अरेऽयमात्मा।" (बृ० ४।५।१४) इत्याद्याः शतं श्रुतयोऽपि तस्य नित्यतां गमयन्तीत्यर्थः। यद्यात्मनोऽपि नाशः स्यात्तर्हि सुषुप्तेस्तत्सुखस्य चानुभवितुरभावादुत्थितस्य 'सुखमहमस्वाप्सम्' इति स्वापसुखयोः स्मरणं न स्यादिति तत्परामर्शान्यथानुपपत्त्या तत्राज्ञानानुभवितृत्वेन साक्षिणं दर्शयति—तत्रेति। सकलस्य स्थूलसूक्ष्मकार्यजातस्य विलयो यस्मिंस्तदज्ञानं कर्मीभूतं भासयन्ननुभवन् नित्यज्ञानघनो जागरे तत्परामर्शान्यथानुपपत्त्या निश्चेतव्यः—सर्वविलयभासकत्वेन स्वयं निरतिशयानन्दरूपः प्रत्यगात्मा तुरीयरूपोऽवस्थात्रयानुगतभानरूपतया त्वंपदार्थोऽसङ्गचिद्रूपत्वेनाध्यवसेय इत्यर्थः। नन्ववस्थात्रयसम्बन्धस्य सर्वानुभवसिद्धत्वात् कथमस्यासंगत्वमिति शङ्कां परिजिहीर्षुः "शिवमद्वैतं चतुर्थं मन्यन्ते" (माण्डू० ७) इति श्रुतिसिद्धमर्थमवस्थात्रयानुगतत्वेनाप्यसंगत्वरूपं दर्शयति—तुरीय इति। अयं भावः—यद्यात्मन्यवस्थात्रयं यौगपद्येनानुवर्त्तेत, दहनपचनप्रकाशनशक्तय इव वह्नौ, यदि वा एकावस्थानुभूताः कतिपये वा धर्मा अवस्थान्तरेऽनुभूयेरन्, यथा बाल्याद्यवस्थानुभूता रूपगोत्रजातिप्रभृतयः शरीरयौवनेऽप्यनुभूयन्ते,

तदा भवेदात्मा तत्सङ्गी। न त्वेवम् , स्वप्नदृश्यमात्रस्य जागरे बाधाद् , जाग्रद्दृश्यमात्रस्य च स्वप्ने तिरोधानात् , तदुभयदृश्यस्य सुषुप्तौ विलयात् , सुषुप्तेश्च तयोरप्रतिभासाद् द्रष्टैव केवलोऽवस्थात्रयेऽनुवर्त्तमानः प्रत्यभिज्ञयैकोऽनुभूयते। तदियमनुवर्त्तमानैकवस्तुनि पर्यायेण प्रतिभासमानस्यानेकस्यैककाले अपरस्याननुवृत्तिर्मन्दान्धकारे नदीव, प्रावलम्बिजरल्लतायां क्रमारोपितवक्रकाष्ठतरुमूलभूप्रदरभुजङ्गादीनामिव, अवस्थात्रयस्य मिथ्यात्वमवगमयतीति हेतोरध्यस्तैः पदार्थैरधिष्ठानस्यासंस्पर्शादसङ्गत्वसिद्धिरिति। "स यत्तत्र किञ्चित् पश्यत्यनन्वागतस्तेन भवति" "असंगो ह्ययं पुरुषः (बृ० ४ । ३ । १५) इति श्रुतिरप्यसंगत्वादननुवृत्तिं दर्शयन्ती अमुमेवार्थं द्रढयति "असंगो नहि सज्जते" (बृ० ४ । ४ २२ ) इति च श्रुत्यन्तरम्। तथा चावस्थात्रयाधिष्ठानत्वाद् बाधकान्तरापरिशेषाच्चात्मनः सत्यत्वं सिद्धमिति ॥ ४६ ॥

**देहादीन्योऽनृतजडमयान् कल्पितानात्मनीमान्**
**स्वीयस्फूर्त्त्याऽखिलहृदि गतः स्फोरयन्नेव भाति।**
**मानाकाङ्क्षा कथमिह भवेत्स्वप्रकाशे ततोऽसौ**
**ज्ञातव्योऽन्तः सकलधिषणावृत्तिसाक्षी चिदात्मा ४७**

नन्ववस्थात्रयानुगतस्तदवभासकश्च प्रत्यगात्मा प्रमाणमन्तरेण कथं सिद्ध्येत् ? नहि प्रमाणविरहिणो नरशृङ्गादेः सत्त्वं पश्यामः, तथा च साक्षिरूपत्वंपदार्थसिद्धये प्रमाणमवश्यं वक्तव्यमित्याशङ्क्य, अप्रकाशस्वभावस्य जडवस्तुन एव प्रकाशकान्तरापेक्षा, न स्वप्रकाशस्वभावस्यात्मन इत्याशयेनाह—देहादीनिति। योऽखिलहृदि गत एक एवानिर्वाच्याऽविद्याकार्याऽनृतजडमयान् स्वस्वरूपे एव कल्पितानिमान् साक्षिप्रत्यक्षसिद्धान् देहादीन् सकलविकारजातान् स्वरूपचैतन्येन स्फोरयन्नेव प्रकाशते, तस्मिन्निहावेद्यत्वे सत्यपरोक्षस्वभावे

स्वप्रकाशे इतरनिरपेक्षप्रकाशे मानप्रवृत्तेः प्राक्तत्साधकत्वेन प्रकाशमाने इति यावत् स्वस्वरूपपरिच्छित्तिं प्रति कथं प्रमाणापेक्षेति योजना। अयं भावः—अन्तःकरणवृत्तिप्रतिबिम्बितं हि चैतन्यं प्रमाणम्, वृत्तिमदन्तःकरणप्रतिबिम्बितं प्रमातृ, तदुभयं प्रमेयावभाससमये नानवभासमानं भवति। तथा सति प्रमेयस्यैव स्वतः स्फुरणशङ्कापातादिदोषप्रसङ्गात्। तदवभासश्च न प्रमात्रन्तरात् प्रमाणान्तराद्वा भवति, अनवस्थाप्रसङ्गादनुपपत्तेश्च। इत्यतः स्वप्रकाशतयैव प्रमातृप्रमाणप्रमेयानामवभासकस्यात्मनः सिद्धिरिति स्वप्रकाशे साक्षिणि किं प्रमाणमिति प्रश्न एव दुर्घट इति। तस्मादन्तः सर्वान्तरत्वेन सकलबुद्धिवृत्तिसाक्षितया चिदात्माऽसौ त्वंपदार्थो ज्ञातव्य इत्यर्थः ॥ ४७ ॥

**नन्वस्त्वेवं प्रतिवपुरयं साक्ष्यतोऽद्वैतहानि-**
**र्नह्येकोऽयं सकलवपुषां भासकोऽस्त्यद्वितीयः।**
**प्रत्यक्षेण त्वमहमिति नः सर्वदेहेषु भिन्नो**
**भात्यात्माऽयं सकलमतितः शास्त्रतो युक्तितोऽपि ४८**

सकलविश्वगतप्रमात्रादीनामवभासकः साक्षी एक एवेत्युक्तम्, 'अखिलहृदि गतः' इति। अत्र देहादिव्यतिरिक्तसाक्षिस्वरूपमङ्गीकृत्य तदैक्यमाक्षिपति—नन्विति। अस्त्वेवं देहादिभ्यो व्यतिरिक्तसाक्षिसिद्धिर्भवतु, न तत्र विवदामहे। सर्वस्मिञ्जगति साक्षिण ऐक्यन्तु सर्वलोकशास्त्रविरुद्धं कथं स्वीकृतम्? यतः प्रतिवपुः प्रतिशरीरमयं लोकबुद्धिगतः साक्षी भिन्न एवावभासते। किं ततस्तत्राह—अत इति। अद्वैत इति च्छेदः। अतः साक्षिभेदादद्वैतहानिः स्यात्। ननु कथमद्वैतहानिरेकस्यैव साक्षिणः सर्वावभासकस्य स्वीकारादित्याशङ्क्य तथा स्वीकार एव दुर्घट इत्याह—नहीति। एकोऽयमस्मदादिबुद्धिगतः सकलवपुषां सकलस्थूलसूक्ष्मदेहानां ब्रह्मादिस्तम्बपर्यन्तानां

भासको नह्यस्ति, येनाद्वितीय एव स्यात्, तेन चाद्वैतहानिर्न स्यात् । किञ्च, साक्ष्यैक्यवादी प्रत्यक्षानुमानागमविरुद्धं साक्ष्येकत्वं कथं स्वीकरोति ? यतो नोऽस्माकं प्रत्यक्षेण सर्वदेहेषु भिन्नोऽयमात्मा भाति, सकलमतितः सर्वप्राणिनां पृथक् पृथग्विनिश्चयात्; शास्त्रतः नानाधिकारसाधनादिप्रतिपादकवेदादपि; युक्तित एकस्मिन् सर्वदेहसाक्षिणि चैत्रावगते वस्तुनि सर्वजीवानामवगतिः स्यादित्याद्यनुपपत्तिरूपान्नयादिति योजना ॥ ४८ ॥

**नेयं भ्रान्तिर्निखिलजनताव्याहतप्रत्ययत्वाद्**
**धर्माधर्मावगतिकरणश्रौतवाक्यप्रसिद्धेः ।**
**बद्धो मुक्तः कुमतिरनघो दुःख्यदुःखीति भानं**
**सिद्ध्येदेतत्कथमपि न ते साक्षिभेदं विनाऽद्धा ॥ ४९ ॥**

ननु शास्त्रैकसमधिगम्ये साक्षिणि भेदप्रतिभासो भ्रम एव स्यादित्याशङ्क्य कारणदोषबाधकप्रत्ययानुपलम्भान्मैवमित्याह—नेयमिति । इयं साक्षिभेदप्रतीतिर्न भ्रान्तिः, कुतो निखिलजनताव्याहतप्रत्ययत्वात्—जनानां शास्त्राधिकारिणां समूहो जनता निखिला या जनता तस्या अव्याहतप्रत्ययत्वाद्, अबाधितप्रतीतिभावात् । किञ्च, धर्माधर्मयोरवगतिर्ज्ञानमात्मज्ञानञ्च तत्करणानि श्रौतवाक्यानि तेषु प्रसिद्धेः । तथा च शास्त्रेऽपि नानाधिकारिकनानासाधनाद्युपदेशके साक्षिभेदः सिद्ध इति न तत्प्रत्ययो भ्रम इत्यर्थः । अपि चात्रानुमानेनाप्यात्मभेदमवगच्छामः । तथा हि—प्रतिवादिशरीरं वादिशरीरगतात्मनो भोगायतनं न भवति, वादिशरीरादन्यशरीरत्वात्, गतप्राणशरीरवत् । तथा विमतानि शरीराणि स्वसंख्यासंख्येयात्मभिरात्मवन्ति, शरीरव्यक्तित्वात्, प्रतिवादिशरीरवदिति । तथा देवतिर्यङ्मनुष्यागतानि सुखदुःखादीनि भिन्नाश्रयाणि, युगपद्वर्तमानविरुद्धानेकधर्मत्वात्,

सन्तापशैत्यादिवद्, इत्यनुमानसिद्धमर्थमभिप्रेत्याह—बद्ध इति। कश्चिद्बद्धः संसारी, कश्चिन्मुक्तः स्वरूपावस्थितिमान्, कश्चित्कुमतिः पापाचरणशीलः, कश्चिदनघः सर्वदोषविनिर्मुक्तः धर्माचरणशीलः, कश्चिद् दुःखी पापफलभोक्ता, कश्चिददुःखी धर्मफलभोक्तेत्यादि-भेदप्रतिभासः कथञ्चनापि तव मते साक्षिभेदं विना अद्धा साक्षाद्युक्तियुक्ततया न सिद्ध्येदित्यर्थः ॥ ४९ ॥

**आत्मैकत्वे निखिलवपुषां व्यापृतेः संकरः स्याद्**
**नह्येकेनावगत इतरो वेत्ति भुङ्क्तेऽन्यभुक्तम् ।**
**नान्योऽन्यन्ते विविधमतिगाञ्ज्ञातुमन्तः समर्था**
**धर्मान् जीवास्तत इह कथं सम्मतन्ते तदैक्यम् ॥५०॥**

सर्वशरीराणामेकचेतनाधिष्ठेयत्वे सति अशेषशरीरगतसुख-दुःखाद्यनुसन्धानप्रसंगः, न च तथा दृश्यते। ततश्चान्योन्यभोक्त्र्-नुसन्धानमन्तरेण प्रतिशरीरं व्यवस्थितसुखदुःखादिभोगोऽनुपपद्यमानो भोक्तृभेदं कल्पयतीत्यर्थापत्तिरप्यात्मभेदं साधयतीत्याह—आत्मेति। आत्मन एकत्वे निखिलदेहानां तत्स्थजीवानां व्यवहारस्य संकरोऽव्यवस्थितिरेव स्यात्। न चैतद् दृष्टम्। नह्येकेन देवदत्तेनावगते वस्तुनि इतरश्चैत्रस्तद्वस्तु वेत्ति। अन्येन विष्णुशर्मणा भुक्तं वाऽन्यश्चन्द्रशर्मा भुङ्क्ते। ते जीवा देवदत्तादयोऽन्योऽन्यं विविधमतिगान् परस्परं बुद्धिनिष्ठान् धर्मान् सुखदुःखादीन् ज्ञातुमन्तः साक्षात्कर्तुं समर्था नहि भवन्ति। ततो भेदव्यवहारान्यथानुपपत्त्या विरोधात्तदैक्यं साक्षिणः एकत्वं तवेह शास्त्रार्थनिर्णये कथं केन प्रकारेण कया युक्त्या सम्मतम्? इति वदेति शेषः ॥ ५० ॥

**शास्त्रं नानाविधफलपरं बोधयेत् कर्म भिन्नं**
**नात्मैकत्वे फलति विविधानेककर्त्तृस्थमेवम्।**
**प्रत्यक्षाद्यैरवगतमिमं नात्मभेदं प्रमाष्टुं**
**सामर्थ्यन्ते श्रुतिरपि तथा नात्मतत्त्वैकनिष्ठा ॥५१**

किञ्च, विरुद्धानेकफलोद्देशेनैककालानुष्ठेयानेकसाधनविधायि शास्त्रं न नियोज्यभेदमन्तरेणावकल्पते। नहि चेतनादन्यस्य नियोज्यत्वमस्ति। ततश्च श्रुतार्थापत्तिरपि चेतनभेदं गमयतीत्याह— शास्त्रमिति। नानाविधफलपरमनेकाधिकारिणां पृथक् पृथक् कर्म अनेकप्रकारफलकमुपदिशच्छास्त्रं वेदस्तन्मूलकस्मृत्यादिरूपञ्च विविध·कामनाभेदेनानेकेऽधिकारिणस्तत्रस्थं तेषु बोधकतया तिष्ठतीति तथा। शास्त्रमात्मन एकत्वे न फलति फलवन्न भवति। तथा चाध्ययनविधिविरोधादपि साद्येकत्वमभ्युपगन्तुं न युक्तमित्यर्थः। तदेवं प्रत्यक्षानुमानार्थापत्तिभिः प्रतिशरीरमात्मभेदो निश्चित इत्याह—प्रत्यक्षाद्यैरिति। इमं प्रत्यक्षादिप्रमाणावगतमात्मभेदं प्रमार्ष्टुमपह्नोतुं तव प्रमाणकुशलस्यापि न सामर्थ्यम्। नहि प्रमाणकुशलाः प्रमाणविरुद्धं प्रतिपादयितुं शक्नुवन्ति, अन्यथा प्रमाणकुशलत्वव्याघातादिति भावः।

ननु नहि वयं स्वकपोलकल्पनया साद्येकत्वं प्रतिपादयामः, किन्तु यथा शास्त्रमिति कथं तत्र तवानुपपत्तिः? इति तत्राह—श्रुतिरपीति। एकात्म्यप्रतिपादकं शास्त्रमपि प्रत्यक्षादिप्रमाणविरोधात् अपापश्लोकश्रवणवदर्थवाद इति न त्वैक्यपरमित्यर्थः ॥ ५१ ॥

**नैवं श्रौते निरवधिपदे प्रत्यगात्मैक्यतत्त्वे**
**शुष्कैस्तर्कैः कथमपि भिदा नैव सिद्ध्येदभिन्ने।**
**एको देवोऽखिलमतिपतिर्गूढ एवाद्वितीयो**
**नान्योऽतोऽस्तीत्यपि निगमवागात्मभेदं निराह ५२**

स्यादेतत्, यदि वेदान्तप्रमाणमात्रैकगम्ये प्रत्यगात्मतत्त्वे शुष्कतर्कप्रवेशः स्यात्। नह्यतीन्द्रिये वस्तुनि लौकिकप्रत्यक्षादिभिरनुपपत्तिः सम्भावयितुं शक्या, श्रुतिस्त्वन्यथासिद्धेत्याशयेन परिहरति—मैवमिति। श्रौते श्रुतिमात्रैकगम्ये त्रिविधपरिच्छेदशून्ये वस्तुनि सर्वान्तरत्वादखण्डैकरसे प्रत्यगात्मतत्त्वे कथञ्चनापि अभिन्ने स्वभावत एवाद्वितीयत्वाद्भेदवर्जिते शुष्कैस्तर्कैर्भिदा नैव सिद्ध्येत्, "नैषा तर्केण मतिरापनेया" (काठ० २। ९) "तर्काप्रतिष्ठानात्" (ब्र० सू० २।१।११) "अचिन्त्याः खलु ये भावा न तांस्तर्केण भावयेत्" "नाप्रतिष्ठिततर्केण गम्भीरार्थस्य निश्चयः" इति श्रुतिन्यायस्मृतिभ्यः। तदैक्यप्रतिपादिका भेदप्रतिषेधिकाश्च सन्ति सहस्रशः श्रुतय इत्याह—एक इति। "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा" (श्वे० ६। ११) "स वा अयं पुरुषः सर्वासु पुर्षु पुरिशयः" (बृ० २।५।१८) इति "नान्योऽतोऽस्ति द्रष्टा" (बृ० ३। ७। २३) "नेह नानाऽस्ति किञ्चन" (बृ० ४। ४। १९) इत्यादिशास्त्रप्रामाण्यादैकात्म्यनिश्चयात्। न चायमर्थवादः, विधिप्रकरणे श्रवणाभावात्। नापि विधिः कल्प्यः, "तमेव विदित्वातिमृत्युमेति" (श्वे० ३। ८) इत्यैकात्म्यज्ञानेन परमपुरुषार्थश्रवणात्। न च प्रमाणान्तरविरोधादेवार्थवादत्वम्। किन्त्वर्थवादस्य सतः प्रमाणान्तरविरोधे सति अन्यपरत्वादप्रामाण्यम्। नहि तत्परवाक्यस्य प्रमाणान्तरविरोधनिमित्तमप्रामाण्यं क्वचिद् दृष्टमिति भावः। निगमवाग्वेदान्तवाणी आत्मभेदं निराह निराचष्टे इत्यर्थः ॥ ५२ ॥

**भेदाभेदौ पृथगधिगतौ विद्ययाऽविद्यया तौ**
**यत्र द्वैतं भ्रमवशगतः पश्यतीवेति मिथ्या।**
**भेदं श्रौतं वदति वचनं भ्रान्तिकाले तथान्या**
**यत्र त्वस्येत्यपि निगमगीर्बोधकाले निराह ॥५३॥**

नह्येकात्मविज्ञानस्य भेदज्ञानेन विरोधोऽस्ति, विद्याऽविद्याविषयत्वेन प्रामाण्यस्य व्यवस्थितत्वादित्याह—भेदाऽभेदाविति । "दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता" ( कठ० २ । ४ ) इति श्रुत्या विद्या वेदान्तप्रमाणजन्या प्रमा, अविद्याऽनाद्यनिर्वाच्याध्यासहेतुरज्ञानम्, ताभ्यां पृथक्तयाऽधिगतौ भेदाऽभेदौ । अविद्यया भेदोऽधिगतः, विद्ययाऽभेदोऽधिगत इति विवेकः । तथा च श्रुतिः—' यत्र हि द्वैतमिव भवति" (बृ० २ । ४ । १४) इत्यत्रेवशब्देन द्वैतप्रपञ्चस्य मिथ्यात्वमभिधाय "तदितर इतरं पश्यति" (बृ०२।४।१४) इति भ्रान्तिकाले तस्यामेवावस्थायां भ्रमवशगतोऽध्यासव्याप्तः पुरुषो मृषा भेदं पश्यतीति भ्रान्तिसिद्धमनुवदतीत्यर्थः । विद्याविषये च "यत्र त्वस्य सर्वमात्मैवाऽभूत्" ( बृ० २ । ४ । १४ ) इति श्रुतिः सकलव्यवहाराभावं शुद्धबोधरूपेणावस्थानञ्च वदन्ती ' तत्केन कं पश्येत् " ( बृ० २ । ४ । १४ ) इति सकलभेदं निषेधतीत्यर्थः ॥ ५३ ॥

**प्रत्यक्षेण त्वमहमिति यन्नात्मभेदावगाहि**
**ज्ञानं किन्तु भ्रमतिमिरजानात्मभेदावगाहि ।**
**नात्मानं तत्क्षमत उदितं वीक्षितुं वा कटाक्षात्**
**नास्मिन्भेदं ह्यनुमितिरपि प्रत्यनीकानुमानात्॥ ५४॥**

यत्तूक्तं प्रत्यक्षेण त्वम्, अहम्, असाविति भेदमीक्षामहे इति तत्राह—प्रत्यक्षेणेति । त्वमहमित्यादिप्रत्यक्षं नात्मभेदावगाहि, आत्मान्तरस्य बाह्येन्द्रियागोचरत्वाभ्युपगमात्, मनसश्च स्वात्मनोऽन्यत्र प्रवृत्त्यनङ्गीकारात्, तत्त्वदर्शनप्रद्वेषितया साक्षिप्रत्यक्षानाश्रयणाच्च आत्मनः प्रत्यक्तत्त्वस्य भेदं न विषयीकरोतीत्यर्थः । ननु तर्हि प्रत्यक्षप्रमाणं निर्विषयमेव स्यादिति नेत्याह—किन्त्विति । किन्तु भ्रमोऽध्यासः स एव तिमिरमिव यथास्थितं वस्तु आवृत्य अन्यथा ग्रहणात्मकत्वात् तज्जन्यो

योऽनात्मभेदो देहाद्युपाधिभेदस्तदवगाहि तमेव विषयीकरोतीत्यात्मानं प्रत्यक्तत्त्वमुदितं यथोक्तं कटाक्षादपि वीक्षितुं लेशेनापि विषयीकर्त्तुं तत्प्रत्यक्षं न क्षमते, भेदज्ञानस्य प्रतियोग्यादिज्ञानपूर्वकत्वात्। प्रतियोग्याद्यात्मनोऽतीन्द्रियत्वात्प्रत्यक्षेण ग्रहीतुमशक्यतया नात्मभेदावगाहित्वं प्रत्यक्षस्येति भावः। नापि त्वदुक्तानुमानगोचरता तद्भेदस्येत्याह—नास्मिन्निति। अस्मिन्नात्मनि भेदं नानुमितिरप्यनुमानमपि वीक्षितुं क्षमते इत्यत्राप्यनुषज्यते। तत्र हेतुः प्रत्यनीकानुमानात् तत्प्रतिद्वन्द्विरूपानुमानसद्भावादित्यर्थः। तथाहि—विमतानि शरीराणि प्रतिवाद्यात्मनैवात्मवन्ति, शरीरव्यक्तित्वात्; प्रतिवादिशरीरवत्। न चात्मनां सर्वगतत्वात्प्रतिवाद्यात्मनः सर्वशरीरसंयोगात्सर्वगतात्मवादिनः सर्वशरीराणां प्रतिवाद्यात्मना आत्मवत्त्वं सिद्धमेव साध्यते इति वाच्यम्, सर्वशरीराणामेकचेतनं प्रति भोगायतनत्वस्यैव सिसाधयिषितत्वात्; एकस्यैवात्मान्तराभावस्य परेषामनिष्टस्य साध्यत्वाच्चेत्यर्थः॥ ५४॥

**बुद्धेर्धर्माः सुखकृतिसुखा नात्मनो निर्गुणस्य**
**श्रेयोबन्धौ जननमरणे कल्पिता माययैते।**
**बुद्धिद्वारा विकृतवपुषि स्वात्मतत्त्वे विशुद्धे**
**नह्यध्यस्तैः क्षतिरथ गुणः खल्वधिष्ठानतत्त्वे॥ ५५॥**

यदपीदमुक्तं देवतिर्यङ्मनुष्यादिगतसुखदुःखादीनि भिन्नाश्रयाणि, विरुद्धानेकधर्मत्वादिति। तत्र किमनेकाश्रयत्वमात्रं साध्यते? किं वाऽनेकात्माश्रयत्वमिति? आद्ये सिद्धसाधनम्, अन्तःकरणानेकत्वात्; तदाश्रयत्वाभ्युपगमाच्च सुखदुःखादीनामिति। द्वितीये साध्यविकलो दृष्टान्तः, क्वचिदप्यनेकात्माश्रयधर्मासिद्धेरित्याशयेनाह—बुद्धेरिति। सुखादयो बुद्धेरेव धर्माः, न तु निर्गुणस्यात्मतत्त्वस्य,

तस्य निर्द्धर्मकत्वात् । "कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा ।" (बृ० १।६।३) इत्याद्युपक्रम्य "सर्वं मन एव" (बृ० १ । ६ । ३) इति श्रुतेः । "इच्छा द्वेषः सुखं दुःखम्" (गी० १३ । ६) इत्यादिस्मृतेश्च । श्रेयोबन्धौ ज्ञानाज्ञानप्रयुक्तौ नैवात्मतत्त्वस्य । यद्यपि स्वाज्ञानेन प्रत्यगात्मतत्त्वे एव बुद्ध्यादिद्वारा बन्धोऽपि कल्पितस्तत्त्वज्ञानेन तद्बाधे स्वस्वरूपावस्थानलक्षणो मोक्षोऽपि प्रत्यक्तत्त्वस्यैवोपचर्यते । तथापि तस्य नित्यमुक्ततया बुद्ध्याद्याध्यासिकसम्बन्धतदभावाभ्यां तयोर्व्यवहारो न तु वस्तुतः प्रतीचस्तत्सम्बन्ध इत्याह—माययेति । मायया नित्यकूटस्थयाऽसंस्पृष्टेऽपि वस्तुनि अत्यन्तासम्भावितबन्धमोक्षादिभेदव्यवहारघटनापटीयस्या बुद्धिद्वारा बुद्ध्याद्युपाधिद्वारा अविकृतस्वरूपे स्वात्मतत्त्वे विशुद्धे वस्तुतो मायातत्कार्यसम्पर्कशून्ये एते सर्वे स्थूलसूक्ष्मशरीरगता धर्मा आरोपिताः । नन्वस्तु तर्हि मायिकविकारैरेव कौटस्थ्यभङ्ग इत्यत आह—नहीति । अध्यस्तैः कल्पितविकारैरधिष्ठानतत्त्वे मायातत्कार्याध्यासाधिष्ठाने खलु लोकप्रसिद्धोषररज्जुशुक्त्यादौ सलिलभुजङ्गरजताद्यध्यस्तैर्वस्तुभिरिव गुणस्तत्कृतातिशयाधानलक्षणः, अथ क्षतिस्तत्कृतदोषाधानलक्षणा विकृतिर्वा नह्यस्तीत्यर्थः । तदुक्तम्—"यत्र यदध्यासस्तत्कृतेन गुणेन दोषेण वाऽणुमात्रेण न स सम्बध्यते" (ब्र० सू० भा० १ । १।१) प्रतिवादिशरीरं वादिशरीरात्मनोर्भोगायतनं न भवति, वादिशरीरादन्यशरीरत्वाद्, गतप्राणशरीरवदिति । तत्र हेतुरप्रयोजकः, दृष्टान्तशरीरस्य प्राणसम्बन्धाभावादभोगायतनत्वं नान्यशरीरत्वादिति द्रष्टव्यम् ॥ ५५ ॥

**साक्षित्वेनाखिलजनधियां भानुवद्भासकोऽयं**
**बुद्धेर्भेदाद्द्विविधवपुषां व्यापृतेः सङ्करो नो ।**
**व्योमैकत्वे घटमठमुखोपाधिभेदाद्यथा खे**
**व्यापाराणां विविधकलना तद्वदत्रापि बोध्यम् ५६**

यत्तूक्तमैकात्म्ये सति सर्वत्रानुसन्धानप्रसङ्गात् तस्य चाभावाद् भोगव्यवस्थाऽनुपपद्यमाना आत्मभेदं कल्पयतीति। तत्र किमात्मस्वरूपस्य सर्वत्रानुसन्धानेन भवितव्यमित्युच्यते ? किं वा भोक्तॄणाम् ? इति विकल्प्य प्रथमे कल्पे उत्तरमाह—साक्षित्वेनेति। अखिलजन-बुद्धिवृत्तीनां सर्वचक्षुषां भानुवत्साक्षित्वेनावभासकोऽयं प्रत्यगात्मा स्वत एवापरोक्षरूपः। तथा च भवत्येव सर्वत्र साक्षिरूपेणात्मस्वरूप-स्यानुसन्धानं सर्वार्थानुसन्धानसमर्थसाक्षिणमन्तरेण व्यवहारानुप-पत्तेरिति भावः। द्वितीयस्योत्तरमाह—बुद्धेरिति। आत्मस्वरूप-स्यैकत्वेऽप्यन्तःकरणानामनेकत्वेन तदवच्छिन्नरूपाणां भोक्तॄणामने-कत्वादननुसन्धानोपपत्तेरनेकशरीरिणां व्यवहारसङ्करो नास्ती-त्यर्थः। तत्र दृष्टान्तमाह—व्योमैकत्व इति। यथाऽपवरकाकाशस्यै-कत्वेऽपि घटशरावादिरूपेणासङ्करव्यवहारविषयत्वं तद्वत्प्रकृतेऽपि बोध्यमित्यर्थः ॥ ५६ ॥

**तस्मात्सर्वा व्यवहृतिभिदा देहबुद्ध्यादिनिष्ठा**
**सिद्धा तेनाचलसुखघने नास्ति भेदावकाशः।**
**नह्यर्कादेर्मुकुरजलयोर्बिम्बनाद्भेद इष्टः**
**श्रौते तत्त्वेऽवगत इतरा बुद्धिरप्येति सर्वा ॥५७॥**

तस्माद्भोगव्यवस्थाऽनुपपत्तिरन्तःकरणभेदेनैवोपपन्नत्वाद्भोगव्यवस्था-या नात्मभेदं कल्पयतीति दृष्टार्थापत्तिं परिहरन् फलितमाह—तस्मादिति। यस्मात् सुखदुःखादयो बुद्ध्याद्युपाधिधर्मास्तस्याश्च प्रतिशरीरं भेद एव, तस्मात् सर्वा व्यवहृतिभिदा सर्वो लौकिकवैदिक-व्यवहारभेदो देहबुद्ध्याद्युपाधिनिष्ठा तत्रैवोपलभ्यमानतया अनात्म-धर्म एव भवति। तेन भेदस्यानात्मनिष्ठत्वहेतुना सैन्धवघनवत् स्वभा-वत एव निश्चलानन्दैकरसे प्रत्यगात्मनि भेदशङ्कावकाश एव नास्ती-

त्यर्थः । एतदेव दृष्टान्तेन द्रढयति—नहीति । अर्कादेर्जलदर्पणादौ प्रतिबिम्बनादुपाधिभेदेनानेकरूपेण भासमानस्यापि नहि तेन सूर्यादिर्वस्तुतो भिद्यते। तथाऽऽत्मतत्त्वमपि बुद्ध्याद्युपाधिभेदेनानेकत्वेन भासमानं न वस्तुतो भिद्यते । किञ्च, सर्वो भेदव्यवहारोऽज्ञानप्रयुक्तस्तत्त्वज्ञानपर्यन्त एवास्तीत्याह—श्रौत इति । तत्त्वमस्यादिवाक्यजन्यज्ञाननिवर्त्त्योऽज्ञानविषये प्रत्यगात्मनि साक्षात्कृते इतरा भेदव्यवहारगोचरा सर्वापि बुद्धिवृत्तिरप्येति मूलबाधेनैव बाधितत्वाद्विलयं प्राप्नोतीत्यर्थः ॥ ५७ ॥

**मिथ्याभेदं स्थिरचरवपुर्निह्नुमुद्दिश्य शास्त्रं**
**भिन्नं कर्म्मोपदिशति फले बद्धतृष्णं मनुष्यम् ।**
**दृष्ट्वा तस्मै न तु निगमगीर्भेदनिष्ठात्मनिष्ठा-**
**द्वाराऽद्वैते फलति सुमतिस्वान्तपद्मार्कभेयम्॥ ५८॥**

अत एवौपाधिकरूपाणामनेकत्वात्तेषु संसारप्रतिभासादनेकनियोज्यप्रसिद्धेरनेकफलोद्देशेन बहुसाधनविधानोपपत्तेर्न श्रुतार्थापत्तिविरोधोऽपीत्यभिप्रेत्याह—मिथ्येति । अनिर्वाच्या ज्ञानकार्यतया सदसद्भ्यां निर्वक्तुमशक्यं भेदं चराचरशरीरनिष्ठमनूद्य भिन्नाधिकारिकर्त्तृकं कर्म्म पृथक् पृथक् फले स्वर्गापवर्गादिरूपे बद्धा तृष्णा यस्य तं मनुष्यं कर्माद्यधिकारिणं दृष्ट्वा तस्मै शास्त्रमुपदिशति। न तु तावता भ्रान्तजनतोषहेतूपदेशमात्रेण निगमवाणी भेदनिष्ठेत्यध्यवसातुं शक्यम् । किन्तु सत्त्वशुद्धिहेतुकर्मोपासनोपदेशपरम्परया प्रत्यगात्मनिष्ठोत्पादनद्वारा अद्वैतेऽखण्डवस्तुनि फलवती भवति। यतो वेदवाणी सुष्ठुकर्माद्यनुष्ठानोपायेन शोधिता मतिरन्तःकरणं यस्य तस्य स्वान्तमेव मुकुलीकृतं पद्मं तस्य विकसने ब्रह्माभिमुखीकरणेऽर्कस्य सूर्यस्य भा प्रभा इयमिति योजना। फलवद्ब्रह्मसाक्षात्कारोत्पादनद्वारा ब्रह्मात्म्यैक्ये तात्पर्य्यवच्छास्त्रं

कथमज्ञानकार्यभेदविभ्रमे फलवत् स्यात् "यत्परः शब्दः स शब्दार्थः" इति न्यायेन भेदावबोधने नैव शास्त्रतात्पर्यमिति भावः ॥ ५८ ॥

**स्वप्ने द्रष्टा विविधरचनामेक एवाद्वितीयो**
**नानादेहान् स्थिरचरकलान् कल्पयित्वेक्षतेऽयम् ।**
**बन्धं मोक्षं जननमरणे ज्ञानमज्ञानमैक्यं**
**सत्यं स्वीयं त्यजति न कदा जागरे तद्वदेव ॥५९॥**

तस्मादात्मभेदे प्रमाणाभावादयुक्तत्वाच्च सर्वेषु शरीरेषु एक एवात्मा सिद्ध इतीममर्थं स्वप्नदृष्टान्तेन व्युत्पादयति—स्वप्न इति। यथा स्वप्नावस्थायामेक एवाद्वितीयो द्रष्टा नानादेहान् देवतिर्यङ्मनुष्यादिरूपान् चराचरात्मकान् कल्पयित्वा अयम्—स्वप्रकाशतया "अत्रायं पुरुषः स्वयंज्योतिर्भवति" ( बृ० ४ । ३ । १४ ) इति श्रुतिसिद्धः—विविधरचनां नानासंस्थानरूपां सृष्टिमीक्षते पश्यति। बन्धं कर्त्तृत्वाद्यध्यासरूपम्, मोक्षं तद्बाधेन स्वरूपावस्थानलक्षणम्, अर्थाद् बद्धं मुक्तञ्च; अपूर्वशरीरसम्बन्धरूपं जन्म, उपात्तदेहविच्छेदरूपं मरणम्, ज्ञानं स्वरूपसाक्षात्कारः, अज्ञानं स्वस्वरूपावरकम्, अर्थादज्ञं तत्त्वज्ञञ्च कल्पयन्निति शेषः। कल्पितनानादेहभेदेन विरुद्धव्यवहारान् पश्यन्नपि स्वीयमैक्यमेकत्वम्, सत्यं कालत्रयेप्यबाध्यम्, न कदाचन त्यजति। तद्वदेव तेनैव प्रकारेण जागरेऽज्ञानकार्यजाग्रदवस्थायामेकत्वापरित्यागेनैव कल्पितदेहभेदव्यवहारसिद्धिरप्यस्तीत्यर्थः ॥ ५९ ॥

**एको योगी विविधतनुषु व्यापृतिं भिन्नरूपां**
**कुर्वन्नैक्यं त्यजति न कदा तद्वदेवायमात्मा ।**
**शुद्धो बुद्धोप्यचल उदितोऽध्यस्तसाक्षी स्वभावं**
**कुर्वन्नानाव्यवहृतिमपि स्वात्मनो नो जहाति ॥६०॥**

यदपीदमुक्तं—शरीराणि स्वसंख्यासंख्येयात्मभिरात्मवन्ति, शरीरत्वात्, प्रतिवादिशरीरवदिति । तद्दूषयति—एक इति । एक एव योगी कायव्यूहदशायामनेकशरीरेषु भिन्नरूपां व्यापृतिं नानाविरुद्धचेष्टां कुर्वन्स्वात्मैकत्वं न कदापि त्यजति । तथा च शरीरत्वादिति हेतुरैकात्म्यविरोधात् कालात्ययापदिष्टश्चेति भावः । तथैवात्मा शुद्धस्तद्व्यवहारासंस्पृष्टः, बुद्धो ज्ञानघनः, अचलोऽक्रियः, अध्यस्तस्य सर्वस्यापि विश्वस्य साक्षी साक्षित्वेनैव सर्वव्यवहारावभासक उदितः । श्रुत्येति शेषः । आत्मनः स्वभावभूतमैक्यं नानाव्यवहृतिं विरुद्धानेकव्यवहारं कुर्वन्नपि साक्षित्वेनावभासयन्नपि नो जहाति न परित्यजतीत्यर्थः ॥ ६० ॥

**बुद्धेर्भेदाद् व्यवहृतिभिदा सर्वदेहेषु सिद्धा**
**नेयं प्रत्यक्सुखघनमजं वीक्षितुं स्यात्समर्था ।**
**वेदान्तानां विषयममृतं न प्रमाणान्तरैस्तं**
**ज्ञातुं शक्तस्तनुयुगमतिर्नित्यकूटस्थमेतम् ॥ ६१॥**

एवं साक्ष्यैक्यं वेदान्तैकसमधिगम्यं प्रमाणान्तरैः कटाक्षेणापि वीक्षितुमशक्यं चोपपादितमुपसंहरन् युगपद्विरुद्धव्यवहारान्यथानुपपत्त्यभावमाह—बुद्धेरिति । सर्वदेहेषु ब्रह्मादिस्थावरान्तेषु व्यवहारभिदा बुद्धेः प्रमातृत्वाद्युपाधिरूपाया भेदादेव सिद्धास्ति । इयं भिदा प्रत्यक्सुखघनं परप्रेमास्पदतया सर्वान्तरानन्दैकरसम्, अजं जन्मादिविक्रियाशून्यं वीक्षितुं लेशेनापि स्प्रष्टुं समर्था न स्यात् । किञ्च, वेदान्तानां तात्पर्यविषयममृतममृतवदास्वाद्यं मोक्षरूपं प्रमाणान्तरैः प्रत्यक्षादिरूपैर्वेदान्तातिरिक्तैस्तं नित्यकूटस्थं सर्वदा निर्विकारमेनं स्वत एवापरोक्षस्वभावं साक्षिणं तनुयुगे स्थूलसूक्ष्मशरीरद्वये आत्मत्वमतिर्यस्य स ज्ञातुमनुभवितुं शक्तः समर्थो न

भवतीति योजना। तथा च—भेदपरिच्छेदविभ्रमाभिभूतचेतस्तयाऽनाद्यनिर्वचनीयाऽविद्यया मोमुह्यमानो जन्तुः कथं प्रत्यगात्मैक्यं ज्ञातुं समर्थो भवेत्,

"इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत।
सर्वभूतानि संमोहं सर्गे यान्ति परन्तप!॥" (गी० ७। २७)

इति भगवद्वचनादिति भावः ॥ ६१ ॥

**मायाशक्तिर्निखिलकलनां साम्प्रतं वा विरुद्धां**
**स्वाधिष्ठाने चिति फलयुता दर्शयत्याविमोक्षम्।**
**नैल्यं व्योम्नि स्रजि विषधरो वार्यथा रश्मिपूगे**
**तद्वन्मिथ्याऽऽत्मनि जगदिदं कल्पितं स्वाप्नवच्च॥६२**

एकस्मिन्नद्वितीयेऽसंगोदासीनाकर्त्तृभोक्तृस्वभावतया सर्वव्यवहारानास्पदे प्रत्यगात्मतत्त्वेऽसम्भावितानेकद्वैतभेदव्यवहारप्रदर्शनहेतुमघटनघटनापटीयसीं शक्तिं सर्वविश्वकारणत्वेन प्रसिद्धां प्रदर्शयंस्तत्कार्यं विश्वं दृष्टान्तैः प्रदर्शयति—मायाशक्तिरिति। अत्यन्तासम्भावितप्रदर्शिनी मायाशक्तिश्चितो भेदाऽभेदाभ्यां निर्वक्तुमशक्यत्वेन शक्तिवत्परतन्त्रत्वेन च शक्तिः चिति फलयुता चैतन्याभासयुक्ता सती स्वस्याधिष्ठाने प्रत्यगात्मरूपे ब्रह्मणि साम्प्रतं सम्भावनार्हां विरुद्धामसम्भावितामखिलकलनां सकलव्यवहारकल्पनां दर्शयति—ऐन्द्रजालिकनटीव अविद्यमानामपि विद्यमानवद्रचयित्वा प्रत्यक्षादिव्यवहारगोचरयोग्यामापादयतीत्यर्थः। ननु तर्हि सर्वदैवं सति अनिर्मोक्षप्रसङ्ग इत्यत्राह—आविमोक्षमिति। स्वस्वरूपावस्थानलक्षणमोक्षपर्यन्तमेव तथा करोति। मोक्षे तु तत्त्वज्ञानबाधिता सती कालत्रयाभावप्रतियोगितया विलयं गच्छतीति भावः। यथा नैल्यं व्योम्नि कल्पितम्, यथा स्रजि पुष्पमालायां विषधरो भुजङ्गः, यथा

रश्मिसङ्गे मरुमरीचिकायां वार्जलं, यथा स्वप्नद्रष्टरि स्वाप्नं जगत्, तथा जगदिदं प्रत्यक्षादिभिरवगतं साक्षिचैतन्ये कल्पितमित्यर्थः । आद्येन दृष्टान्तेनाप्रत्यक्षेऽपि प्रत्यक्षादियोग्याध्यासः सम्भवतीति दर्शितम् । द्वितीयेनात्यन्तानुकूलेऽपि प्रतिकूलस्याध्यासः । तृतीयेन तदत्यन्ताभाववत्यपि तत्सत्त्वाध्यासः । चतुर्थेन सर्वव्यवहाराना-स्पदेऽपि सर्वव्यवहारास्पदत्वाध्यासो नासम्भावित इति द्रष्टव्यम् ॥६२॥

**अध्यस्तेऽस्मिञ्जगति जनताव्यापृतिः किन्न मिथ्या**
**स्वाप्नो राजा तदुपकरणं किं भवेद्वास्तवं वा ।**
**यद्वद्यक्षो बलिरपि तथा लौकिकीयञ्च गाथा**
**यद्वद्विश्वं व्यवहृतिरियं तद्वदेवेति सिद्धम् ॥६३॥**

सर्वजनव्यवहारस्य मिथ्यात्वं दृष्टान्तप्रदर्शनेन कैमुत्या साधयति—अध्यस्ते इति । कल्पिते प्रपञ्चे जनताव्यापृतिः सर्वजनसमूहव्यवहारः किं कल्पितत्वाद् मिथ्या न भवति ? किन्तु भवत्येव । स्वप्ने कल्पितो राजा तदुपकरणं छत्रचामरसेनादिसामग्री किं सत्यरूपा भवेत् ? नह्येवम्, किन्तु मृषैव भवति । "यक्षानुरूपो बलिः" इति लौकिकाभाणकं प्रसिद्धम् । तस्माद्यादृशं विश्वं भोग्यभोगालयादिप्रपञ्चस्तद्वदेव तद्विषयकव्यवहारोऽपीति युक्तिसिद्धमित्यर्थः ॥ ६३ ॥

**तस्माद्बन्धो जनिमृतिमयोऽध्यस्त एवात्मतत्त्वे**
**मायाऽविद्याप्रकृतितिमिराज्ञानशब्दाभिधेया ।**
**हेतुस्तत्राघटितघटनादक्षिणैषा विरुद्धेऽ-**
**धिष्ठाने तद्विषयधिषणा तन्निवृत्तौ समर्था ॥ ६४ ॥**

एवं प्रपञ्चव्यवहारमिथ्यात्वप्रसाधनेनापि साक्ष्यैक्यं प्रसाध्य परमप्रकृतमुपसंहरति—तस्मादिति । जन्ममृत्युप्रवाहलक्षणो बन्धः प्रत्य-

गात्मनि कल्पित एवास्ति। अघटितस्यात्यन्तासम्भावितस्य घटना या रचना तत्र दक्षिणाऽत्यन्तचतुरा माया तत्त्वज्ञाननिवर्त्यत्वेनाविद्या-शब्दवाच्या, सर्वप्रपञ्चोपादानत्वेन प्रकृतिः, आत्मतत्त्वाऽऽवरकत्वेन तिमिरम्, ज्ञानविरोधित्वेनाज्ञानमित्यादिशब्दैरभिधातुं योग्या व्यवहार-दशायामेषा साक्षिप्रत्यक्षगम्या तत्राविरुद्धे सर्वाध्यस्तवस्तुनः सत्तास्फू-र्तिप्रदत्वेन सर्वानुग्राहकतया विरोधशून्येऽधिष्ठाने ब्रह्मण्यात्मतत्त्वे कल्पितबन्धस्य हेतुः कारणमिति योजना। तन्निवृत्तौ तस्या बन्धन-हेतुभूताया मायायाः सकार्याया निवृत्तौ बाधलक्षणायां तद्विषयाधिष्ठा-नात्मतत्त्वगोचरा धिषणा वेदान्तवाक्यविचारजन्या प्रमारूपाऽन्तः-करणवृत्तिः समर्था पटीयसीत्यर्थः ॥ ६४ ॥

**शान्तो दान्तो भगवति हरौ भक्तिमान् शुद्धबुद्धिः**
**प्राप्याचार्यं श्रवणमननध्याननिष्ठाप्तबोधः।**
**आत्माविद्यां सपदि सकलां तन्महिम्ना निवृत्तां**
**बुद्ध्वा धीरः सुखघनपदे तिष्ठतीत्येष मुक्तः॥६५॥**

एवं विस्तरेण शास्त्रार्थं निरूप्य, श्रोतृबुद्धिसौकर्यार्थमुक्तमेवार्थं सङ्-क्षिप्य निरूपयति—शान्त इत्यादिद्वाभ्याम्। आदौ ईश्वराराधनलक्षण-धर्मानुष्ठानाच्छुद्धबुद्धिः, तदनु भगवति निरङ्कुशसमग्रैश्वर्यादिसम्पन्ने हरौ शरणागतसंसारार्तिहरणैकदक्षत्वेन प्रसिद्धे भक्तवत्सले वासुदेवे भक्ति-मान् नित्यदृढानुरागसम्पन्नः, तत्प्रसादाच्छान्तः निवृत्तसर्वैषणतया निश्चलान्तःकरणोऽत एव दान्तः विजितबाह्यकरणः। यथोक्तसाधन-सम्पन्नोऽधिकारी आचार्यं श्रोत्रियं ब्रह्मनिष्ठं गुरुं प्राप्यासाद्य तत्प्र-सादलब्धवेदान्तश्रवणमननध्यानरूपसाधनेषु या निष्ठा तत्परत्वरूपा तया आप्तः सम्यग्लब्धो बोधो ब्रह्मात्मैक्यसाक्षात्काररूपो येन स च सपदि ज्ञानोदयसमये सकलां कलाभिः कार्यवर्गरूपाभिः सह वर्त्त-

मानामात्माविद्यां स्वस्वरूपावरणहेतुभूतां तन्महिम्ना तस्यात्मतत्त्वस्यानावृतस्वप्रकाशप्रभावेण नित्यमेव निवृत्तां बुद्ध्वा, अविद्या सह कार्येण नासीदस्ति भविष्यतीति निश्चित्य धीरस्तत्त्ववित् सैन्धवघनवत् सुखैकरसपदे पदनीये स्वस्वरूपे तिष्ठति—तद्रूप एव सन् विराजते। एष मुक्तः नित्यमुक्त एव सन्मुक्तोऽयमित्युपचर्यते, "विमुक्तश्च विमुच्यते" (कठ २।५।१) "निवृत्तश्च निवर्त्तते," इति श्रुतेः ॥ ६५ ॥

**अध्यस्तान्ध्यं भवभयगृहं ब्रह्मबोधेन सर्वं**
**बाधित्वाऽद्धा द्वयसुखपदावस्थितिर्मुक्तिरेवम् ।**
**प्रादुर्भूता स्वयमतिशयभ्रान्तिशून्या विशुद्धा**
**तद्रूपोऽयं जयति सुजनो नष्टमायोऽनपायः ॥६६॥**

एतदेव विवृणोति—अध्यस्त इति। आत्मनि कल्पितमन्धत्वहेतुभूतमज्ञानं भवरूपभयस्य गृहं तत्कारणत्वादास्पदं सर्वं सकार्यं ब्रह्मबोधेन बाधित्वा अद्धा साक्षादद्वयसुखपदावस्थितिः परिपूर्णानन्दरूपेणावस्थानलक्षणा मुक्तिरेवं श्रुत्युक्तरीत्या प्रादुर्भूता स्वयम्, न तु साधनसाध्या। अत एवातिशयो गुणाधानादिलक्षणस्तत्सम्बन्धिनी भ्रान्तिस्तच्छून्या, अत एव विशुद्धा दोषापनयनलक्षणातिशयशून्या। तद्रूपोऽयं सुजनः मुक्तिस्वरूप एव सन् जयति सर्वोपरि विराजते; यतो नष्टा स्वरूपसाक्षात्कारेण बाधिता माया यस्य अत एव पुनरावृत्तिलक्षणोपायो नाशस्तद्रहितस्तद्धेतुक्लेशशून्यतया सदैकरस इत्यर्थः॥६६॥

**यद्यप्येषा निरवधिपदावस्थितिर्मुक्तिरिष्टा**
**तत्त्वज्ञानां श्रुतिनयविदां सा कुतर्कैस्तथापि ।**
**प्राज्ञम्मन्यैरिह बहुविधा कल्पिता तन्निरासाद्**
**निर्णेतव्या निगमवचसां सम्मता सत्स्वरूपा ॥६७॥**

एवं स्वस्वरूपावस्थानलक्षणां मुक्तिं वेदान्तमानसिद्धां प्रदर्श्येदानीं मोक्षे वादिविप्रतिपत्तिप्रदर्शनमुखेन वेदान्तिसम्मता मुक्तिरेव मुमुक्षुभिरादर्तव्या नान्यवादिपरिकल्पितेति बोधनाय भूमिकामारचयति—यद्यपीति। यद्यप्येषा मुक्तिस्तत्त्वज्ञानां श्रुतियुक्तिप्रमाणकुशलानां वेदान्तिनामपरिच्छिन्नसच्चिदानन्दस्वरूपावस्थानलक्षणैवेष्टा अभिमता, तथापि प्राज्ञमन्यैः पण्डितमानिभिः कुतर्कैः श्रुतिविरुद्धतर्काभासैर्बहुविधा कल्पिता—स्वस्वपक्षाभिनिवेशेन स्वीकृता। तन्निरासाय तेषां वादिनां मताभिमतमुक्तिनिरासेन निगमवचसां वेदान्तवाक्यानां सम्मता सत्स्वरूपा अबाधितवस्तुस्वरूपा मुक्तिर्निर्णेतव्येति योजना ॥ ६७ ॥

**शून्यं वस्त्वेतदखिलमिह भ्रान्तितो भाति सद्व-**
**च्छून्यज्ञाने गलति सकलं शून्यभावोऽस्ति मोक्षः।**
**बौद्धाः प्राहुर्मतमिदमसन्मानशून्यं यतस्तद्**
**मूलोच्छेदे भवति स कथं तस्य मोक्षः कुबुद्धेः ॥६८॥**

तत्र माध्यमिकमतसम्मतां मुक्तिं तन्निरासञ्च दर्शयति—शून्यमिति। शून्यमेव वस्तुतो विपर्यासदर्शनेनैतदखिलमिह व्यवहारभूमौ सद्वदवभासते, तत्र शून्यभावनाप्रकर्षपर्यन्तशून्यज्ञाने सति सकलं ज्ञानज्ञेयात्मकं जगद्विगलति शून्यत्वमेति। शून्यभाव एव मोक्षोऽस्तीति बौद्धा माध्यमिकाः प्राहुर्युक्त्याभासैः स्थापयन्ति। तदिदं मतमसत् तुच्छम्, यतो मानशून्यं युक्तिविरुद्धञ्च बन्धमोक्षान्वयिनः फलसम्बन्धिनोऽभावान्मूलोच्छेदे सति तस्य कुबुद्धेर्बौद्धस्य स मोक्षः पुरुषार्थः कथं भवेत्, न कथमपीत्यर्थः ॥ ६८ ॥

**योगाचाराः क्षणिककलया दुःखबुद्ध्या च शून्या-**
**भ्यासाद्दीपप्रशमवदघज्ञानधारोपशान्त्या।**

**सर्वज्ञायाः सकलविलये सन्ततेरेव मोक्षं**
**ह्यन्तर्भावं विदुरिति मतं स्थाय्यभावादयुक्तम्॥६९॥**

योगाचारमताभिमतां मुक्तिं तन्निरासञ्च दर्शयति—योगाचारा इति। क्षणिककलया क्षणिकभावनया चकारेण स्वलक्षणभावनया दुःखबुद्ध्या दुःखभावनया शून्याभ्यासाच्छून्यभावनया च प्रदीपनिर्वाणवदपज्ञानाधारोपशान्त्या संसारविज्ञानप्रवाहोपरमरूपया सर्वज्ञायाः सन्ततेरेवान्तर्भावं सकलविलये सति मोक्षं विदुरपवर्गमिच्छन्ति। तदेतद्योगाचारमतं स्थाय्यभावाद्बन्धमोक्षान्वयिनः फलसम्बन्धिनोऽभावादनङ्गीकारादयुक्तम्, युक्तिविरुद्धत्वादुपेक्ष्यमित्यर्थः ॥ ६९ ॥

**तत्त्वज्ञानादुचिततपसा कर्मदाहात्समाधे-**
**र्बन्धध्वंसे सततगमनं चोर्द्ध्वमाकाशगं वा।**
**मोक्षं प्राहुस्त्वति विवसनास्तन्न युक्तं विशुद्धे**
**चिद्रूपेऽस्मिन्कथमपि गतिर्नैति युक्त्याञ्जसत्वम्७०**

आर्हताभिमतां मुक्तिं तन्निरासञ्च दर्शयति—तत्त्वज्ञानादिति। कर्माष्टकपुर्यष्टक*परिवेष्टितस्य जीवस्य तत्त्वज्ञानात् स्वमताभिमततत्त्वज्ञानेन, उचिततपसा स्वमताभिमततपसा, समाधेरात्मैकाकारसमाधिना च सर्वेषां कर्म्मणां दाहाद् बन्धध्वंसे सति पञ्जरस्थस्येव शुकस्य पञ्जरभञ्जन इव सततगमनं द्रुततमसततगमनम्, ऊर्द्ध्वगमनम्, लोकाकाशगमनं वा मोक्षं कैवल्यं विवसना दिगम्बराः प्राहुः कल्पयन्ति। तन्न युक्तम्। तदेतद् युक्तिविरुद्धं विशुद्धे वस्तुनि। तथाहि—आत्मा चिद्रूपः? उताचिद्रूपः? आद्ये विशुद्धस्य चिद्रूपस्य निरुपाधिकस्य

* ज्ञानेन्द्रियपञ्चकम्, कर्मेन्द्रियपञ्चकम्, भूतपञ्चकम्, प्राणादिपञ्चकम्, अन्तःकरणचतुष्कम्, अविद्या, कामः, कर्म।

स्वतोऽप्रतिसंक्रमादुपाधिसम्बन्धे च बन्धाविच्छेदादनिर्मोक्षः । द्वितीयेऽचिद्रूपस्य चेतनानधिष्ठितस्य स्वयं गमनानुपपत्तेः । नहि चेतनाश्वाद्यनधिष्ठितस्य रथादेर्गमनं दृष्टम्, सम्भवति वा । अतो भग्नादिव पञ्जरात्पतङ्गस्यात्मनो बन्धविच्छेदे सत्यप्यूर्ध्वगमनमसङ्गतमेवोत्प्रेक्षितमिति । अत आह—विशुद्धे चिद्रूप इति । निरुपाधिचैतन्येऽस्मिन्नात्मनि कथमपि कथञ्चनापि त्वदभिमतगमनं युक्त्या सत्तर्कैराञ्जसत्वं बुद्धिपथमारोढुं सम्यक्तया नैति नैवायातीत्यर्थः ॥ ७० ॥

**द्रव्यादीनां नयमतधिया चेश्वरोपासयाहुः**
**काणादास्ते नवविभुगुणात्यन्तनाशं विमोक्षम् ।**
**तज्ज्ञानादावुपशममिते शून्यपक्षान्न भेदो**
**दुःखाभावोऽप्ययमतिविषयो नो पुमर्थोऽस्ति मुख्यः ७१**

एवं नास्तिकाभिमतां मुक्तिं तन्निरासञ्च प्रदर्श्याधुनाऽर्द्धवैनाशिकवैशेषिकाद्यभिमतां मुक्तिं तन्निरासञ्च दर्शयति—द्रव्यादीनामिति । नयमतधिया न्यायाभिमतपदार्थसालक्षण्यवैलक्षण्यपरिशोधनपूर्वकात्मयाथात्म्यज्ञानेन ईश्वरोपासनया सततं परमेश्वरोपासनया विभोरात्मनो नवानां वैशेषिकगुणानामत्यन्तनाशमतीवोच्छेदं काणादा वैशेषिकास्ते तत्समानतार्किका बुद्धिस्था नैयायिकाश्च मोक्षं प्राहुः । ते पुनः "प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः" ( न्या० १ । १ । १ ) इति सूत्रसिद्धप्रमाणादिषोडशपदार्थान् परिशोध्यात्मनि "आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्" ( न्या० १ । १ । ९ ) इति सूत्रसिद्धद्वादशविधप्रमेयनिष्कर्षादात्मयाथात्म्यावगमे सञ्जाते तत्सहिता-

त्परमेश्वरोपासनान्नवानां वैशेषिकगुणानामत्यन्तोपरमं निर्वाणाख्यं मोक्षं कल्पयन्ति । एतन्मतद्वयसम्मतमोक्षः स्वरूपोच्छेदपक्षाभिमतमोक्षान्न भिद्यते । तस्यात्मनो गुणत्वेनाभिमतज्ञानसुखादावुपशममुच्छेदमिते प्राप्ते सति निःसंज्ञत्वाविशेषात्सुखानुभवाभावाद्वा अपुरुषार्थत्वमेव तदभिमतमोक्षस्य । सुखाभावेऽपि दुःखाभावात्पुरुषार्थः स इति चेत्तत्राह—दुःखाभाव इति । षडिन्द्रियाणि, षड् विषयाः, षड् बुद्धयः, सुखम्, दुःखम्, शरीरञ्चेत्येकविंशतिदुःखध्वंसोऽप्यमतिविषयः—प्रतीत्यगोचरतया मुख्यः पुरुषार्थो न भवति । न खलु पाषाणादेः दुःखाभावः पुरुषार्थ इति दुःखाभावस्यापि निःसंज्ञत्वे पुरुषार्थत्वाभावादेव तदुभयमतसम्मतो मोक्षोऽसङ्गत एवेत्यर्थः ॥ ७१ ॥

**आत्मज्ञानान्निगमविधिनाऽनुष्ठितैः कर्मणाञ्चा-**
**त्यन्तोच्छेदं विदुरिति गुरोः पक्षनिष्ठा गुणानाम् ।**
**मोक्षं हीदं मतमनुचितं श्रौतबोधाद्यभावात्**
**कर्म्मज्ञाने विषमसृतिगे नैकमेतत्फलं स्यात् ॥७२॥**

प्रभाकराभिमतमोक्षं तन्निराकरणञ्च दर्शयति—आत्मेति । आत्मज्ञानपूर्वकाद्वैदिककर्मानुष्ठानात्तेषामेव नवगुणानामत्यन्तोच्छेदं मोक्षं गुरोः पक्षनिष्ठाः प्राभाकरा विदुर्जानन्ति । इदं हि मतं श्रौतबोधाद्यभावाच्छ्रुतिसम्मताकर्तृभोक्तृसङ्गोदासीनैकात्मज्ञानाद्यनङ्गीकारादनुचितमत्यन्तायोग्यमित्यर्थः । आदिशब्देन वेदान्ताभिमतविवेकादिसाधनकलापो गृह्यते । कर्म्मज्ञाने विषमसृतिगे भिन्नाधिकारिकर्तृकतया परस्परविरोधाद्युगपत्समुच्चयाभावाद् विलक्षणमार्गनिष्ठे एतत्फलमेतयोः ज्ञानकर्मणोः फलं मोक्षः संसारश्च परस्परविरुद्धत्वादेकं न स्यात् । यद्यपि कर्म्मणामपि फलं परम्परया मोक्षः, तथापि साक्षात्तत्फलकत्वाभावादेव मुक्तिरिति द्रष्टव्यम् ॥ ७२ ॥

नित्यज्ञानं सुखमपि तथा जायते कर्म्मयोगात्
सात्मज्ञानादविषयसुखं मोक्षमिच्छन्ति भाट्टाः।
नायं पक्षः श्रुतिनयविदां सम्मतो युक्तिशून्यो
जन्ये मोक्षे न भवति कदा नित्यता हेत्वभावात्॥७३॥

भट्टपादानुसारिणामभिमतमुक्तिं तन्निराकरणञ्च दर्शयति—नित्यज्ञानमिति। कर्मयोगाद्वैदिककर्मानुष्ठानात् सात्मज्ञानादात्मज्ञानपूर्वकान्नित्यज्ञानं जायते। सुखमपि तथा—नित्यसुखञ्चोत्पद्यते। ततश्चाविषयसुखं नित्यज्ञानेनात्मनो विषयविशेषानपेक्षया नित्यानन्दानुभवं मोक्षं भाट्टा भट्टपादानुसारिण इच्छन्ति। नायं पक्षः श्रुतियुक्तिप्रमाणकुशलानां सम्मतः, युक्तिशून्यत्वात्। विषयेन्द्रियसंयोगाभावे कथं ज्ञानानन्दोत्पत्तिरिति ? आत्ममनःसंयोगादिति चेत्तदपि दुरुपपाद्यम्, आत्ममनसोरुभयोरपि सर्वगतयोरन्यतरकर्मजन्यस्य, उभयकर्म्मजन्यस्य वा संयोगस्याभावात्। भवतु नामात्ममनसोः संयोगस्तथापि ज्ञानानन्दयोर्जनिमत्त्वे सत्यनित्यत्वस्य दुर्वारत्वादपि नायं पक्षः साधुरित्याह—जन्य इति। जन्ये वस्तुनि नित्यत्वसाधकहेतोरभावात् पुनरपि बन्धप्रसङ्ग इति भावः॥ ७३ ॥

यद्ब्रह्माण्डाद्बहिरपि विभोर्ब्रह्मणो भावमाहु-
र्जन्तोर्मोक्षं तदपि न समं वेदमौलेर्विरोधात्।
तस्य प्राणा न च बहिरितो यान्ति तज्ज्ञस्य जन्तो-
र्लीयन्तेऽत्राद्वयरसतयेत्यादिसिद्धान्त इष्टः॥७४॥

केषाञ्चिद्वेदान्तसिद्धमर्थमन्यथा कुर्वतामेकदेशिनां सम्मतां मुक्तिं तन्निराकरणञ्च दर्शयति—यदिति द्वाभ्याम्। ब्रह्माण्डाद्बहिः संसारमण्डलाद्बहिरेव ब्रह्मसद्भावमभ्युपगम्य जन्तोर्जीवस्यार्चिरादिमार्गेण

यद् ब्रह्मप्राप्तिलक्षणं मोक्षं प्राहुः, तदपि न समम्—युक्तियुक्तं न भवति, वेदमौलेः—"न तस्य प्राणा उत्क्रामन्ति" (बृ० ४।४।६) इत्यादि-श्रुतेर्विरोधादित्यर्थः ॥ ७४ ॥

**भिन्नो जीव स्वत इह विभोरीश्वरोपासनात्स**
**ब्रह्मैकत्वं व्रजति लवणे यद्वदैक्यं तृणादिः ।**
**एवञ्चेत्स्यात्तदपि न समं ब्रह्मताऽन्यस्य न स्यात्**
**नह्यन्यस्य स्वत इह भवेदन्यभावोऽपि युक्त्या ॥७५॥**

किमात्मनो ब्रह्मप्राप्तिस्तादात्म्यलक्षणा संयोगलक्षणा वा ? नाद्या, अश्वमहिषयोरिव पृथक्सिद्धयोरेकत्वानुपपत्तेः । द्वितीयं शङ्कते—भिन्न इति । स्वतो भिन्न एव जीवो विभोर्ब्रह्मणः सकाशाज्जीवेश्वर-योर्नियन्तृनियम्यविज्ञानपूर्वकमीश्वरार्चनसमाध्याद्युपासनाद् लवणा-करे निक्षिप्ततृणादेरिव लवणत्वं जीवस्य ब्रह्मभावनया ब्रह्मभावत्व-मित्येवञ्चेत्, तदपि न समम्, यतोऽन्यस्य सतो ब्रह्मता न स्यात् । नहि स्वतोऽन्यस्य युक्तिसिद्धोऽन्यभावो दृष्टचरः, दृष्टान्ते तृणपर्णाद्यवय-विनः संस्थानविशेषेऽसति तदवयवानां लवणावयवसंयोगेन लवण-भ्रान्तिमात्रत्वादुष्णजलभ्रान्तिवत्तस्यानुदाहरणात् । नापि यथा रस-विद्धताम्रस्य सुवर्णभावस्तथा ब्रह्मभावो जीवस्येति साम्प्रतम्, तत्राप्यन्यस्य सतोऽन्यभावस्यासिद्धत्वात्, रसविशेषस्य ताम्ररूपाभिभावकमात्रत्वात्, कालान्तरे सुवर्णाकारतापगमदर्शनाच्च ताम्रादेः । ततश्च भ्रममात्रं तदित्यभिप्रायः । तदुक्तमुपदेशसहस्र्याम्—

"नान्यदन्यद्भवेद्यस्मान्नान्यत्किञ्चिद्विचिन्तयेत् ।
अन्यस्यान्यत्वभावे हि नाशस्तस्य ध्रुवो भवेत् ॥" (उप० सा० प्र० १५१) इति ॥ ७५ ॥

स्वान्तोपाधेर्भवति विकलो ब्रह्मभूतोऽपि जीवः
कर्म्मज्ञानोभयकरणतो ब्रह्मभावं ह्युपैति ।
केचित्प्राहुस्तदपि न समं वस्तुनो द्वैध्यभावाद्
भ्रान्त्या सिद्धेऽवितथकलना वेदसन्न्यायबाह्या ।७६।

वेदान्तज्ञम्मन्यानां केषाञ्चित्सम्मतां मुक्तिं तन्निराकरणञ्च दर्शयति-स्वान्तेति। स्वतो ब्रह्मभूतोऽपि जीवः स्वान्तोपाधेरन्तःकरणोपाध्यवच्छेदाद् विकलो भवति वस्तुतो भावान्तरभूतो भवति । कर्मज्ञानोभयानुष्ठानेन ब्रह्मभावं हि श्रुतिप्रसिद्धमुपैति। कर्मणोपाधिनिवृत्तौ ज्ञानेन ब्रह्मभावो मोक्ष इति केचिदेकदेशिनः प्राहुः। तदप्यापातरमणीयम्, वस्तुनो निरवयवस्य ब्रह्मणो वस्त्वन्तरेण कुठारेणेव द्वैध्यभावाच्छिलशिपादेरिव विदारणासम्भवे सति भावान्तरत्वानुपपत्तेः। भ्रान्त्या सिद्धे उपाधिसम्बन्धस्य भेदभ्रान्तिमात्रहेतुत्वादेव सिद्धे वस्तुनि अवितथकलना वस्तुतो भावान्तरकल्पना श्रुतितदनुकूलन्यायविरुद्धत्वात्ततो बाह्या वस्तुतोऽन्यत्वाभावे सति ब्रह्मभावस्यासाध्यत्वाच्च । तत्र कर्मणोपाधिनिवृत्तिर्ज्ञानेन ब्रह्मत्वमिति स्वबुद्धयुत्प्रेक्षितत्वादतीव तुच्छमिति भावः ॥ ७६ ॥

तस्माद् ब्रह्माद्वयसुखनिधि प्रत्यगात्मास्ति वस्तु
स्वाविद्योत्थाखिलभयनिधौ जन्ममृत्युप्रवाहे ।
भ्रान्त्यावर्ते भ्रमति सपदि ब्रह्मविद्यार्कभासा
बाधित्वाऽऽन्ध्यं व्रजति परमं ब्रह्मभावं स मुक्तः॥७७॥

एवं मुमुक्षुभिरनादरणीयाननेकवाद्यभिमतान् मोक्षपक्षान्निराकृत्य तदादरणीयश्रुतिमौलिसम्मतं मोक्षपक्षं दर्शयति— तस्मादिति पद्यत्रयेण । यस्मात् सर्वे वादिपरिकल्पिता मुक्तिपक्षाः

श्रुतियुक्तिविरुद्धास्तस्मादद्वयसुखसिन्धु प्रत्यगात्मब्रह्मैव वस्त्वस्ति । तदेव ब्रह्म स्वाविद्ययोत्थिताखिलभयनिधौ संसारे जन्ममृत्युप्रवाहलक्षणे भ्रान्त्यावर्ते 'अहम्, इदम्, ममेदम्,' इत्यावर्तैकरूपे भ्रमति विश्रान्तिं न लभते । कदाचिन्महापुण्यफलसीमभूतब्रह्मविद्यार्कभासा तत्त्वज्ञानमार्तण्डप्रभया आन्ध्यं सकार्याज्ञानं बाधित्वा, नासीदस्ति भविष्यतीति निश्चित्य स्वभावभूतं परमं दृश्यात्यन्ताभावोपलक्षितं ब्रह्मभावापत्तिलक्षणं मोक्षं व्रजति । स मुक्त इत्युच्यते इति शेषः । इति वेदान्तसिद्धान्त इत्यर्थः ॥ ७७ ॥

**आत्मज्ञोऽसौ तरति च शुचं ब्रह्मविद् ब्रह्म नित्यं**
**ब्रह्माप्येति स्वयमपि तथा मुच्यते मुक्त एव ।**
**आन्ध्यं ग्रन्थिर्व्रजति विलयं क्षीयते कर्मजालं**
**वेदो हीत्थं वदति शतशो नित्यसिद्धां विमुक्तिम् ७८**

तत्र श्रुतिवाक्यान्यर्थतो दर्शयति--आत्मज्ञ इति । "तरति शोकमात्मविद्" ( छा० ७ । १ । ३ ) "ब्रह्म वेद ब्रह्मैव भवति" (मु० २ । ९) "ब्रह्मैव सन् ब्रह्माप्येति" (बृ० ४ । ४ । ६) "विमुक्तश्च विमुच्यते" ( कठ० २ । ५ । १ ) "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे" ( मु० २ । २ । ८ ) "अविद्यायाः परम्पारं तारयितु", "तमेव विदित्वाऽतिमृत्युमेति" ( श्वे० ६ । १५ ) इत्यादिवेदो हि यस्मान्नित्यसिद्धां विमुक्तिमित्थमनेनैव प्रकारेण सहस्रशो वदति, सर्वो वेदस्तत्रैव फलवान् भवतीत्यर्थः ॥ ७८ ॥

**तत्त्वज्ञानान्निजसुखगतानाद्यविद्यानिवृत्तौ**
**मुक्तिः सिद्धाऽद्वयसुखवपुः प्रत्यगात्मैक्यरूपा ।**

**पूर्णानन्दामृतरसनिधौ त्यक्तदेहत्रयोऽन्त-**
**स्तिष्ठत्यात्मन्यखिलविदसौ शान्तमायोऽनपायः॥७९॥**

श्रुतिसिद्धमर्थं दर्शयति—तत्त्वज्ञानादिति । तत्त्वस्य ब्रह्मैक्यरूपस्य साक्षात्कारान्निजसुखं ब्रह्मैक्यं तद्गतानाद्यनिर्वाच्याविद्यानिवृत्तौ सत्यां प्रत्यगात्मैक्यरूपा अद्वयसुखस्वरूपा मुक्तिः स्वयमेव सिद्धा, न केनचित्साधनेन साध्या, नित्यत्वात् । अज्ञानतत्कार्यनिराकरणेनैव ज्ञानस्य साफल्यम् । अतः सुष्ठूक्तमसावखिलं ब्रह्मैक्यं वेत्तीति तथा, शान्ता तत्त्वज्ञानेन बाधिता माया सकार्याऽविद्या यस्य स च, अत एव पुनरावृत्तिरूपापायशून्यः यतस्त्यक्तं मूलबाधेन बाधितं देहत्रयं स्थूलसूक्ष्मकारणाख्यं येन स च, अन्तरात्मनि पूर्णानन्दानन्तामृतरससिन्धौ तिष्ठति—कृतकृत्यतया विराजते इत्यर्थः ॥ ७९ ॥

**तस्माद्धीरोऽपरिमितपदप्राप्तये वेदमौले-**
**स्तत्त्वं ब्रह्माद्वयसुखपदं स्वात्मबुद्ध्या गुरूक्त्या ।**
**पर्यालोच्य श्रवणमननध्याननिष्ठो विवेकी**
**विद्यात्तेन व्रजति परमं मोक्षमिष्टं सुखेन ॥८०॥**

एवं श्रुतिमौलिवादिसम्मतां मुक्तिं सोपायामभिधाय पुनस्तत्प्राप्त्युपायं संक्षेपेण दर्शयति—तस्मादिति । यस्मात् स्वतः सिद्ध एव मोक्षः विस्मृतकण्ठस्थचामीकरवत् स्वात्माज्ञानमात्रावृतत्वात्, तस्माद्धीरो विवेकी सम्यग्वैराग्यादिसाधनसम्पन्नोऽपरिमितं परिच्छेदशून्यं यत्पदं तत्प्राप्तये तत्साक्षात्काराय गुरूक्त्या वेदमौलेस्तत्त्वं तात्पर्यविषयमाचार्योपदिष्टवेदान्तवाक्येभ्यो ब्रह्माद्वयसुखं यत्पदं तत्स्वबुद्ध्या स्वानुभवेन श्रवणादिनिष्ठः सन् पर्यालोच्य सम्यग्विचारेण स्वानुभवारूढं कृत्वा विद्यात्—सर्वोपायेन जानीयात् । तेन बोधेन

परमिष्टं निरतिशयपुरुषार्थरूपं सुखेनानायासेन मोक्षं व्रजति—तद्रूप एव भवतीत्यर्थः ॥ ८० ॥

**वेदोऽनादिर्न तु पुरुषधीपूर्वसिद्धः प्रमाणं**
**निर्दोषत्वादविदितपदज्ञापकत्वात्स्वतश्च ।**
**तत्रास्तिक्यप्रवणमनसामात्मबोधेऽधिकारो**
**नैवान्येषां स्वमतिकलनोत्थानयुक्त्याश्रितानाम् ॥८१॥**

यथोक्ततत्त्वज्ञाननिष्ठायां वेदान्तशास्त्रे श्रद्धावतामेवाधिकारः, नान्येषामित्याह—वेद इति । वेदो वियदादिवदनादितया पुरुषबुद्धिपूर्वसिद्धो न भवति, किन्त्वपौरुषेयतया अप्रामाण्यहेतुसर्वदोषशून्यत्वादज्ञातज्ञापकत्वाच्च स्वतः एव प्रमाणम् । इदमेकादशे प्रकरणे विस्तरेण वक्ष्यते । तत्र वेदे यदास्तिक्यं तत्र प्रवणं मनो येषां सम्यक् प्रवेशेनाभिमुखीकृतमनसो ये तेषामेवात्मबोधे तदुपायश्रवणादावधिकारो नैवान्येषां स्वमतिकल्पनयोत्थानं यासां युक्तीनां तदाश्रितानां केवलतर्कनिष्ठानामित्यर्थः ॥ ८१ ॥

**प्रत्यक्तत्त्वे परसुखवपुष्यद्वितीये विशुद्धे**
**मायातीते सकलकलनास्पर्शशून्ये निरंशे ।**
**वेदान्तोत्थामलधिषणया ब्रह्मविद्याख्ययेदं**
**सम्यग्ज्ञाते विदितमखिलं विश्वमध्यस्तमस्मिन् ।८२।**

ब्रह्मज्ञानेन सर्वज्ञानसिद्धिं दर्शयति—प्रत्यक्तत्त्व इति । प्रत्यगभिन्नब्रह्मतत्त्वे सम्यग्ज्ञाते सति अस्मिन्प्रत्यक्तत्त्वेऽखिलमध्यस्तं विश्वमिदं विदितमित्यन्वयः । वेदान्तेभ्य उत्तिष्ठतीति वेदान्तोत्था अमला या धिषणा ब्रह्मविद्या तया वेदान्तजन्यनिर्मलप्रज्ञयेत्यर्थः । सुगममन्यत् ॥ ८२ ॥

**यदविदितमखण्डं मातृमानादिविश्वं**
**सृजति विदितमेकं भाति मानादिशून्यम् ।**
**तदहममृतमीशं सर्वदा शान्तमूर्ति**
**सकलसुरललामं कृष्णतत्त्वं श्रयेऽन्तः ॥ ८३ ॥**

एवं प्रकरणार्थं परिसमाप्य तत्फलं कृष्णानुसन्धानं महीकुर्वन्नुक्तमर्थं संक्षिप्य दर्शयति—यदिति । तत्कृष्णाख्यं तत्त्वं ब्रह्म अन्तः श्रये—स्वात्मत्वेन प्रत्यगभिन्नस्वरूपमनुसन्दधे, इत्यन्वयः । तत्किमित्याकाङ्क्षायामाह—यदिति । यद्वस्तुतोऽखण्डमेवाविदितमज्ञातं सन्मातृमानादिविश्वं सकलं सृजति । यच्च विदितं सम्यक्साक्षात्कृतं सदेकं मात्रादिव्यवहारानास्पदं भाति प्रकाशते । तदमृतममृतवदास्वाद्यं सर्वदा कालत्रयेऽपि शान्ता मायातत्कार्यकृतक्षोभशून्या मूर्तिः सच्चिदानन्दविग्रहो यस्य तदीशं मायावित्त्वेन प्रसिद्धमपि सकलसुराणां ब्रह्मेन्द्ररुद्रादीनां ललामं तन्मुकुटमणिघृष्टचरणारविन्दतया मस्तकभूषणम्; येन सर्वे ब्रह्मादयः सुराः शोभन्ते तदित्यर्थः ॥ ८३ ॥

**श्रवणविधिबलेनाद्वैततत्त्वं विशुद्धं**
**परमसुखमखण्डं शुद्धबुद्धिर्विदित्वा ।**
**व्रजति पदमगाधं यत्प्रसादाद्विमोक्षं**
**तमहमखिलनाथं श्रीमुकुन्दं प्रपद्ये ॥ ८४ ॥**

इति प्रत्यक्तत्त्वचिन्तामणौ प्रथमं प्रकरणं सम्पूर्णम् ॥ १ ॥

एवं सर्वाधिष्ठानत्वेन सर्वोपास्यत्वेन भगवन्तं श्रीमुकुन्दमनुसन्धाय मुमुक्षोस्तत्त्वज्ञानपूर्वकमोक्षप्रदत्वेन तमनुसन्धत्ते—श्रवणेति । स्पष्टार्थं पद्यम् ॥ ८४ ॥

सर्वाः कलाः समुदिता निरवद्यकीर्त्तौ
प्राप्ताः सदा विलसिताः परमां प्रतिष्ठाम् ।
यत्रेश्वरे तमहमीश्वरमीश्वराणां
कृष्णं श्रये सततमस्य पदाब्जभक्त्यै ॥ १ ॥

आनन्दसिन्धुरमृताद्वयबोधदेहो
वेदान्तगीर्विलसितान्तरभावगम्यः ।
नन्दाङ्गणे विजयते व्रजभूमिभाग्यं
यस्तं मुकुन्दमनिशं शरणं व्रजामि ॥ २ ॥

इति श्रीमन्मुकुन्दपदारविन्दमकरन्दाभिलाषिसदानन्दविद्व-
त्कृतायां प्रत्यक्तत्त्वचिन्तामणिव्याख्यायां स्वप्रभाभि-
धायां प्रत्यक्तत्त्वविचारमयूखाभिधं प्रथमं
प्रकरणं समाप्तिमगमत् ॥ १ ॥

---

## अथ द्वितीयं प्रकरणम्

सकलकारणकार्यविलक्षणं
श्रुतिभिरीरितमद्वयमक्षयम् ।
हृदि गतं विमलं रमयाऽऽश्रितं
यदुपतिं कलये कलनोज्झितम् ॥ १ ॥

पूर्वप्रकरणान्ते श्रवणविधिबलेनाद्वैततत्त्वं विदित्वा मोक्षं व्रजतीत्युक्तम्, तत्र श्रवणे "आत्मा वा अरे द्रष्टव्यः श्रोतव्यः" ( बृ० २ । ४ । ५ ) इत्यादिवाक्येन मननध्यानाभ्यामङ्गाभ्यां श्रवणं नामाङ्गि विधीयते, इति विधिं सिद्धवत्कृत्य तत्त्वसाक्षात्कारसाधनत्वं प्राधान्येन श्रवणस्यैवेति सूत्रितं तद्विवरणरूपं प्रकरणान्तरमारभमाणः स्वेष्टदेवतानुसन्धानरूपमङ्गलमाचरन्नर्थात्प्रकरणप्रतिपाद्यं श्रवणादिविधिविषयत्वेन ब्रह्मात्मैक्यं तत्त्वं सङ्क्षिप्य दर्शयति—सकलेत्यादिपद्यत्रयेण । तत्र प्रथमार्द्धेन "तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्" ( बृ० २ । ५ । १९ ) इत्यादिश्रुतिसिद्धमखण्डवाक्यार्थरूपं ब्रह्मात्मैक्यं दर्शितम् । हृदि गतं विमलमिति पदद्वयेनान्तःकरणोपहितं तत्साक्षितयाऽसंस्पृष्टमसङ्गचैतन्यं त्वंपदलक्ष्यं च दर्शितम् । रमयाऽऽश्रितं यदुपतिमिति पदद्वयेन तत्पदवाच्यम्, कलनोज्झितमित्यनेन मायातत्कार्यरूपकलनाविनिर्मुक्ततया सर्वव्यवहारानास्पदं तत्पदलक्ष्यञ्च दर्शितमिति विवेकस्तेन शास्त्राभिधेयाभिधानम् ॥ १ ॥

सुखघनं निरवद्यमशेषगं
निरवधि परमेकमनङ्कुशम् ।

**अहमशेषकलाञ्चितमीश्वरं**
**सततमात्मपदप्रदमाश्रये ॥ २ ॥**

सुखघनमिति पूर्वार्द्धेन प्रयोजनोल्लेखः । अहमित्युत्तरार्द्धेन भक्ताभीष्टदानदक्षत्वं भगवतो दर्शितमिति विभागः । अक्षरार्थस्तु निगदव्याख्यातः ॥ २ ॥

**जगदिदं खमरुच्छुचिवारिभू-**
**विरचितं स्वचिता परिबृंहितम् ।**
**यत उदेति मुकुन्दपदाभिधा**
**तमहमादिगुरुं हरिमाश्रये ॥ ३ ॥**

जगदिदमिति । "यतो वा इमानि भूतानि जायन्ते" (तै० ३ । १) इति श्रुतिसिद्धजगज्जन्माद्यभिन्ननिमित्तोपादानकारणत्वं भगवतो दर्शितम् । स्वचिता स्वात्मचैतन्येन जगदिदं भूतभौतिकरूपं जडं स्वसत्तास्फूर्तिप्रदानेन परिबृंहितम्—सर्वव्यवहारसमर्थत्वापादनयोग्यं यथा स्यात्तथा सम्यगुद्भावितमित्यर्थः । शेषं निगदव्याख्यातमेवेति सर्वं मङ्गलम् ॥ ३ ॥

**नित्यस्वाध्यायविधिना साङ्गं वेदमधीत्य यः ।**
**पुण्यपुञ्जोदयात्कश्चित्सुधीः शास्त्रार्थवित्तमः ॥४॥**

एवं मङ्गलाचरणव्याजेन शास्त्रार्थं संक्षेपेण प्रदर्श्येदानीं "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" (बृ० २ । ४ । ५ ) इत्यत्रात्मदर्शनमनूद्य तदुपायत्वेन श्रोतव्य इत्यादिना मनननिदिध्यासनाभ्यां फलोपकार्यङ्गाभ्यां सह श्रवणं नामाङ्गि विधीयते इत्युपपादयितुं भूमिकामाचरयति—नित्यस्वाध्यायविधिनेत्यादिना ।

नित्यो हि स्वाध्यायोऽध्येतव्य इत्यध्ययनविधिः, "ब्राह्मणेन निष्कारणो धर्म्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च" ( महाभाष्यम् १ । १ । १ ) इति वचनात् । काम्यत्वे हि वेदाध्ययनस्यान्योऽन्याश्रयता, अर्थावबोधे सति कामना; कामनायां सत्यां षडङ्गोपेतवेदाध्ययनप्रवृत्तस्यार्थावबोध इति । अतः सर्वोऽपि नित्यविधिवलादेव षडङ्गसहितं वेदमधीत्यार्थं जानातीत्यभिप्रेत्याह—नित्येति । यः कश्चिदतिदुर्लभः पुण्यपुञ्जपरिपाकवशाच्छास्त्रार्थविदां मध्ये उत्कृष्टः सुधीः स्वधर्मानुष्ठानेन शोधितान्तःकरण इत्यर्थः ॥ ४ ॥

**स वेदान्तगिरोत्कृष्टपुमर्थप्रेप्सया स्वयम् ।**
**तदुपायं धियाऽन्विष्य तत्रेदमवगच्छति ॥५॥**

स इति । स च वेदान्तगिरा परमपुरुषार्थप्रेप्सया स्वयं तस्योपायं धिया शास्त्रोत्थयाऽन्विष्य पर्यालोच्य तत्रेदं वक्ष्यमाणमवगच्छति जानातीति योजना ॥ ५ ॥

**सर्वं प्रियं भवत्यात्मकामायेति विचारतः ।**
**आत्मशेषतयान्यस्य प्रियत्वोक्तेरशेषतः ॥६॥**

तत्किमित्यत आह—सर्वमिति । "आत्मनस्तु कामाय सर्वं प्रियं भवति" ( बृ० ४ । ५ । ६ ) इति श्रुत्याऽऽत्मशेषतयाऽन्यस्याऽशेषतोऽशेषस्य । सार्वविभक्तिकस्तसिः । प्रियत्वस्योक्तेरिति विचारादिति योजना ॥ ६ ॥

**आत्मातिरिक्तसर्वस्माद्विरक्तोऽधिकृतः पुमान् ।**
**गुरुमाश्रित्य वेदान्तसिद्धोपायं चिकीर्षति ॥ ७ ॥**

आत्मेत्यादि सुगमम् ॥ ७ ॥

**दृष्टे श्रुते मते ज्ञाते खल्वरे परमात्मनि ।**
**इदं सर्वं भवेज्ज्ञातमित्युपक्रम्य वेदगीः ॥ ८ ॥**
**तदेतावदरे खल्वमृतत्वमुपसंहृतौ ।**
**पुमर्थस्यामृतत्वस्योपायं तत्त्वधियं जगौ ॥ ९ ॥**

दृष्टेति । "आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितम्" (बृ० ४।५।६) इत्युपक्रम्य "एतावदरे खल्वमृतत्वम्" (बृ० ४।५।१५) इत्युपसंहारात् श्रुतिरियं परमपुरुषार्थभूतस्यामृतत्वस्य मोक्षस्योपायं तत्त्वधियं तत्त्वज्ञानमेव जगावुक्तवतीत्यर्थः ॥ ८—९ ॥

**अविधेयतया ज्ञानं न पुमायत्तमात्मनः ।**
**आत्मा वेत्ति श्रुतौ तस्योद्देशेनान्यद्विधीयते ॥१०॥**

अविधेयतयेति । आत्मनो ज्ञानमविधेयतया पुरुषतन्त्रं न भवति । "आत्मा वा अरे द्रष्टव्यः" ( बृ० ४ । ५ । ६ ) इति श्रुतौ तस्यात्मदर्शनस्योद्देशेनान्यच्छ्रवणादि विधीयते—इति योजना ॥ १० ॥

**मननध्यानरूपाभ्यामङ्गाभ्यां श्रवणं सह ।**
**श्रुत्या विधीयते चाङ्गि फलवत्त्वेन निश्चितम् ॥११॥**

मननेति । फलवत्त्वेनेति । आत्मदर्शनरूपं यत्फलं तच्छ्रवणस्यैव; तस्यैव प्राधान्येन विधानादित्यर्थः ॥ ११ ॥

**तथैव श्रुतितात्पर्य्यं पुराणे प्रतिपादितम् ।**
**आत्मदर्शनमुद्दिश्य श्रवणादिविधिर्यथा ॥ १२ ॥**

ननु षडङ्गोपेतवेदाध्यायिनः सत्यपि वेदार्थावगमे विचारमन्तरेण तात्पर्यानवगमान्न तेनावगतोऽर्थः श्रुत्यभिप्रेतो भवितुमर्हतीति चेत्,

नैवम्; एतच्छ्रुतितात्पर्यस्यैव पुराणेषु प्रतिपादितत्वादित्याशयेनाह—तथैवेति। यथाऽऽत्मदर्शनमुद्दिश्यैव श्रवणादिविधिरिति श्रुतितात्पर्य्यं तथैव पुराणे प्रतिपादितमिति योजना ॥ १२ ॥

**श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः।**
**ज्ञात्वा च सततं ध्येय एते दर्शनहेतवः ॥ १३ ॥**

तान्येव पुराणवचनानि दर्शयति—'श्रोतव्यः' इत्यारभ्य 'तद्धि विज्ञानमीश्वरम्' इत्यन्तैः पञ्चदशभिः। श्रुतिवाक्येभ्यस्तत्त्वमस्यादिभ्यः। उपपत्तिभिः श्रुत्यनुकूलतर्कैः। ज्ञात्वा च श्रवणमननाभ्यां विनिश्चित्य सततं दीर्घकालादनैरन्तर्येण ध्येयो निदिध्यासितव्य इत्यर्थः। एते परस्पराङ्गाङ्गिभावेन दर्शनस्य साक्षात्कारस्य हेतवः उत्पादका भवन्तीत्यर्थः ॥ १३ ॥

**तत्र तावच्छ्रुतिप्रोक्तं श्रवणं नाम केवलम्।**
**उपक्रमादिभिर्लिङ्गैः शक्तितात्पर्य्यनिर्णयः ॥१४॥**

**सर्ववेदान्तवाक्यानामाचार्य्यमुखतः प्रियात्।**
**वाक्यानुग्राहकन्यायशीलनं मननं भवेत् ॥ १५ ॥**

तत्र तावच्छ्रवणं लक्षयति—तत्रेति। त्रिषु मध्ये तावदादौ केवलमङ्गित्वेन प्रधानं श्रवणं नाम आचार्यमुखात् सर्वेषां वेदान्तवाक्यानां गतिसामान्यन्यायेनोपक्रमोपसंहाराभ्यां सापूर्वताफलार्थवादोपपत्तिरूपैर्लिङ्गैरद्वितीये ब्रह्मणि तात्पर्यावधारणमिति सार्द्धस्य योजना। मननं लक्षयति—वाक्येति। श्रुतिवाक्यानुग्राहकतर्कैः श्रुतार्थस्य शीलनं सम्यक्चिन्तनं मननं नामेत्यर्थः ॥ १४—१५ ॥

**निदिध्यासनमैकाग्र्यं श्रवणे मननेऽपि च ।**
**निदिध्यासनसञ्ज्ञं मननञ्च द्वयं बुधाः ॥ १६ ॥**

निदिध्यासनं लक्षयति—निदिध्यासनमिति । श्रवणे मननेऽपि श्रवण-मननाभ्यां विनिश्चितेऽर्थे चित्तसमाधानं विजातीयप्रत्ययतिरस्कारपूर्वक-सजातीयप्रत्ययप्रवाहीकरणलक्षणं निदिध्यासनं नामेत्यर्थः ॥ १६ ॥

**फलोपकारकाङ्गं स्यात्तेनासम्भावना तथा ।**
**विपरीता च निर्मूलं प्रविनश्यति सत्तमाः ॥ १७ ॥**

तयोः फलमाह—निदिध्यासनसंज्ञमिति सार्द्धेन । श्रवणेन तत्त्वसाक्षात्कारे फले जननीये द्वयमप्युपकारकाङ्गं स्यादिति तेन द्वयेन मननेनासम्भावना प्रमाणप्रमेयगत्या विनश्यति । निदिध्यासनेन विपरीता देहाद्यात्मत्वाभिमतिरूपा निर्मूलं यथा स्यात्तथा प्रविनश्यति हे सत्तमा हे बुधा इति योजना ॥ १७ ॥

**प्राधान्यं मननादस्मिन्निदिध्यासनतोऽपि च ।**
**उत्पत्तावन्तरङ्गं हि ज्ञानस्य श्रवणं बुधाः ॥ १८ ॥**

श्रवणस्य प्राधान्यं सोपपत्तिकमाह—प्राधान्यमिति । मननान्निदि-ध्यासनतोऽपि चास्मिन् श्रवणे प्राधान्यमस्ति कुतः ? इत्यत आह—ज्ञान-स्योत्पत्तौ श्रवणं हि यस्मादन्तरङ्गं साक्षात्तत्त्वज्ञानसाधनमित्यर्थः ॥ १८ ॥

**तटस्थमन्यव्यावृत्त्या मननं चिन्तनं तथा ।**
**इतिकर्त्तव्यकोटिस्थाः शान्तिदान्त्यादयः क्रमात् ॥ १९ ॥**

मननध्यानयोस्तदङ्गत्वमाह—तटस्थमिति । अन्यव्यावृत्त्या असम्भावनादिदोषनिरासेन तद्रूपं तटस्थं श्रवणाङ्गतया साक्षात्तत्त्वसाधन-

कोटावप्रवेशादित्यर्थः । श्रवणेन तत्त्वज्ञाने जननीये इतिकर्त्तव्य-कोटिप्रविष्टाः शान्त्यादयः क्रमात् पूर्वापरीभावादित्यर्थः । शान्त्यादीनां मननादेश्चेति कर्त्तव्यकोटिप्रवेशतुल्यत्वेऽपि दर्शपूर्णमासयागे प्रयाजानुयाजवत् पूर्वापरीभावस्तु विशेषः । शान्त्यादीनां श्रवणात्पूर्वभावः मननध्यानयोः श्रवणादर्वाचीनत्वमिति भावः ॥ १९ ॥

**ततः सर्वाङ्गनिष्ठस्य प्रत्यग्ब्रह्मैक्यगोचरा ।**
**या वृत्तिर्मानसी शुद्धा जायते वेदवाक्यतः ॥ २० ॥**

**तस्यां या चिदभिव्यक्तिः स्वतः सिद्धा च शाङ्करी ।**
**तदेव ब्रह्मविज्ञानं तदेवाज्ञाननाशकम् ॥ २१ ॥**

यावत्तत्त्वसाक्षात्कारोदयस्तावच्छान्त्यादिसहितश्रवणाद्यावृत्तिरावश्यकीति वदञ्श्रवणादेः समुदितस्य फलमाह—तत इति द्वाभ्यां । ततः श्रवणादिपरिपाकानन्तरं सर्वाङ्गेषु तत्त्वज्ञानसाधनेषु तत्परस्य प्रत्यग्ब्रह्मैक्यविषया या वृत्तिः शुद्धा सन्देहादिदोषशून्या मानसी अन्तःकरणपरिणामविशेषो वेदवाक्यप्रमाणाज्जायते । तस्यां वृत्तौ या चितोऽभिव्यक्तिः सा स्वतः सिद्धा, तस्या नित्यतया साध्यत्वाभावात् । शाङ्करी शं सुखङ्करोतीति शङ्करः अद्वयानन्दं ब्रह्म, "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" ( बृ० ४ । ३ । ३२ ) इति श्रुतेः; तत्सम्बन्धिनी । तदेव ब्रह्मविज्ञानं तत्त्वसाक्षात्कारः, तदेवाज्ञाननाशकं सकलाज्ञानतत्कार्यबाधकमिति योजना ॥ २०—२१ ॥

**प्रत्यग्ब्रह्मैक्यरूपा या वृत्तिः पूर्णाऽभिजायते ।**
**शब्दलक्षणसामग्र्या मानसी सुदृढा भृशम् ॥ २२ ॥**

**तस्याश्च द्रष्टृभूतस्तु प्रत्यगात्मा स्वयंप्रभः ।**
**स्वस्य स्वभावभूतेन ब्रह्मभूतेन केवलम् ॥ २३ ॥**

स्वयं तस्यामभिव्यक्तस्तद्रूपेण मुनीश्वराः ।
ब्रह्माऽविद्यासमाख्यं सदज्ञानं चित्प्रकाशितम् ॥२४॥

प्रतीत्या केवलं सिद्धं दिवाभीतान्धकारवत् ।
अभूतं वस्तुगत्यैव स्वात्मना ग्रसते स्वयम् ॥ २५ ॥

स्वात्मनाऽज्ञानतत्कार्यं ग्रसन्नात्मा स्वयं बुधाः ।
स्वपूर्णब्रह्मरूपेण स्वयमेवावशिष्यते ॥ २६ ॥

ननु ब्रह्मात्मैक्याकारावृत्तिरज्ञानं तत्कार्यञ्च बाधते इत्युक्तम् । सा वृत्तिः किं नित्या ? अनित्या वा ? आद्ये द्वैतापत्तिः । द्वितीये तस्यानिवर्त्तकं वृत्त्यन्तरञ्चेत्तर्ह्यनवस्था, स्वयमेव चेत्, तदात्माश्रय इत्यादिशङ्कां परिहरन् प्रकारान्तरमेवाह—प्रत्यगित्यादिपञ्चकेन । शब्द एव लक्षणमसाधारणं साधनं यस्यां सा श्रवणादिसाधनसामग्री तया शब्दादिसामग्र्या श्रवणादिसाधनसामग्र्या या वृत्तिः प्रत्यग्ब्रह्मैक्याकारा पूर्णवस्तुविषयतया पूर्णमानसी भृशमतिशयेन सुदृढा सन्देहविपर्यासशून्यत्वेनाभिजायते, तस्या वृत्तेर्द्रष्टृभूतो यः स्वयंप्रभः स्वप्रकाशः प्रत्यगात्मा स्वस्य स्वभावभूतेन नित्यकूटस्थरूपेण, ब्रह्मभूतेन केवलमद्वयानन्दरूपेण, स्वयं तस्यां वृत्तौ तद्रूपेण अखण्डैक्यरूपेणाभिव्यक्तः सम्यगारूढः सन् ब्रह्माविद्यासमाख्या नामधेयं यस्याऽज्ञानस्य तत्पूर्वमज्ञानकाले चिता साक्षिणा प्रकाशितमप्यज्ञोऽहमिति प्रतीतिमात्रसिद्धं सद् दिवाभीत उलूकस्तत्प्रतीतिसिद्धो यो मध्यंदिनवर्त्तिनि दिवाकरेऽन्धकारस्तद्वद् वस्तुगत्या अभूतमविद्यमानमेवाज्ञानं स्वयं साक्षी स्वात्मना स्वस्वरूपेणाभिव्यक्तो ग्रसते । एवमज्ञानं तत्कार्यञ्च स्वस्वरूपेण स्वयमात्मा ग्रसन्नेव पूर्णं स्वभावतोऽपरिच्छिन्नं यद्ब्रह्म तद्रूपेण स्वयमेवावशिष्यते इति पञ्चानां योजना ॥ २२—२६ ॥

**एवंरूपावशेषस्तु स्वानुभूत्येकगोचरः ।**
**येन सिद्ध्यति विप्रेन्द्रास्तद्धि विज्ञानमीश्वरम् ॥२७॥**

एवमिति । एवंरूपो योऽवशेषः सर्वदृश्यबाधावधिभूतः स तु स्वानुभूत्येकगोचरः स्वरूपभूता याऽनुभूतिस्तदेकगोचरः स्वसंवेद्यः, अवेद्यत्वे सत्यपरोक्षरूपो येन सिद्ध्यति—स्वस्वरूपेण येन स्वतः सिद्ध एव सिद्ध्यतीत्युपचर्यते तद् हि यस्मादीश्वरमीश्वरस्वरूपभूतं विज्ञानमित्यर्थः । तथा च प्रत्यगभिन्नं ब्रह्मैव चरमवृत्त्यारूढं सदज्ञानतत्कार्यनिवर्त्तकमिति न कोऽपि दोष इति भावः ॥ २७ ॥

**इत्यतः श्रुतिरप्यात्मज्ञानमुद्दिश्य सत्फलम् ।**
**मननध्यानसंयुक्तं विधत्ते श्रवणं विभोः ॥ २८ ॥**

एवं "आत्मा वा अरे" ( बृ० ४ । ५ । ६ ) इति श्रुतेस्तात्पर्य्यं पुराणवचनसिद्धं प्रदर्श्य प्रकृते योजयति—इतीति । इत्यतः श्रुतिसिद्धार्थस्य पुराणे प्रतिपादितत्वात् सत्फलं सद्ब्रह्म तत्प्राप्तिरेव फलं यस्यात्मज्ञानस्य तदित्यर्थः । विभोरात्मतत्त्वस्य । सुगममन्यत् ॥ २८ ॥

**ननूपपद्यते नैवं श्रवणे युक्तितो विधिः ।**
**तिस्रो विधा विधेस्तत्र किंविधः श्रवणे विधिः ॥२९॥**

श्रवणे विधिर्न सम्भवतीत्याक्षिपति—नन्विति । तिस्रो विधाः प्रकारा विधेः । तत्र तेषु त्रिषु प्रकारेषु मध्ये श्रवणे किम्प्रकारको विधिरित्यर्थः ॥ २९ ॥

**अपूर्वः परिसंख्यानं नियमो वा विधिर्मतः ।**
**नापूर्वो विधिरत्रास्ति ज्योतिष्टोमादियागवत् ॥३०॥**

असम्भवमेव प्रदर्शयितुं विकल्पयति—अपूर्व इति । स किं ज्योतिष्टोमादेरिव श्रोतव्य इत्यत्राऽपूर्वविधिः ? किं वा, "पञ्च पञ्चनखा भक्ष्याः" इत्यादिवत्परिसंख्याविधिः ? उताहोऽवघातादिवन्नियमविधिः ? इति विकल्प्य प्रथमं दूषयति—नाऽपूर्व इति । अत्र श्रवणे नाऽपूर्वो विधिरस्तीत्यन्वयः ॥ ३० ॥

**वेदान्तश्रवणादीनां ब्रह्मज्ञानफलं प्रति ।**
**अन्वयव्यतिरेकाभ्यां क्लृप्तसाधनता यतः ॥ ३१ ॥**
**प्रसिद्धं वैद्यशास्त्रादिश्रवणस्य तदास्पदम् ।**
**ज्ञानं प्रति यतो लोके साधनत्वमबाधितम् ॥ ३२ ॥**

तत्र हेतुमाह—वेदान्त इति । वेदान्तश्रवणादीनां दृष्टफलब्रह्मज्ञानं प्रति साधनत्वस्यान्वयव्यतिरेकाभ्यां सिद्धत्वात् । प्रसिद्धं हि लोके वैद्यशास्त्रश्रवणस्य तद्विषयावगमं प्रति साधनत्वमिति नाऽपूर्वविधिरिति द्वयोर्योजना ॥ ३१—३२ ॥

**ननूपायापरिज्ञानादलौकिकसमीक्षणे ।**
**अपूर्वविधिरेवायं श्रोतव्य इति चेन्नहि ॥ ३३ ॥**

अपूर्वविधिसिद्धिं शङ्कते—नन्विति । परिहरति नहीति ॥ ३३ ॥

**विचारस्य विचार्यार्थनिर्णयं प्रति हेतुता ।**
**अपरोक्षप्रमाणस्य तत्साक्षात्कारहेतुता ॥ ३४ ॥**

तत्रोपपत्तिमाह—विचारस्येति । यद्विषयको यो विचारः स तन्निर्णयं प्रति हेतुः, अन्यथा तस्य वैयर्थ्यं स्यात् । एवमपरोक्षवस्त्ववबोधकप्रमाणस्य तत्साक्षात्कारहेतुत्वं लोकप्रसिद्धम् । अन्यथा तस्य

भ्रमत्वापत्तिः, अन्यथा स्थितस्यान्यथा बोधनादिति नाऽपूर्वविधिः श्रवणे इति तात्पर्यार्थः ॥ ३४ ॥

**न द्वितीयो यतस्तत्त्वसाक्षात्कारस्य नान्यतः ।**
**श्रुतिमौलेः कथञ्चिद्वा प्राप्तिसम्भव इष्यते ॥ ३५ ॥**

द्वितीयं दूषयति—न द्वितीय इति । परिसंख्याविधिर्नास्तीत्यर्थः । पञ्चनखापञ्चनखभक्षणयोरन्यतः प्राप्तावन्यपरिवर्जनवदात्मतत्त्वसाक्षात्कारस्य वेदान्तातिरिक्तात् प्राप्त्यसम्भवादिति तात्पर्यार्थः ॥ ३५ ॥

**चिकित्साशास्त्रवत्प्राप्तव्यापारान्तरवारिणी ।**
**श्रवणे परिसंख्याऽत्र किन्न स्यादिति चेच्छृणु ॥ ३६ ॥**

परिसंख्यासिद्धिं शङ्कते—चिकित्सेति । यथा चिकित्साशास्त्राध्ययनसमये अन्यव्यापारोऽपि न विरुद्ध्यते, तथा वेदान्तश्रवणादिसमयेऽपि प्राप्तव्यापारान्तराविरोधस्य वारिणी परिसंख्या किन्न स्यादिति योजना । परिहरति—शृण्विति ॥ ३६ ॥

**श्रवणं ह्यागमाचार्य्यवाक्यजं ज्ञानमिष्यते ।**
**अयोग्येऽत्र विधिर्नास्ति युक्त्याप्येवं विचार्य्यताम् ३७**

तत्रोपपत्तिमाह—श्रवणमिति । अत्र श्रवणज्ञानेऽयोग्ये कर्त्तुमकर्त्तुमन्यथाकर्त्तुमशक्यत्वाद्विध्यनर्हे विधिर्नास्तीत्यर्थः ॥ ३७ ॥

**नान्त्यो नियमजादृष्टकल्पकाभावतो विधिः ।**
**नादृष्टजन्यमद्वैतज्ञानं वा व्यतिरेकतः ॥ ३८ ॥**

तृतीयं दूषयति—नान्त्य इति । अन्त्यो नियमविधिर्नास्तीत्यन्वयः । तत्र हेतुमाह—नियमजेति । नियमादृष्टस्य कल्पकाभावात् । अवघातादौ तु नियमादृष्टजन्यपरमापूर्वमेवैतत्कल्पकम् । न च ब्रह्मज्ञानमदृष्टजन्यं केवलव्यतिरेकाभावादित्यर्थः । अव्यतिरेकत इति च्छेदः ॥ ३८ ॥

**न हि सत्यपि वेदान्तश्रवणादौ न दृश्यते ।**
**अदृष्टाभावदोषेण ब्रह्मज्ञानसमुद्भवः ॥ ३९ ॥**

व्यतिरेकाभावमुपपादयति—नहीति । नहि वेदान्तश्रवणादौ सत्यनियमादृष्टाभावमात्रापराधेन ब्रह्मज्ञानानुत्पत्तिर्दृष्चरीत्यर्थः ॥ ३९ ॥

**कथञ्चित्तत्त्वबोधस्यादृष्टजन्यत्वमिच्छताम् ।**
**विधिर्भाष्यविरुद्धोऽयं स विधिस्तैर्निराकृतः ॥ ४० ॥**

तदङ्गीकारे सम्प्रदायविरोध इत्याह—कथञ्चिदिति । ज्ञानस्य कथञ्चिददृष्टजन्यत्वेऽप्ययं विधिर्भाष्यविरुद्धः । समन्वयसूत्रव्याख्यानावसरे महता प्रयत्नेन तैर्भाष्यकृद्भिः स विधिः श्रवणज्ञानविधिर्निराकृत इत्यर्थः ॥ ४० ॥

**अन्यथा निगमान्तानां वाक्यभेदस्त आपतेत् ।**
**ब्रह्मात्मैक्यपरत्वेन विधिनिष्ठतया तथा ॥ ४१ ॥**

विपक्षे बाधकान्तरमप्याह—अन्यथेति । श्रवणविध्यङ्गीकारे वेदान्तानां विधिपरत्वं ब्रह्मपरत्वञ्चेति वाक्यभेदप्रसङ्ग इत्यर्थः ॥ ४१ ॥

**तस्मान्नास्ति विधिः कश्चिच्छ्रवणादाविति स्फुटम् ।**
**एवं प्राप्ते समाधानं सम्यगत्राऽभिधीयते ॥ ४२ ॥**

पूर्वपक्षमुपसंहरति—तस्मादिति । यस्मात्पूर्वोक्तरीत्या युक्तिविरोधस्तस्माच्छ्रवणे विधिर्नास्तीत्यर्थः । एवं पूर्वपक्षे प्राप्ते समाधानं प्रतिजानीते—एवमिति ॥ ४२ ॥

**तावददृष्टफलस्यापि धर्मज्ञानस्य साधने ।**
**अर्वाचीनपुमर्थस्य स्वीकृतोऽध्ययने विधिः ॥ ४३ ॥**
**किमुत्कृष्टपुमर्थस्य साक्षात्कारस्य सच्चितः ।**
**साधने श्रवणे वाच्यं विधिरस्तीति सर्वथा ॥ ४४ ॥**

श्रवणे विधिं कैमुत्येन साधयति—तावदिति द्वाभ्याम् । दृष्टफलस्यापि धर्म्मज्ञानस्य साधनेऽध्ययने नियमविधिस्तावदङ्गीकृत एव । यदा त्वर्वाचीनपुरुषार्थे परोक्षे धर्मज्ञानेऽप्येवं तदा किमु वक्तव्यं सर्वथा परमपुरुषार्थब्रह्मसाक्षात्कारसाधने श्रवणे नियमविधिरिति द्वयोर्योजना ॥ ४३—४४ ॥

**कल्पकं यदि यागीयापूर्वं नियमजं विधिः ।**
**अध्ययने तदा ब्रह्मज्ञानं तत्कल्पकं श्रुतौ ॥ ४५ ॥**

उभयत्र कल्पकसाम्यमप्यस्तीत्याह—कल्पकमिति । यद्यध्ययने नियमादृष्टजन्यं यागीयापूर्वं तत्कल्पकं स्यात्तर्हि श्रुतौ श्रवणेऽपि ब्रह्मज्ञानं तत्कल्पकमस्त्विति योजना ॥ ४५ ॥

**समस्तादृष्टजन्यत्वं ब्रह्मज्ञानस्य सम्मतम् ।**
**सर्वकर्माखिलं पार्थ ! ज्ञाने परिसमाप्यते ॥ ४६ ॥**

ब्रह्मज्ञानस्यादृष्टजन्यत्वं प्रमाणारूढं करोति—समस्तेति ॥ ४६ ॥

**अत्र सर्वपदेनोक्तं यागाद्युत्थमदृष्टकम् ।**
**अदृष्टं श्रवणाद्युत्थमखिलञ्चेति निर्णयः ॥ ४७ ॥**

समस्तादृष्टजन्यत्वं ब्रह्मज्ञानस्य कथमनेन वाक्येन प्रतिपाद्यते इत्यत आह—अत्रेति । अत्र भगवद्गीताचतुर्थाध्यायस्य वाक्ये प्रसिद्धयागादीनेवापेक्ष्य सर्वग्रहणमिति भ्रमं व्युदस्य श्रवणादेरपि संग्रहायैवाखिलमित्युक्तम्, अन्यथा पौनरुक्त्यादिति तात्पर्यार्थः ॥ ४७ ॥

**योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम् ।**
**स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥ ४८ ॥**

वेदाध्ययने स्मृत्युक्तप्रत्यवायान्यथानुपपत्तिरपि तत्कल्पिकेति वैषम्यं शङ्कते—य इति सार्द्धेन ॥ ४८ ॥

**इत्येवं प्रत्यवायञ्चेदपेक्ष्याऽत्र विधिर्मतः ।**
**तथैव प्रकृतेऽप्यस्तु निन्दा ह्यकरणे श्रुतेः ॥ ४९ ॥**

तदाश्रवणेऽपि प्रत्यवायस्मृत्यन्यथानुपपत्तिस्तत्कल्पिकाऽस्त्विति साम्येन समाधत्ते—तथैवेति सार्द्धेन । हि यस्मात्स्मृतौ श्रुतेः श्रवणस्याप्यकरणे निन्दा श्रूयत इत्यर्थः ॥ ४९ ॥

**नित्यं कर्म परित्यज्य वेदान्तश्रवणं विना ।**
**वर्त्तमानस्तु संन्यासी पतत्येव न संशयः ॥ ५० ॥**

स्मृतिवाक्यमुदाहरति—नित्यमिति ॥ ५० ॥

**ननु ब्रह्मात्मतत्त्वस्य निर्विशेषतया नहि।**
**तज्ज्ञानहेतुता प्राप्तिरन्यतः श्रवणं विना॥ ५१॥**

नियमासम्भवं शङ्कते—नन्विति। ब्रह्मज्ञाने श्रवणं विनान्वयव्यतिरेकादीनां नास्ति साधनभावप्राप्तिः, निर्विशेषस्य ब्रह्मणो वेदान्तैकसमधिगम्यत्वात्। तत्कथं नियमसिद्धिः, पक्षान्तरे प्राप्त्यभावादित्यर्थः॥ ५१॥

**मैवं यथाऽवघातेऽस्ति नियमः श्रवणे तथा।**
**विनापि पाक्षिकीं प्राप्तिमस्तु वाप्यत्र न क्षतिः॥ ५२॥**
**व्रीहीनित्यत्र शास्त्रैकगम्यापूर्वीययोगिषु।**
**अन्यतो दलनादेश्चाप्राप्तावप्युच्यते तथा॥ ५३॥**

समाधत्ते—मैवमिति। व्रीहीनवहन्तीत्यत्र शास्त्रैकगम्यापूर्वीयव्रीहिष्वन्यतो दलनाद्यप्राप्तावप्यवघाते यथा नियमः, तथा श्रवणेऽपि पाक्षिकत्वमन्तरेणैव नियमोऽस्तु, तत्र न काचिदनुपपत्तिरिति द्वयोर्योजना॥ ५२—५३॥

**अथ सामान्यरूपेण तत्र प्राप्तिमपेक्ष्य चेत्।**
**व्रीहिमात्रेऽस्ति नियमस्तदत्रापि समं तदा॥ ५४॥**
**व्रीहिमात्रसमाकारस्तत्र यद्वत्तथाऽत्र च।**
**विषयज्ञानमात्रेऽस्ति सामान्याकारसम्भवः॥ ५५॥**

प्रकारान्तरेऽपि साम्यमाह—अथेति। अथ व्रीहिमात्रसाधारणाकारेण प्राप्तिमपेक्ष्य तत्र नियमस्तदत्रापि समानं विषयज्ञानमात्रसाधारणाकारस्य सुवचत्वादिति द्वयोर्योजना॥ ५४—५५॥

अथाऽपूर्वविधिस्तत्र फलतो नियमो भवेत् ।
श्रवणेऽपि तथा तर्हि फलतः स भविष्यति ॥ ५६ ॥

प्रकारान्तरेऽपि साम्यमाह—अथेति। अथावघातेऽपूर्वविधिरेव सन् फलतो नियम इति व्यवह्रियेत श्रवणेऽपि तथा भविष्यतीति साम्यम्॥५६॥

न च भाष्यविरोधोऽपि तत्त्वज्ञाने विधिर्यतः ।
निराकृतो न चान्यत्र श्रवणे ज्ञानसाधने ॥ ५७ ॥

सम्प्रदायविरोधं परिहरति—न चेति ॥ ५७ ॥

सति ज्ञानविधाने हि प्रकृतिप्रत्ययावुभौ ।
प्रत्ययार्थं सह ब्रूतः प्राधान्येनेति शास्त्रतः ॥ ५८॥
प्राधान्यात्प्रत्ययार्थस्य नियोगस्यैव सर्वथा ।
प्रकृत्यर्थतया ब्रह्मदर्शनस्य च गौणता ॥ ५९ ॥
तद्विशेषणभूतस्य ब्रह्मणः सुतरां भवेत् ।
गौणत्वं न ततो ब्रह्म सिद्ध्येद्वेदान्तवाक्यतः ॥ ६० ॥

ननु तैरपि किमर्थं ज्ञाने विधिर्निराकृत इत्यत आह—सतीत्यादित्रिभिः। "दर्शनविधाने हि प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः प्राधान्येन" इति न्यायेन प्रत्ययार्थस्य नियोगस्यैव प्राधान्याद्, दर्शनस्य प्रकृत्यर्थतया गुणभूतत्वेन तद्विशेषणस्य ब्रह्मणोऽपि सुतरां गुणभावः स्यात्ततो न वेदान्तैर्ब्रह्म सिद्ध्येदिति त्रयाणां योजना ॥ ५८—६० ॥

ब्रह्मदर्शनमुद्दिश्य प्रधानफलभावतः ।
श्रवणादि विधाने तु न दोषः स्यान्मनागपि ॥ ६१ ॥

श्रवणे तदङ्गीकारे तु न काचित्क्षतिरित्याह—ब्रह्मेति। फलत्वेन प्रधानं ब्रह्मदर्शनमुद्दिश्य श्रवणादिविधाने तु न कोऽपि दोष इति योजना ॥ ६१ ॥

**यज्ञेनेत्यादिवाक्येऽपि ज्ञानार्थं तद्विधिर्मतः।**
**विधिस्तु धारणेऽपूर्वत्वादित्यत्र च तान्त्रिकैः ॥ ६२ ॥**

नन्वेवमुपक्रमोपसंहाराभ्यामात्मतत्त्वप्रतिपादनपरे वेदान्तवाक्ये कथमवान्तरवाक्यैः श्रवणादिविधानं कल्प्यते वाक्यभेदप्रसङ्गादित्याशङ्क्य वाक्यभेदश्च किमेकदेशिनाऽऽपाद्यते? किं वा तान्त्रिकेण? इति विकल्प्याद्यं प्रत्याह—यज्ञेनेति। वेदान्तेऽप्यवान्तरवाक्यभेदेन "विविदिषन्ति यज्ञेन" (बृ० ४।४।२२) इत्यत्र ज्ञानसाधनत्वेन यज्ञादिविध्यङ्गीकारादित्यर्थः। द्वितीयं प्रत्याह—विधिस्त्विति। प्रेताग्निहोत्रप्रकरणे "अधस्तात्समिधं धारयन्ननुद्रवेद्" इत्यधो धारणं विधायोपरि हि देवेभ्यो धारयतीति पठितम्। तत्र दैविकमुपरिधारणमन्यत्र प्रकरणमध्ये श्रुतमपि विधेयमिति विधिस्तु धारणेऽपूर्वत्वादित्यधिकरणे निर्णीतत्वादित्यर्थः ॥ ६२ ॥

**तिस्रो रात्रीर्व्रतं कुर्यादितिवत्प्रकृतेऽस्तु सः।**
**का हानिस्तव वक्तव्यमिति निर्दूषणं मतम् ॥ ६३ ॥**

अथ कथञ्चिदेतदधिकरणं प्रभाकरो नाङ्गीकुर्यात्तं प्रति समाधानान्तरमाह—तिस्र इति। दर्शपूर्णमासप्रकरणे "तिस्रो रात्रीर्व्रतं चरेत्" इति रजस्वलाया व्रतकलापिविधिमङ्गीकरोत्येव प्रभाकरः। तस्माद्ब्रह्मप्रकरणेऽपि श्रवणं विधीयतां का तव हानिस्तत्र वक्तव्यम्। त्वयेति शेषः। इतीत्यतो हेतोर्मन्मतं निर्दूषणम्। "यत्रोभयोः समो दोषः परिहारश्च तत्समः" इति न्यायेनास्मन्मते त्वया दूषणोद्भावनं न कर्तुं शक्यमिति भावः ॥ ६३ ॥

**यद्यहर्थितया तव्यप्रत्ययस्य समन्वयात् ।**
**न विधानार्थता तर्हि वचनान्तरतो भवेत् ॥ ६४ ॥**

अथ तत्रापि तवापरितोषश्चेत्तर्हि प्रकारान्तरं शृण्वित्याह—यदीति । यदि रजस्वलाव्रतकलापस्य प्रकरणान्वयासम्भवादगत्या वाक्यभेदाश्रयणम् । इह तु तव्यप्रत्ययस्याहार्थत्वेनाप्यन्वयसम्भवान्न तद्युक्तमिति तर्हि वचनान्तरेण भवेदित्यर्थः ॥ ६४ ॥

**पाण्डित्यं ब्राह्मणस्तस्मान्निर्विद्येत्यादिवेदगीः ।**
**भवतु श्रवणादीनामविवादाविधायिका ॥ ६५ ॥**

**तच्छ्रुतेर्गीरनारभ्याऽधीतत्त्वेन न केनचित् ।**
**विरुद्ध्यते विधिस्तस्मान्निर्दुष्टः श्रवणादिके ॥ ६६ ॥**

वचनान्तरमाह—पाण्डित्यमिति । "तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद्बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः" ( बृ० ३ । ५ । १ ) इति वाक्यं श्रवणादिविधायकमस्तु, तस्यानारभ्याधीतत्वेनोक्तविरोधाभावात् । तस्माच्छ्रवणादौ विधिर्निर्दुष्ट एवेति सिद्धमित्यर्थः । यस्माद् ब्रह्मभावः परमपुरुषार्थस्तस्माद् ब्रह्मबुभूषुरुपनिषत्तात्पर्य्यनिर्णयरूपं पाण्डित्यं निःशेषेण सम्पाद्य बालवन्नीरागद्वेषत्वेन युक्तोऽसम्भावनानिराकरणाय युक्तीरनुचिन्तयन्नवस्थातुमिच्छेत् । ततः पाण्डित्यबाल्ये निःशेषेण सम्पाद्याऽथ मुनिर्निदिध्यासनं कुर्यादिति श्रुत्यर्थः ॥ ६५—६६ ॥

**यद्यप्यापाततस्तत्र श्रवणादि न भासते ।**
**विचारे क्रियमाणे तु तत्परत्वं हि लभ्यते ॥ ६७ ॥**

ननु तत्र पाण्डित्यादिशब्दैः कथं श्रवणादिविधानमन्यार्थवाचकत्वात्तेषामिति तत्राह—यदीति। आपाततः श्रवणाद्यप्रतीतावपि वाक्यार्थपर्यालोचने वाक्यस्य श्रवणादिविधिपरत्वं निश्चीयते इत्यर्थः ॥ ६७ ॥

**पाण्डित्यबाल्ययोरर्थः सूत्रकारेण वर्णितः।**
**सहकार्यन्तरेत्यत्र मौनस्यापि विधानतः ॥ ६८ ॥**

एतदेव विशदयति—पाण्डित्येति। सूत्रकारेणैव "सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवद्" (ब्र० सू० ३। ४। ४७) इत्यधिकरणे पाण्डित्यशब्दिते श्रवणे बाल्यशब्दितमननसहिते विधिं सिद्धवत्कृत्याथ मुनिरिति वाक्यशेषे निदिध्यासनरूपत्वेन मौनस्य विद्यासहकारिणो विधिप्रतिपादनादसाम्प्रदायिकत्वं दूरापास्तमित्यर्थः। तद्वतः श्रवणमननवतः पुंसः पक्षेण कृतोपास्तिपुरुषापेक्षया विकल्पेन तृतीयं निदिध्यासनसंज्ञमात्मज्ञानार्थं मुनिशब्दवाच्यं सहकार्यन्तरं विधीयते। श्रवणादाविव मौनेऽपि विधिरस्तीति सूत्रार्थः ॥ ६८ ॥

**विधौ तव्यस्मृतेर्वाक्यभेदेनान्यत्र तद्विधेः।**
**श्रवणे द्विर्विधिर्वाऽस्तु श्रोतव्य इति तद्विधेः ॥ ६९ ॥**

नन्वेवमप्यधीतस्वाध्यायमध्येऽवगतस्य 'श्रोतव्यः' इत्यस्य श्रवणविधेरनुपपत्तिस्तदवस्थैवेत्याशङ्क्याह—विधाविति। तव्यप्रत्ययस्य विधावपि स्मरणात् "तद्विजिज्ञासस्व" इत्यादिषु समानप्रकरणेषु श्रुत्यन्तरेष्ववश्यं वाक्यभेदेन विधेरङ्गीकर्त्तव्यतया त्वदपरितोषस्य निरवकाशात्। न चैकस्यामेव शाखायां "श्रोतव्यः" "पाण्डित्यं निर्विद्य" इत्यादि श्रवणविधिद्वयं पुनरुक्तमिति वाच्यम्, एकत्र विधायापरत्र विधिमनूद्य विशेषकथनाद्। द्विः श्रवणविधिर्वाऽस्तु। अथवा, यथा मैत्रेयी ब्राह्मणम-

पुनरुक्तमेकस्योपसंहाररूपत्वात् । तथा द्विःकृत्वः श्रवणविधिर्भवतु । तस्माच्छ्रोतव्य इति स्थले विधेरुपपन्नत्वमिति शेषः । न काचिदत्रानुपपत्तिरिति भावः ॥ ६९ ॥

**तस्माच्छ्रुतिस्मृतिन्यायसंसिद्धः श्रवणे विधिः ।**
**निर्दोष इति तत्त्वैक्यपरिज्ञानफलावधिः ॥ ७० ॥**

श्रवणविधिमुपसंहरति—तस्मादिति ॥ ७० ॥

**आत्मदर्शनकामेन विरक्तेन मुमुक्षुणा ।**
**आत्मा वेदान्तवाक्येभ्यो द्रष्टव्य इति शास्त्रतः ॥ ७१**
**श्रोतव्यो गुरुमाश्रित्य मन्तव्योऽध्येय आदरात् ।**
**ततो ज्ञानान्महामोहः सकार्यो विनिवर्त्तते ॥ ७२ ॥**

"आत्मा वा अरे द्रष्टव्यः श्रोतव्यः" ( बृ० ४ । ५ । ६ ) इत्यत्र श्रवणविधिप्रतिपादने फलितमाह—आत्मेति द्वाभ्याम् । 'द्रष्टव्यः' इति शास्त्रान्मुक्तिमिच्छता विरक्तेनाधिकारिणा मुक्तिहेतुभूतात्मदर्शनकामेन गुरुमाचार्य्यमाश्रित्य गुरूपसदनविधिना वेदान्तवाक्येभ्य आत्मा आदरादत्यन्तभक्तिश्रद्धापुरःसरं श्रोतव्यः, आदरान्मन्तव्यः, आदराद् ध्येयो निदिध्यासितव्य इति । आदरादिति स्थलत्रयेऽप्यनुषज्यते । ततः किमित्यत आह—तत इति ॥ ७१—७२ ॥

**आत्माऽविद्योद्भवं बन्धं प्रमातृत्वादिविभ्रमम् ।**
**आत्मविद्या समुत्पन्ना समूलं बाधतेऽञ्जसा ॥ ७३ ॥**

ननु प्रमातृत्वादिबन्धस्य सत्यत्वेनानुभूयमानत्वात् कथं तस्याज्ञानमात्रं विरोधिना तत्त्वज्ञानेन विनिवृत्तिः ? इत्याशङ्क्य बन्धस्याज्ञान-

कार्यतया तत्त्वज्ञानेन तन्निवृत्तौ स्थित्ययोगादित्याशयेनाह—आत्माऽविद्येति ॥ ७३ ॥

**आत्माऽविद्याविवर्त्तोऽयं प्रमातृत्वादिविभ्रमः ।**
**तत्राद्योऽयमहङ्काराध्यासः प्रत्यक्चिदात्मनि ॥ ७४ ॥**

ननु प्रमातृत्वादेरात्मधर्मत्वेन प्रतीयमानत्वात् कथमविद्याकार्यत्वम् ? इत्याशङ्क्याह—आत्माऽविद्येति । अतात्त्विकोऽन्यथाभावो विवर्त्तः । तथा च निर्धर्मकस्यात्मनः प्रमातृत्वादेरविद्याविवर्त्तत्वेन न तयोर्धर्मधर्मिभावःतत्प्रतीतेर्भ्रान्तिमात्रशरीरतया न तेन निर्धर्मकत्वक्षतिरिति भावः । प्रमातृत्वाद्यध्यासस्य सर्वानर्थबीजत्वप्रदर्शनाय तद्धेतुभूताहङ्काराध्यासमाह—तत्रेति । तत्र प्रमातृत्वाद्यध्यासेषु मध्ये प्रत्यक्चिदात्मनि मूलाविद्याधिष्ठानत्वेन तदुपहितचैतन्ये आद्योऽयं सर्वानर्थहेतुत्वेन प्रसिद्धः सकलकार्याध्यासापेक्षया प्रथमोऽहङ्कारोऽहमिति शब्दोऽहमिति प्रत्ययश्च तस्याध्यासोऽतस्मिंस्तद्बुद्धिरूप इत्यर्थः ॥ ७४ ॥

**ततः प्राणेन्द्रियादीनां स ततः संसृतिर्दृढा ।**
**अनादिवासनाजालैर्वृतो जीवोऽत्र सज्जते ॥ ७५ ॥**

तत इति । ततोऽहङ्काराध्यासानन्तरमहङ्कारोपहितचैतन्ये प्राणादीनां स चाध्यासः । नह्यहङ्कारप्राणेन्द्रियादीन्यात्मत्वेनानुपादाय प्रमातृत्वादिव्यवहारः केवलचैतन्ये सम्भवति । ततः प्रमातृत्वाद्यध्यासात् संसृतिः जननमरणप्रवाहलक्षणा दृढा तत्त्वज्ञानमन्तरेण दुरुच्छेद्या । संसृतिदार्ढ्यहेतुमाह—अनादीति । अध्यासस्यानादितया तन्मूलवासनानामप्यनादित्वम् । जालशब्दः समूहवचनो मत्स्यादिबन्धनसाधनजालवचनश्च । वासनानामानन्त्यात्तदावृतो जीवोऽत्र संसृतौ सज्जते आसक्ततया निमग्नो भवतीत्यर्थः ॥ ७५ ॥

**तत्र साधनसम्पन्नः शुद्धान्तःकरणः पुमान् ।**
**श्रवणादौ प्रवृत्तः सन् स्वज्ञानं लभतेऽञ्जसा ॥ ७६ ॥**

एवमविद्यामूलकाध्यासकार्यसंसृतिं प्रदर्श्य तन्निवृत्तिप्रकारं संक्षेपेण दर्शयति—तत्रेति । तत्राऽनादौ संसृतिप्रवाहे कश्चित्पुण्यपुञ्जैः पुमान् लब्धाधिकारिशरीरः सुकृतपरिपाकेन शुद्धान्तःकरणस्तत्फलसाधनचतुष्टयसम्पन्नः श्रवणादौ तत्त्वज्ञानसाधने प्रवृत्तः सन्नञ्जसा भगवत्प्रसादादनायासेन स्वस्य ब्रह्मात्मैक्यतत्त्वस्य ज्ञानं साक्षात्कारात्मकं लभत इति योजना ॥ ७६ ॥

**तत्त्वज्ञाने समुत्पन्ने सकार्याज्ञानबाधनात् ।**
**जीवन्मुक्तो निजानन्दे तिष्ठत्युज्झितसंसृतिः ॥ ७७ ॥**

ततः किमित्यत आह—तत्त्वज्ञान इति ॥ ७७ ॥

**तस्मादध्यासमूलस्वाज्ञानबाधोपपत्तये ।**
**आचार्याश्रयणेनात्माऽन्वेष्टव्यः श्रवणादिभिः ॥७८॥**

प्रकृतमुपसंहरति—तस्मादिति । यस्मादज्ञानमूलकोऽनर्थस्तस्मादध्यासमूलभूतात्माज्ञानबाधस्योपपत्तिः सिद्धिर्यस्मात्तत्त्वदर्शनात्तदर्थम् 'आचार्यवान्पुरुषो वेद' ( छा० ६ । १४ । २ ) इत्यादिशास्त्रादाचार्याधीनात्मज्ञानोत्पत्तिः । तस्मात्तदाश्रयणेन सेवादिनाऽनुकूलाचरणेनाभिमुखीकृत्य तमाचार्य्यं ततः श्रवणादिभिरात्मज्ञानसाधनैरात्माऽन्वेष्टव्यो विचारेणान्विष्य ज्ञातव्य इत्यर्थः ॥ ७८ ॥

**श्रवणमननसिद्धब्रह्मविद्यार्कभासा**
**भ्रमतिमिरमशेषं नाशयित्वा समूलम् ।**

निरवधिसुखसिन्धौ यत्कृपालेशयोगाद्
विहरति सुविपश्चित्तं प्रपद्ये मुकुन्दम् ॥ ७९ ॥

इति प्रत्यक्तत्त्वचिन्तामणौ द्वितीयं प्रकरणं सम्पूर्णम् ॥ २ ॥

ससाधनमात्मज्ञानमीश्वरप्रसादाधीनं तत्प्रसादश्च तदनन्यशरणत्वेनैव लभ्यस्तदर्थं तमेवानन्यशरणत्वेनाश्रयेदिति मुमुक्षून् शिक्षयन् स्वयमाश्रयति—श्रवणेति। यत्कृपालेशयोगाच्छ्रवणमननाद्युपायसिद्धब्रह्मविद्यार्कभासा समूलभ्रमतिमिरं मिथ्याज्ञानध्वान्तमशेषं सकार्यं बाधित्वा सुविपश्चित् सम्यक्तत्त्वज्ञानी निरवधिसुखसिन्धावपरिच्छिन्नानन्दसमुद्रे विहरति क्रीडति, "आत्मक्रीड आत्मरतिः" (छा० ७। २५। २) इत्यादिश्रुतेः। तं मुकुन्दं मुक्तिदातृत्वेन प्रसिद्धं भगवन्तं श्रीकृष्णं प्रपद्ये शरणं व्रजामीति योजना ॥ ७९ ॥

शरण्यादिगुणाधारं सारं सारविदां वरम्।
चिदानन्दघनाकारं वारं वारं हरिं नुमः ॥ १ ॥

इति श्रीमन्मुकुन्दपदारविन्दमकरन्दाभिलाषिसदानन्दविद्वत्कृतायां प्रत्यक्तत्त्वचिन्तामणिव्याख्यायां स्वप्रभाभिधायां श्रवणविधिमयूखाभिधं द्वितीयं प्रकरणं समाप्तिमगमत् ॥ २ ॥

---

# अथ तृतीयं प्रकरणम्

अचिन्त्यरूपाय वचोतिगाय
ब्रह्मादिवन्द्याङ्घ्रिसरोरुहाय ।
दृश्यातिगायाऽद्वयचित्सुखाय
नमो मुकुन्दाय रमाश्रिताय ॥ १ ॥

यं श्रीमन्तमुपासते मुनिगणा ब्रह्मादिदेवा रमा
वेदान्ताः समपोह्य दृश्यमखिलं यस्मिन्प्रतिष्ठां गताः ।
आश्रित्यामलबोधगोचरमजं यं मुक्तिभाजो भवन्
हीना अप्यखिलैर्गुणैर्व्रजपतेरङ्के गतं तं भजे ॥ १ ॥
नन्दनन्दनमानन्दमानन्दप्रदमद्भुतम् ।
आनन्दाय सदा वन्दे नन्दाङ्कगतमादरात् ॥ २ ॥

अतीतानन्तरप्रकरणे "श्रवणादिभिरात्मान्वेष्टव्यः" इत्युक्तं तत्र प्रमाणभावाभावाभ्यामनिष्टत्वापादनशङ्कानिराकरणेनात्मनः स्वप्रकाशत्वमुपपादयितुं प्रकरणान्तरमारभमाणः स्वेष्टदेवतानमस्कारव्याजेन प्रकरणप्रतिपाद्यमर्थं सङ्क्षिप्य दर्शयति—अचिन्त्यरूपायेत्यादिपद्यद्वयेन । "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" (तै० २।९) "यन्मनसा न मनुते" (तै० २।५) "यद्वाचानभ्युदितम्" (तै० २।४) इत्यादिश्रुतिसिद्धवाङ्मनसगोचरातीतस्वरूपाय मुकुन्दाय नमोऽस्त्विति सम्बन्धः । तत्र हेतुः—दृश्यातिगायेति । दृश्यं दर्शनकर्मार्हमविद्यातत्कार्यवर्गश्च तदतिक्रान्ताय । ततो जातिगुणक्रियाविशेषणादिवाच्यचिन्त्यधर्मातीतत्वात्तथाभूताय नमः—प्रह्वीभावोऽस्तु । ननु

तथाभूतस्य नमस्कार्यत्वमपि कथमिति तत्राह—मुकुन्दायेति। तथाभूतोऽपि भक्तानुग्रहाय प्रादुःकृतानन्तकल्याणगुणगणालङ्कृतनिरतिशयानवधिकसौन्दर्य्यमाधुर्य्यसौष्ठवपारावारलीलाविग्रहो भगवान्मुकुन्दो नमस्कार्य्य इत्यर्थः। तस्य नमस्कार्य्यत्वमत्यन्तप्रसिद्धमित्याह—ब्रह्मादीति। तथा च द्रष्टृत्वादिगुणकैरीश्वरत्वेन लोकप्रसिद्धैरपि वन्दनीयपदारविन्दत्वान्नमस्कार्यो भगवान्मुकुन्द इत्यर्थः। लीलाविग्रहं भगवन्तं विशिनष्टि—रमाश्रितायेति। रमा ब्रह्मविद्याशक्तिस्तयाऽऽलिङ्गिताय। तथा च ब्रह्मविद्यारूपरमाशक्त्याऽऽलिङ्गितत्वेनैव लीलाविग्रहप्रदर्शनं भगवता क्रियते भक्तानुग्रहायेत्यर्थः। स लीलाविग्रहो भगवान् किंस्वरूप इत्यत्राह—अद्वयचित्सुखायेति। अद्वयं द्वैतवर्जितं यच्चित्सुखं स्वज्योतिरानन्दस्तद्रूप एव लीलाविग्रहो भगवान्मुकुन्दस्तस्मै नमोऽस्त्वित्यर्थः ॥ १ ॥

**मानातिगायानुभवैकधाम्ने**
**मानप्रकाशाय पुमर्थसीम्ने**
**सर्वोत्तमध्येयमहामहिम्ने**
**श्रीमाधवायास्तु नमो विभूम्ने ॥ २ ॥**

एवं सामान्यतः शास्त्रप्रमेयमुक्त्वा प्रारिप्सितप्रकरणस्यासाधारणप्रमेयं सूत्रयति—मानातिगायेति। सर्वप्रमाणातीतायेत्यर्थः। सर्वप्रमाणातीतस्य कथमनुभव इत्यत आह—अनुभवैकधाम्ने इति। अनुभव एवैकं मुख्यं धाम प्रकाशस्तद्रूपायेत्यर्थः। नहि स्वतोऽनुभवरूपोऽनुभवान्तरमपेक्षतेऽनवस्थापातादिति भावः। यद्वा, अनुभवस्यैकमसाधारणं धाम निवासभूमिस्तद्रूपाय। तथा च सर्वानुभवाधिष्ठानवस्तुनोऽतिरिक्तस्यानुभवस्याभावात् कथं तदपेक्षेति भावः। नन्वनुभवजनकानि प्रत्यक्षादीनि प्रमाणानि किमिति स एव सर्वानुभवाधिष्ठान-

मिति तत्राह—मानप्रकाशायेति । प्रमात्राद्यधिष्ठानत्वेन प्रमाणप्रकाशो यस्मात्तस्मै । नहि साक्षिचैतन्यमृते प्रमाणानां स्वतोऽनुभवजनने शक्तिः, प्रमाणशब्दवाच्यानां वृत्तिविशेषाणां जडत्वात् । ततस्तदारूढं चैतन्यमेवानुभवजनकमिति भावः । ननु प्रमाणादिभासकत्वेन प्रसिद्धस्यात्मनः सुखादिभिन्नतया पुमर्थत्वाभावात् कथं नमस्कार्यत्वम् ? इत्यत आह—पुमर्थसीम्ने इति । "न स पुनरावर्त्तते" ( छा० ८ । १५ । १ ) इति श्रुत्या तस्यैव परमपुरुषार्थत्वेन निश्चितत्वात् पुरुषार्थत्वं त्वत्रैव पर्यवसन्नमित्यर्थः । तत्र हेतुमाह—विभूम्ने इति । विगतो भूमा यस्माद्—यमपेक्ष्यान्यो भूमा नास्तीत्यर्थः । "यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा" (छा० ७ । २४ । १) "यो वै भूमा तत्सुखं नाल्पे सुखम्" ( छा० ७ । २३ । १ ) इत्यादि श्रुतिसिद्धापरिच्छिन्नसुखस्वरूपस्य विभूम्नो ब्रह्मण एव पुमर्थसीमत्वमिति भावः । नन्वविद्यादिप्रतिबन्धसत्त्वे कथं पुमर्थसीमत्वेन तस्य ज्ञानमिति तत्राह—श्रीमाधवायेति । श्रिया ब्रह्मविद्यया मां मायाशक्तिं सर्वव्यामोहकर्त्रीं धुनोति भक्तानामिति श्रीमाधवः । यद्वा, मा वेदान्तजा प्रमा तस्या धवः पतिः साक्षादनायासेन भक्तेभ्यो दातृत्वेन स्वामीति माधवः ।

"मा विद्या च हरेः प्रोक्ता तस्या ईशो यतो भवान् ।
तस्मान्माधवनामासि धवः स्वामीति शब्दितः ॥"

इति हरिवंशे श्रीरुद्रवाक्यम् । श्रीमांश्चासौ माधवश्च स च तस्मै श्रीमाधवाय नमः—प्रह्वीभावोऽस्तु । तथा च तत्त्वज्ञानदानेनाऽविद्यातत्कार्यमपबाध्य पुमर्थसीमत्वेन स्वरूप एव सन् स्वभक्तानां स्वयमेव भगवानाविर्भवतीत्यर्थः । अत एव सर्वोत्तमैः शिवविरञ्च्यादिभिः सद्भिर्ध्येयोऽवश्यं ध्यातव्यो महामहिमा उदारमाहात्म्यं यस्य तस्मै । तथा च मुकुन्दमाधवादिशब्दवाच्यात्मतत्त्वमेव सर्ववेदान्तप्रतिपाद्यत्वेन शास्त्रप्रमेयम्, तदेवात्र प्रतिपाद्यते इति भावः ॥ २ ॥

अखण्डमात्मानमुदारबोधं
सुखामृतं सत्यमशेषहेतुम् ।
प्रमाणमेयादिविभागशून्यं
धिया विदित्वैति नरो विमोक्षम् ॥ ३ ॥

सूत्रितमर्थं विवरीतुमादौ यथोक्तात्मतत्त्वज्ञानेनैव मोक्षसिद्धिरित्याह—अखण्डमिति। स्वगतादिभेदशून्यमात्मानं धिया वेदान्तवाक्यजप्रमारूपान्तःकरणवृत्त्या विदित्वा अयमहमस्मीति साक्षात्कृत्य नरोऽधिकारी विमोक्षमेति प्राप्नोतीत्यन्वयः। तस्य परमपुमर्थत्वमाह—सुखामृतमिति। सुखञ्च तदमृतञ्च तत्। तथा च दुःखात्यन्ताभावोपलक्षितं सुखमेवामृतं मोक्षो न केवलतार्किकाभिमतदुःखाभाव इति तात्पर्यार्थः। तस्याबाध्यत्वमाह—सत्यमिति। जाड्यव्यावृत्त्यर्थमाह—उदारबोधमिति। अपरिच्छिन्नज्ञानघनमित्यर्थः। उदारपदव्यावर्त्यमाह—प्रमाणेत्यादि। निर्विषयज्ञानस्वरूपत्वादपरिच्छिन्नमित्यर्थः। प्रपञ्चंप्रत्यभिन्ननिमित्तोपादानकारणत्वमपि तस्यैवेत्याह—अशेषहेतुमिति। तथा च यथोक्तप्रत्यगभिन्नसर्वाधिष्ठानभूतस्वप्रकाशब्रह्मात्मतत्त्वज्ञानं मोक्षसाधनमिति भावः ॥ ३ ॥

ननूक्तरूपे परमात्मतत्त्वे
प्रमाणमस्त्यत्र न वाऽस्ति चेत्तत् ।
तदा परिच्छेद्यतया जडत्वा-
दनात्मतात्मन्यवभास्यभावात् ॥ ४ ॥

अथात्मनः स्वप्रकाशतयैव सिद्धत्वं वाऽनात्मघटादिवत्प्रमाणाधीनसिद्धिकत्वमिति साधयितुं पूर्वपक्षमुत्थापयति—नन्विति। उक्तरूपे

परमात्मतत्त्वे प्रमाणमस्ति ? न वा ? अस्ति चेत्तर्हि प्रमाणप्रकाश्यत्वेन जडत्वादनात्मताऽऽत्मनि स्यादिति योजना ।। ४ ।।

**न चेत्प्रमाणं परमात्मनीष्टं**
**तदाऽनृतत्वाच्छशशृङ्गकल्पः ।**
**स्यात् प्रत्यगात्मा यत इष्यते न**
**प्रमाणशून्यस्य च सत्त्वमीषत् ॥ ५ ॥**

न चेदिति । एतद्दोषपरिहाराय तत्र प्रमाणं नेष्टं चेत्, तवेति शेषः । तदा प्रमाणरहितस्यानृतत्वादलीकत्वात् शशविषाणतुल्य एव प्रत्यगात्मा स्यात् । कुतः ? इत्यत आह—यत इति । यस्मात्प्रमाणशून्यस्य । चोऽप्यर्थे । ईषदपि सत्त्वं नेष्यते प्रामाणिकैरिति शेषः ॥ ५ ॥

**भवेत्तवोक्तं यदि मानशून्य-**
**तयाऽऽत्मनः स्यादनृतत्वमस्य ।**
**किमर्थमात्माऽयमपेक्षते त-**
**त्प्रमाणमेतद्वद युक्तियुक्तम् ।। ६ ॥**

स्वप्रकाशतयैव सिद्धे प्रत्यक्तत्त्वे न त्वदुक्तविकल्पावकाशइति वक्तुं सिद्धान्ती भूमिकामारचयति—भवेदिति । त्वदुक्तविकल्पावकाशस्तदा भवेद्, यद्यस्य नित्यापरोक्षरूपस्यात्मनो मानशून्यतया स्यादलीकत्वम् । तदेवातिदुर्घटम् । अयमात्मा किमर्थं तत्प्रमाणं लोकसिद्धप्रमाणशब्दवाच्यमपेक्षते ? त्वमेतन्मत्पृष्टस्योत्तरं युक्तियुक्तं वदेति योजना ॥ ६ ॥

**स्वरूपलाभाय किमात्मनो वा**
**प्रतीतये मानमपेक्षतेऽयम् ।**

**न तावदाद्यो यत आत्मनोऽस्य**
**स्वरूपतो नित्यतयाऽनपेक्षा ॥ ७ ॥**

आत्मनः प्रमाणानपेक्षतामुपपादयितुं विकल्पयति—स्वरूपेति। आत्मनः स्वरूपलाभायायमात्मा प्रमाणमपेक्षते? उताहो आत्मप्रतीतये? न तावदाद्यः, यतोऽस्यात्मनः स्वरूपेण नित्यत्वात्प्रमाणाकाङ्क्षाविरहादित्यर्थः ॥ ७ ॥

**अकार्य्य आत्माऽयमनन्त इष्टो**
**मानानपेक्षाऽस्य सदैव सत्ता।**
**न वा प्रमाणं जनकं कदाचि-**
**न्निजप्रमेयस्य भवेन्न दृष्टम् ॥ ८ ॥**

एतदेवोपपादयति—अकार्य्य इति। अयमात्मा अकार्योऽनन्तश्च इष्टः श्रुतीनामिति शेषः। उत्पत्तिनाशशून्यः, अतोऽस्य सदैव सत्ता प्रमाणाकाङ्क्षावर्जिता। नहि कालत्रयेऽप्यबाध्यस्यात्मनः सत्ताप्रमाणाधीनेति वचः युक्तिसहम्। न वा प्रमाणं स्वप्रमेयस्य कदाचिज्जनकं भवेत्। न वा तथा क्वचिद् दृष्टमिति योजना ॥ ८ ॥

**प्रतीतये चेदिदमात्मतत्त्वं**
**ह्यपेक्षते मानमसङ्गवस्तु।**
**तदा विचार्य्यं किमु मानतन्त्रं**
**प्रतीतिमात्रं जडभानमाहो ॥ ९ ॥**

स्वप्रतीतये प्रमाणमपेक्षते इति पक्षं विकल्पयति—प्रतीतये इति। प्रतीतिमात्रं प्रमाणाधीनं जडभानञ्चेति (वेति?) ॥ ९ ॥

**आद्ये प्रमाणेऽपि तदास्ति वाच्यं**
**मानान्तरं ते तदभाव एतत् ।**
**मृषात्मकत्वाच्छशशृङ्गकल्पं**
**स्वमेयसिद्धौ च कथं क्षमेत ॥ १० ॥**

अन्त्ये दोषाभावान्न कदाचित् क्षतिरिति तदुपेक्ष्य प्रथममतिप्रसङ्गेन दूषयति—आद्य इति । तदभावे प्रमाणान्तराभावे एतत्प्रमाणं मृषात्मकत्वाच्छशविषाणतुल्यं ततश्च स्वप्रमेयसाधने कथं समर्थः स्यादित्यर्थः ॥ १० ॥

**मानान्तराङ्गीकृतितः प्रमाणे**
**तवानवस्थेतरथा न सिद्धिः ।**
**अथ प्रमाणं निरपेक्षमेव**
**स्वमेयसिद्धौ क्षमते स्वभानम् ॥ ११ ॥**

अपेक्षतां तर्हि प्रमाणं स्वप्रसिद्धये प्रमाणान्तरमिति नेत्याह—मानान्तराङ्गीकृतित इति । इतरथा तदनङ्गीकारे न प्रमाणसिद्धिरित्यर्थः । अथ प्रमाणं स्वभानं स्वप्रकाशमन्यनिरपेक्षमेव स्वप्रमेयसिद्धौ क्षमते ॥ ११ ॥

**स्वयंप्रकाशस्य न चास्त्यपेक्षा**
**प्रदीपवत्स्वव्यवहारसिद्धौ ।**
**न वा स्वमेयव्यवहारसिद्धौ**
**मानस्य मानान्तरतो व्यपेक्षा ॥ १२ ॥**

एतदेव पूर्वपक्षमुखेनोपपादयति—स्वयमिति सार्द्धेन । स्वप्रकाशस्यान्यनिरपेक्षत्वमेव नहीत्यादिना द्रढीकृतमिति द्रष्टव्यम् ॥ १२ ॥

नहि प्रमाणं खलु साधकं सत्*
स्वसिद्धयेऽप्यन्यदपेक्षते यत् ।
इतीष्यते चेच्छृणु भोः समाधिं
स्वयंप्रकाशं यदि मानमेवम् ॥१३॥

एवं पूर्वपक्षमनूद्य समाधत्ते—इतीति । तथा च प्रतीतिमात्रं प्रमाणाधीनमिति सासहं त्वया त्यक्तव्यमिति भावः ॥ १३ ॥

हन्ताऽस्य विश्वस्य तदाऽखिलस्य
प्रमाणमेयात्मन आसमन्तात् ।
यः साधकः प्रत्यगयं कथं स्यात्
स्वाधीनमानेन हि सिद्ध एषः ॥१४॥

आत्मनः स्वभानेऽन्यानपेक्षत्वं कैमुत्येन साधयति—हन्तेति । हन्तेति अनुमतौ । स्वप्रकाशस्य स्वभासनेऽन्यानपेक्षत्वमिति यदुक्तं तत्र ममाप्यनुमतिरस्तीत्यर्थः । प्रमाणप्रमेयादिरूपस्य समस्तस्य जगतो योऽयं प्रत्यगात्मा सर्वतः स्वसत्तास्फूर्तिदानेनावभासकः स एव स्वाधीनसिद्धिकेन कथं हि सिद्धः स्यादिति योजना ॥ १४ ॥

मानप्रवृत्तेः स पुरा चिदद्वयः
प्रमातृरूपोऽखिलसाक्षिरूपधृक् ।
सिद्धोऽन्यथा मानमसिद्धमातृकं
स्वरूपमेवापि कथं लभेत तत् ॥ १५ ॥

* तदिति पाठः साधु प्रतीयते ।

प्रमाणप्रवृत्तेः प्रागात्मनः प्रमातृसाक्षिरूपेण सिद्धत्वादपि न तदपेक्षेत्याह—मानेति । विपक्षे बाधकमाह—अन्यथेति । प्रमाणप्रवृत्तेः प्रागात्मनोऽसिद्धत्वेन पूर्वसिद्धः प्रमाता यस्य तत्प्रमाणं स्वरूपमेव कथं लभेत ? न हि प्रमातृसिद्धिमन्तरेण प्रमाणशरीरं सम्भवतीत्यर्थः ॥ १५ ॥

**सर्वस्य मातारमिदं प्रमाण-**
**मात्मानमेकं विषयं प्रकर्त्तुम् ।**
**क्षमं कथं स्यादपि कर्मकर्त्तृ-**
**विरोधतोऽन्यस्य न मातृता वा ॥ १६ ॥**

आत्मनस्तदपेक्षत्वे युक्तिविरोधमाह—सर्वस्येति । इदं प्रमाणं कर्तृ सर्वस्य प्रमातारमात्मानमेकं स्वव्यतिरिक्तप्रमातृशून्यं कर्म्मतया कथं विषयीकर्त्तुं क्षमं स्यात् ? नहि विषयिणं प्रत्यञ्चं दीपवत्स्वप्रकाशं घटादिवद्विषयभूतं प्रमाणं विषयीकर्त्तुं क्षमते इत्यर्थः । किञ्च, आत्मनि प्रमाणप्रवृत्तौ प्रमाता किमात्मैव ? किं वाऽनात्मा ? आद्यं दूषयति—कर्म्मेति । एकदैव गुणप्रधानभावो विषयविषयिभावेनैकस्मिन् विरुद्ध इत्यर्थः । द्वितीयं दूषयति—अन्यस्येति । अनात्मनो जडत्वादेव प्रमातृत्वानुपपत्तिरित्यर्थः ॥ १६ ॥

**येनात्मना मानमुखप्रपञ्चः**
**प्रसिद्धिमायाति चराचरात्मा ।**
**तस्याऽस्य सिद्धौ यदि मानवाञ्छा**
**भवेत्तदाहो मतिवैभवं तत् ॥ १७ ॥**

प्रमाणमन्तरा कथमात्मसिद्धिरिति वदन्तं प्रत्युपहसति—येनेति ॥ १७ ॥

तथा च मातुः स्वत एव चित्त्वात्
सिद्धत्वमस्त्यात्मन आन्तरस्य ।
न चास्त्यलीकत्वमपि प्रमाणा-
भावान्नृशृङ्गादिवदस्य विष्णोः ॥ १८ ॥

फलितमाह—तथा चेति ॥ १८ ॥

किञ्चात्मनोऽसत्त्वमनात्मना किं
विज्ञायते वाऽऽत्मचिता न चाद्यः ।
अनात्मनो ज्ञातृतया न चान्त्यो
व्याघातदोषादपि साधुरस्ति ॥ १९ ॥

एवं प्रमाणाभावमात्रेणात्मनोऽसत्त्वापादनं निराकृतमिदानीं प्रमाणादात्मनोऽसत्त्वस्य सिद्धिपक्षं दूषयितुं विकल्पयति—किञ्चेति । अज्ञातृतयेति च्छेदः । ज्ञेयैकस्वभावत्वादनात्मन इत्यर्थः ॥ १९ ॥

आत्मा स्वसत्तासमये स्वकीयं
किं वेत्यसत्त्वं किमसत्त्वकाले ।
आद्ये स्वसत्तासमये कुतः स्वाऽ-
सत्ता तथा चाऽत्र किमेष विद्यात् ॥ २० ॥

व्याघातदोषादित्युक्तं हेतुं विवृणोति—आत्मेति । किमेष विद्याद्विषयस्यैवाभावात् ॥ २० ॥

स्वासत्त्वकाले कथमेव विद्या-
त्स्वस्याप्यभावात् क्व च कश्च बोद्धा ।

न चात्मनोऽसत्त्वमपि प्रवक्तुं
शक्यं कृतादेः क्षयमुख्यदोषात् ॥ २१ ॥

स्वेति । स्वस्यापि ज्ञातुरात्मन इत्यर्थः । क्व कस्मिन् विषये कश्च ज्ञाता स्यादित्यर्थः । कृतादेः क्षयमुख्यदोषात् कृतहान्यकृताभ्यागमादिदोषप्रसङ्गादित्यर्थः ॥ २१ ॥

किञ्चात्मनोऽसत्त्वमतिः स्वमेव
निराकरोत्येव परात्मकं वा ।
आद्ये निराकर्त्तुरसत्त्वमस्ति
सत्यो निराकार्य इतः स आत्मा ॥ २२ ॥

किञ्चेत्यादिपद्यद्वयं निगदव्याख्यातम् । निराकर्त्तुरसत्त्वे निराकार्यस्यात्मनो निराकरणाभावे ह्यत एव सत्यत्वं सिद्धमित्यर्थः ॥ २२ ॥

अन्त्ये निराकर्त्तुरिहात्मभावात्
कुतोऽस्त्यसत्त्वं परमात्मनोऽस्य ।
श्रुतिः स्वसत्तादिकवेदिनोर्हि
वदत्यसत्त्वञ्च तथैव सत्त्वम् ॥ २३ ॥

स्वसत्त्ववेदिनः सत्त्वं वदति स्वासत्त्ववेदिनोऽसत्त्वं वदति श्रुतिः "असन्नेव स भवति । असद् ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद् वेद । सन्तमेनं ततो विदुः ।" ( तै० २ । ६ ) इति ॥ २३ ॥

किञ्च प्रमाणं सति गोचरे वा
प्रवर्त्तते वाऽसति चेद् द्वितीयः ।

**तदा प्रमाणं क्षमते नृश्रृङ्गं**
**सामर्थ्यवत्साधयितुं मते ते ॥ २४ ॥**

प्रमाणाधीना वस्तुसत्तेति कोऽर्थः ? किं सति प्रमाणे वस्तुसत्ता जायते ? ज्ञायते वा ? तत्राद्यं निराकर्तुं विकल्पयति—किञ्चेति। तत्र द्वेधा विकल्प्यान्त्यमतिप्रसङ्गेन दूषयति—तदेति॥ २४ ॥

**सत्येव चेत्तर्हि न वस्तुसत्ता**
**प्रमाणसाध्या स्वत एव सिद्धा।**
**प्रमेयसत्ताऽभ्युपगम्यते हि**
**मानप्रवृत्तेः स्वत एव पूर्वम् ॥ २५ ॥**

आद्यं प्रत्याह—सत्येवेति ॥ २५ ॥

**यद्यस्ति भानं सत एव माना-**
**यत्तं मतं वस्तुन एतदस्तु।**
**अभानरूपे जडवस्तुनीत्थं**
**न भानरूपे स्वयमात्मनीह ॥ २६ ॥**

वस्तुसत्ता सति प्रमाणे ज्ञायते इति पक्षे समाधानमाह—यदीति। सत एव वस्तुनो भानं मानाधीनं यदि तेऽभिमतम्, तदाऽभानरूपे जडवस्तुनि एतदस्तु। इह स्वयंभानरूपे आत्मनि नेत्थं—कथमेवं स्यादित्यर्थः ॥ २६ ॥

**तमेव भान्तं ह्यनुभाति सर्वं**
**तस्यैव भासा सकलं विभाति।**

**इति श्रुतेः स्वात्मपदं प्रकाश-**
**स्वभावतो मानमपेक्षते नो ॥ २७ ॥**

तत्र श्रुतिं प्रमाणयति—तमेवेति ।

"न तत्र सूर्य्यो भाति न चन्द्रतारकं
नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तमेव भान्तमनुभाति सर्वं
तस्य भासा सर्वमिदं विभाति" (मु० २।२।१०) इति श्रुतेः ।

"न तद्भासयते सूर्यो न शशाङ्को न पावकः" ( गी० १५ । ६ ) इति स्मृतिश्चात्मनः स्वप्रकाशत्वे प्रमाणमित्यर्थः ॥ २७ ॥

**किञ्च प्रमाणं किमिहात्मनीत्थं**
**पृच्छन्तमज्ञं प्रतिवाच्यमेवम् ।**
**सर्वाणि मानानि चिदात्मनीति**
**ह्यज्ञातभावाद्विषयश्चिदात्मा ॥ २८ ॥**

एतावता प्रमाणाभावे आत्मन्यसत्त्वापत्तिरिति परिहृतम् । सम्प्रति श्रुतेस्तत्र कैमुतिकन्यायेन प्रामाण्यमुपपादयितुं सर्वप्रमाणविषयत्वमात्मनस्तावदाह—किञ्चेति । प्रमाणानामात्ममात्रविषयत्वे हेतुमाह—अज्ञातभावादिति । अज्ञातज्ञापकत्वमेव प्रामाण्यं प्रमाणाविवादम् । अज्ञातत्वञ्चात्मन एव स्वयंभानानर्हत्वात्तस्यैवाज्ञाननामित्यविषयत्वम् । नत्वनात्मनस्तस्याऽज्ञानकार्यतया जडत्वादिति भावः ॥ २८ ॥

**प्रेमास्पदत्वात्सुखमेव नित्यं**
**स्वयंप्रकाशं परमात्मतत्त्वम् ।**

**सुप्तौ परामर्शबलेन सर्वे-**
**न्द्रियाद्यभावेऽप्यवभासमानम् ॥ २९ ॥**

आत्मनो ज्ञातत्वमुपपादयितुं भूमिकां रचयति—प्रेमेति । आत्मा तावत्परप्रेमास्पदत्वात्सुखात्मा, तच्च सुखं नित्यं स्वप्रकाशश्च सुखमहमस्वाप्समिति परामर्शबलेन सुषुप्तौ सर्वेन्द्रियविषयाद्युपरमेऽपि भासमानत्वादिति योजना ॥ २९ ॥

**ततश्च जाग्रत्समयेऽस्ति भाती-**
**त्येवं प्रतीचि व्यवहारयोग्ये ।**
**न भाति नास्तीति विपर्ययो यः**
**स्वाज्ञानजन्यः स च दृष्ट एव ॥ ३० ॥**

ततः किमित्यत्राह—तत इति । ततश्च जाग्रदवस्थायामपि तस्यास्ति भातीति प्रतीतौ प्राप्तायामपि योऽयं नास्ति न भातीत्यन्यथाव्यवहारः सोऽधिष्ठानाज्ञानजन्य एव दृष्ट इति योजना ॥ ३० ॥

**रज्जोर्यथाऽज्ञानजसर्पभानं**
**तथाऽऽत्मनोऽज्ञानजदृष्टिसिद्धिः ।**
**तथा च मानं सकलं प्रतीच्य-**
**ज्ञातात्मभावे फलवत्त्वमेति ॥ ३१ ॥**

एतदेव दृष्टान्तेन द्रढयति—रज्जोरिति । रज्ज्वज्ञानजन्यसर्पव्यवहारे तथा दृष्टत्वादित्यर्थः। फलितमाह—तथा चेति । अज्ञातोऽज्ञानावृत्त आत्मभावो निरतिशयसुखात्मत्वं यस्य तस्मिन्नेव प्रमाणं फलवत्त्वं भजते इत्यर्थः ॥ ३१ ॥

अज्ञानजन्यावरणं प्रतीचि
　　प्रकल्प्यतेऽज्ञात इतश्चिदात्मा ।
प्रमाणसाफल्यमपीह सम्यग-
　　ज्ञातवस्त्वास्पदमेव मानम् ॥ ३२ ॥

एतदेव स्पष्टयति—अज्ञानेति । अज्ञात इति च्छेदः ॥ ३२ ॥

जडे स्वतोऽप्यावृतरूपभावाद-
　　ज्ञानजन्यावरणं न कल्प्यम् ।
प्रयोजनाभावत एष नैव
　　प्रमाणयोग्योऽविदिताद्यभावात् ॥ ३३ ॥

यो यत्र धत्तेऽतिशयं स तस्य
　　स्याद्गोचरो नैवमनात्मनीदम् ।
अज्ञानमाधत्त इहाफलत्वा-
　　त्कथं भवेत्तस्य स गोचरोऽपि ॥ ३४ ॥

जडेऽज्ञातत्वाभावमुपपादयति—जडे इत्यादिद्वाभ्यां । योऽज्ञानादिपदार्थो यत्र वस्तुनि अज्ञातादिरूपमतिशयं धत्ते, तच्च वस्तु तस्याज्ञानादिपदार्थस्य विषयः स्यादित्यर्थः ॥ ३३—३४ ॥

कथं घटोऽज्ञात इति प्रतीति-
　　स्तर्हीति चेदुच्यत उत्तरं भोः ।
घटादिरध्यस्त इहात्मनीशेऽ-
　　ज्ञानेन सार्द्धं तत एवमस्ति ॥ ३५ ॥

घटेऽज्ञातत्वव्यवहारोऽन्यथासिद्ध इत्याकाङ्क्षापूर्वकमुपपादयति—कथमिति। घटादेरज्ञानेन सहात्मन्यध्यस्तत्वात्तथा व्यवहार इत्यर्थः॥३५॥

**घटाद्यधिष्ठानतया चिदात्माऽ-**
**ज्ञानावृतोऽज्ञात इति प्रतीतिः।**
**मानप्रवृत्तेरुदितात्मवृत्त्या**
**ध्वस्तावृतिर्वृत्तिगतो विभाति ॥ ३६ ॥**

सर्वत्र ज्ञानात( दि ? )व्यवहारोऽधिष्ठानभूतात्मन्येव पर्य्यवस्यतीत्याह—घटादीति। घटाद्यधिष्ठानत्वेन चिदात्मैवाज्ञानावृतः। 'अज्ञान' इति च्छेदः। प्रमाणप्रवृत्तेरूर्ध्वमुदिता जाता या घटाद्यधिष्ठानभूतात्मविषया वृत्तिस्तया ध्वस्ता निरस्ता आवृतिरावरणं यस्य स च घटाद्यधिष्ठानात्मा वृत्तिगतो विभातीति योजना। अयं भावः—घटावच्छिन्नचिदात्मा घटेन्द्रियसन्निकर्षसमुद्भूतघटाकारान्तःकरणवृत्तिनिरस्ताविद्यः सन् घटावच्छिन्नवृत्तौ प्रतिबिम्बितो घटं भासयतीति घटप्रतीत्युपपत्तिः। एवं सकलजडप्रतीतिरप्यूह्येति ॥ ३६ ॥

**तथा च सर्वैरपि यः प्रमाणैः**
**सिद्धः कथं तस्य चिदात्मनस्ते।**
**मतं प्रमाणाधिपतेः प्रमाणा-**
**भावादसत्त्वं हठमात्रमूलम् ॥ ३७ ॥**

चिदात्मनः सर्वप्रमाणविषयत्वनिरूपणस्य फलमाह—तथा चेति ॥ ३७ ॥

**कथं तदात्मा श्रुतिमात्रगम्यः**
**सर्वैः प्रमाणैर्यदि गम्यतेऽसौ।**

नह्यागमान्ता अनुवादिनः स्यु-
रज्ञातगन्तार इमे प्रमाणम् ॥ ३८ ॥

आत्मनः सर्वप्रमाणगोचरत्वे "तन्त्वौपनिषदं पुरुषं पृच्छामि" (बृ० ३।९।२६) इति श्रुतौ औपनिषदत्वविशेषणव्याहतिं शङ्कते—कथमिति। "सर्वं विशेषणं सावधारणम्" इति न्यायादुपरञ्जकत्वमात्रकल्पनायां फलाभावेनाध्ययनविधिविरोधादन्यप्रमाणव्यावर्त्तकत्वमेवात्मन्यौपनिषदत्वविशेषणस्य वक्तव्यम्। तच्च सर्वप्रमाणविषयस्यात्मनो न सम्भवतीत्यौपनिषदत्वविशेषणमात्मनः कथमपि न सङ्गच्छेतेति तात्पर्य्यार्थः॥ ३८॥

मैवं चिदानन्दविशुद्धपूर्ण-
प्रत्यक्स्वरूपेण यतः स आत्मा।
मानान्तरागोचर एष तस्मा-
द्वेदान्तमात्रावगतिर्मतो मे ॥ ३९ ॥

तदेतद्दूषयति—मैवमिति। यद्यपि प्रपञ्चाविच्छेदेनात्मनः सर्वप्रमाणविषयत्वम्, तथापि परिपूर्णसच्चिदानन्दादिरूपेण मानान्तरायोग्यत्वात्; तेन रूपेणात्मनः श्रुतिमात्रगम्यत्वादौपनिषदत्वविशेषणं न विरुद्ध्यते इति तात्पर्य्यार्थः॥ ३९॥

नन्वागमोद्भूतधिया निवर्त्त्याऽ-
ज्ञानावृतत्वं श्रुतिगोचरत्वम्।
न स्वप्रकाशे तमसाऽऽवृतत्वं
सम्भावितं सूर्य्य इवान्धकारैः ॥ ४० ॥

ननूपनिषज्जन्यज्ञाननिवर्त्त्याज्ञानविषयत्वमुपनिषद्विषयत्वं न च स्वप्रकाशचिदात्मन्यज्ञानविषयत्वं सम्भवति भासमानत्वाभासमानत्वयोरेकदैकत्र विरोधादिति शङ्कते—नन्विति ॥ ४० ॥

**सत्यं तथैवाऽस्ति स एष आत्मा**
**स्वयंप्रकाशः परमार्थगत्या ।**
**तथापि मध्यन्दिनगेऽपि भानौ**
**तमो दिवान्धाः परिकल्पयन्ति ॥ ४१ ॥**

तदुक्तमङ्गीकरोति—सत्यमिति । तर्हि कथमज्ञानविषयत्वमित्यत आह—तथापीति ॥ ४१ ॥

**प्रभाकरोऽयं तमसावृतोऽस्ती-**
**त्येवं यथा ते परिकल्पयन्ते ।**
**तथैव मूढाः परिकल्पयन्त्य-**
**ज्ञानावृतोऽयं परिपूर्ण आत्मा ॥ ४२ ॥**

दृष्टान्तं विवृणोति—प्रभाकर इति । दार्ष्टान्तिके योजयति—तथैवेति ॥ ४२ ॥

**अतः प्रतीच्यात्मनि कल्पितस्याऽ-**
**ज्ञानस्य पूर्वं स्वयमेव नित्यम् ।**
**चिदात्ममाहात्म्यसमुद्भृतस्य**
**निवृत्तये वेदगिरां प्रवृत्तिः ॥ ४३ ॥**

नन्वात्मनि वेदान्तगिरां प्रवृत्तिः किं तज्ज्ञानाय ? अज्ञाननिवृत्तये वा ? नाद्यः, दृश्यत्वेन मिथ्यात्वापत्तेः । न द्वितीयः, तस्यानादि-

त्वेनात्मवन्निवृत्त्यनर्हत्वादिति तत्राह—अत इति । कल्पितत्वमुपपादयति—पूर्वमिति । यथा रज्जुस्वरूपपर्यालोचनया सर्पादिस्तत्र नास्ति तथाऽऽत्मस्वरूपपर्यालोचनयाऽज्ञानं तत्रासदित्यर्थः । न अनादित्वमात्रं निवृत्त्यनर्हत्वे प्रयोजकम्, प्रागभावे व्यभिचारात् । भावत्वे सत्यनादित्वं नित्यत्वे प्रयोजकमिति चेत्, न; भावत्वानङ्गीकारात् । असद्वैलक्षण्यवत् सद्वैलक्षण्यस्यापि स्वीकारात् । अत एवाज्ञानं विशिनष्टि—कल्पितस्येति । अनिर्वाच्यस्येत्यर्थः ॥ ४३ ॥

**स्वयंप्रकाशात्मनि बोधजन्याऽ-**
**ज्ञानक्षतेर्भिन्नमलान्तरस्य ।**
**निरूपणाभावत आगमान्त-**
**वाचां चिदानन्दपदैकभाजाम् ॥ ४४ ॥**

अत एव स्वप्रकाशतया नित्यानुभवरूपे आत्मनि वेदान्तानामज्ञाननिवृत्तिरेव फलं नान्यदित्याह—स्वयंप्रकाशात्मनीति ॥ ४४ ॥

**अतः स्वयंज्योतिष आत्मनस्त-**
**दाकारवृत्तेर्जननेन सिद्धम् ।**
**वेदान्तवाचां विषयत्वमेवं**
**न स्वप्रकाशत्वमसिद्धमस्य ॥ ४५ ॥**

अज्ञाननिवृतिरात्माकारवृत्त्युत्पादनद्वारैव । तथा चाकारवृत्त्युत्पादकत्वेन वेदान्तानामात्मविषयत्वमित्याह—अत इति । न स्वप्रकाशत्वमस्यात्मनोऽसिद्धम्, श्रुत्यनुमानप्रमाणसिद्धत्वात्तस्येत्यर्थः ॥ ४५ ॥

**नापेक्षतेऽसावितरप्रकाशं**
**प्रत्यक् स्वसत्तासमये चिदात्मा ।**

**प्रकाशतो ह्यव्यभिचारभावा-**
**दालोकवत्संविदिवाप्यऽवेति ॥ ४६ ॥**

तत्साधकमनुमानप्रमाणमाह—नेति । असौ प्रत्यक्चिदात्मा स्वसत्तासमये प्रकाशतोऽव्यभिचारिभावादितरप्रकाशं नापेक्षते, आलोकवत् । अथवा संविद्वदिति योजना । हिशब्दः श्रुतिस्मृतिविद्वज्जनानुभवप्रसिद्धिं द्योतयति । इतिशब्दोऽनुमानसमाप्तिद्योतनपरः । तदुक्तमभियुक्तैः—आत्मा इतरानपेक्षप्रकाशः, स्वसत्तायां प्रकाशाव्यभिचारित्वात्, संविद्वदालोकवद्वेति । ज्ञानस्वप्रकाशत्ववादिनं प्रति दृष्टान्तः संविद्वदिति । नैयायिकादीन् प्रति दृष्टान्त आलोकवदिति । तथाचानुमानेनापि स्वप्रकाशत्वमात्मनः सिद्धमिति भावः ॥ ४६ ॥

**तस्मात्स्वविज्ञानघनस्वभाव-**
**तया स्वयं ज्योतिरुदीरितोऽसौ ।**
**अत्राऽयमित्यादिगिराऽनुभूत्या**
**प्रसिद्ध एष श्रुतिमौलिबुद्धेः ॥ ४७ ॥**

नेदमनुमानं निर्मूलं श्रुतिमूलकत्वादित्याह—तस्मादिति । श्रुतिमौलिजन्या बुद्धिर्यस्य तस्य विदुषोऽनुभूत्या एष स्वयंज्योतिरात्मा प्रसिद्ध इत्यर्थः, "अत्रायं पुरुषः स्वयंज्योतिर्भवति" (बृ० ४ । ३ । १४) इत्यादिश्रुतेः। अयमर्थः—अत्र स्वप्नावस्थायां स्वप्ने तावदात्मा प्रकाशते इत्यविवादम्, तत्प्रकाशनं न तावद्बाह्येन्द्रियात्, तस्यात्मन्यप्रवृत्तेः, तदानीमुपरमाच्च । नापि मनसः, तस्य रथादिरूपेण परिणतत्वात् । परिशेषात् स्वयंज्योतिरात्मेत्यर्थः ॥ ४७ ॥

**नन्वेष आत्मा न तथा यथोक्तो**
**यतो विरुद्धानुभवावगाह्यः ।**

कदाचिदात्मानमहं हि वेद्मी-
त्येवं न वेद्मीति मतिः कदाचित् ॥ ४८ ॥

आत्मानुभूतिद्वयगोचरत्वा-
न्न स्वप्रकाशोऽस्ति घटादिवत्सः ।
ज्ञातो घटोऽज्ञात इति प्रतीतिः
समोभयोः कुम्भचिदात्मनोर्वै ॥ ४९ ॥

आत्मनः स्वप्रकाशत्वं न सम्भवति, तद्विरुद्धानुभवविषयत्वादिति शङ्कते—नन्विति । कदाचिदात्मानं वेद्मीत्यनुभवः, कदाचिन्न वेद्मीत्यनुभवः, घटं जानामि, घटं न जानामीतिवत् । तथा च विरुद्धानुभवविषयत्वात् कथमात्मनः स्वप्रकाशत्वमिति द्वयोस्तात्पर्य्यार्थः ॥४८-४९॥

तत्स्वप्रकाशं किल यन्न केना-
प्याकारतः कस्यचिदेव जातु ।
ज्ञानस्य कर्म्मैव भवेत्तदन्यद्
न स्वप्रकाशं परिभाषया यत् ॥ ५० ॥

ज्ञानकर्म्मत्वस्वप्रकाशत्वयोरेकदैकत्र विरोधान्न दृष्टचरत्वमित्यभिप्रेत्याह—तदिति । किल प्रसिद्धं यद्वस्तु केनाप्याकारेण "सार्वविभक्तिकस्तसिः" कस्यचिदेव ज्ञानस्य जातु कदाचिदपि कर्म्मैव न भवेत्, 'एवकारस्य भिन्नः क्रमः' नैव ज्ञानकर्मतां भजते; तदेव स्वप्रकाशम्, तदन्यत्ततोऽन्यथा स्वप्रकाशं न भवति, यत्परिभाषया स्वप्रकाशमुच्यते इति योजना ॥ ५० ॥

न वेद्मि मामित्यनुभूतियोगा-
दज्ञातता स्वीक्रियते यदि स्वे ।

**न स्वप्रकाशत्वमनात्मवत्स्वे**

**तथापि किं न क्षतिरद्वयस्य ॥ ५१ ॥**

"अनीशया शोचति मुह्यमानः" (मु० ३ । २) इति श्रुतेर्मामहं न जानामीत्यनुभवादपि न स्वप्रकाशत्वमात्मनः सिद्ध्यतीत्याह—नेति । स्वे आत्मनि तत्त्वज्ञाननिवर्त्याज्ञानविषयत्वमज्ञातत्वमस्तु, को विरोधः ? इत्यत आह—तथापीति । आत्मन एवंरूपाज्ञातत्वस्वीकृतावपीत्यर्थः । मामहं न जानामीतिवद् घटमहं न जानामीत्यनुभवाविशेषाद् घटादाविवास्वप्रकाशत्वमात्मनः स्यादिति भावः ॥ ५१ ॥

**न ह्येकवस्तुन्यनुभूतिरेषा**

**न भाति भातीति च यौगपद्यात् ।**

**न भाति यद्येष कथं तदानीं**

**विभाति भातीति यदा न भाति ॥ ५२ ॥**

ननु स्वप्रकाशत्वमज्ञातत्वञ्चोक्तलक्षणमस्त्वात्मनि को विरोधः ? इत्यत आह—नहीति । स्वप्रकाशस्यानादिभावतया नित्यत्वादज्ञानस्याप्यनादित्वेनाकार्यत्वात्कथं युगपदुभयं विरुद्धमात्मनि सम्भवेदिति भावः ॥ ५२ ॥

**अतो विरुद्धानुभवावगाह्यः**

**कथं स्वयंज्योतिरयं चिदात्मा ।**

**अत्रोच्यते श्रौतमतः समाधि-**

**स्तवोक्तदोषाऽपनयाय वादिन् ॥ ५३ ॥**

पूर्वपक्षमुपसंहरति—अत इति । उक्तदोषपरिहारपूर्वकं स्वप्रकाशत्वं साधयितुं प्रतिजानीते—अत्रोच्यते इति ॥ ५३ ॥

**ज्ञातस्तथाऽज्ञात इति प्रतीति-**
**र्याऽनात्मनिष्ठा न च सात्मनि स्यात् ।**
**विलक्षणोऽयं विदितात्तथान्यो-**
**ऽप्यज्ञाततः श्रौतवचःप्रसिद्धः ॥ ५४ ॥**

अनात्मनिष्ठोऽयमुभयविधोऽनुभवो न निरूपणीयात्मतत्त्वमनुभावयतीति परिहरति—ज्ञात इति । "अन्यदेव तद्विदितादथोऽविदितादधि" ( के० १ । ३ ) इति श्रौतवचसा प्रसिद्ध इति ॥ ५४ ॥

**जानामि मामित्यनुभूतिरेषा**
**न शुद्धमेनं विषयीकरोति ।**
**आत्मानमज्ञानमुखैर्विशिष्टं**
**वैकल्पिकत्वादवगाहतेऽसौ ॥ ५५ ॥**

मामहं जानामीत्यनुभवोऽज्ञानानानन्दादिवैशिष्ट्येनात्मानं विषयीकरोति, न शुद्धमित्याह—जानामीति । वैकल्पिकत्वादिति । आत्मानं जानामीति प्रत्ययो न निर्विकल्पकः किञ्चिदित्येव हि तदाकारः शब्देन व्युत्पाद्यते । न चात्र तथा, आत्मानमित्यात्मशब्देन ज्ञानाकारव्युत्पादनात् । मानसं चैतज्ज्ञानं परैरिष्यते । मनसश्चेन्द्रियस्य द्रव्ये प्रवृत्तिर्गुणोपरागेण । गुणश्चात्र दुःखादिरेव, दुःखाद्युपरागश्च न नैयायिकादिवदात्मनः स्वतोऽस्मन्मते, किन्तु दुःखादिधर्मकान्तःकरणतादात्म्यात् । तत्तादात्म्यं नाज्ञानमन्तरा । तथा चात्मानमहं जानामीत्यनुभवबलादेवाज्ञानादिवैशिष्ट्यं भाति, न विशुद्धं स्वरूपम् । ततो विशिष्टमेव ज्ञानकर्म्म, न शुद्धं स्वरूपमिति तात्पर्यार्थः ॥ ५५ ॥

**न ज्ञानकर्म्मत्वमयं चिदात्मा**
**स्वयंप्रकाशो भजते विशुद्धः ।**

विशिष्टवृत्तेरपि धर्मकस्य
विशेषणे वृत्तिरितीष्यते हि ॥ ५६ ॥

एतदेव विवृणोति—नेति। विशिष्टस्यास्वप्रकाशत्वेन ज्ञानकर्मत्वाविरोध इत्यर्थः। तस्यापि स्वप्रकाशत्वे विशिष्टवृत्तेर्धर्मस्य विशेषणवृत्तित्वनियमादज्ञानादेरपि तथात्वं स्यात्। अतो विशिष्टं ज्ञानकर्म्म न स्वप्रकाशमित्यर्थः ॥ ५६ ॥

न वेद्मि मामित्यनुभूतिरेषा
स्वयंप्रकाशत्वविरोधिनी नो।
अज्ञानमद्धा विषयीकरोति
स्वज्योतिरुल्लिख्य चिदात्मवस्तु ॥ ५७ ॥

मामहं न वेद्मीत्यनुभवो न स्वप्रकाशत्वविरोधीत्याह —न वेद्मीति। यद्यप्यहं मां न जानामीत्यनुभवोऽज्ञातत्वं शुद्धे आत्मनि व्यवस्थापयति, तथापि विना स्वप्रकाशत्वमात्मन्यज्ञातत्वं बोधयितुं न शक्नोतीत्यज्ञातत्वं न स्वप्रकाशत्वविरोधि, किन्तु तदुपपादकमिति तात्पर्यार्थः ॥५७॥

अतोऽहमात्मानमिति प्रतीति-
रात्मानमुल्लिख्य च भासमानम्।
स्वयं प्रकाशैकतयाऽनु नेत्यऽ-
ज्ञानावृतिं सा विषयीकरोति ॥ ५८ ॥

नन्वज्ञातत्वम्, अभासमानत्वम्, तद्ग्राहकञ्च प्रमाणं कथं स्वप्रकाशकत्वसाधकम्? अतिप्रसङ्गादित्यत्राह—अतोऽहमिति। मामहं न वेद्मीति ज्ञानं विशिष्टरूपम्। तत्र विशेष्यमज्ञातत्वम्। तच्च विषयनिरूप्यमिति। विषय आत्माऽज्ञातत्वव्यावर्तकत्वाद्विशेषणम्। अत आत्मापि विशिष्ट-

ज्ञानस्य तस्य विशेषणविषयत्वनियमाद्विपयः। ततस्तज्ज्ञानमात्मानं विशेषणत्वात्स्वप्रकाशतया भासमानमुल्लिख्य अनु पश्चात् 'नेति' अनेनाज्ञानलक्षणमावरणं तत्र विषयीकरोतीति तात्पर्यार्थः ॥ ५८ ॥

**अस्वप्रकाशस्य विरुद्धमेतद्**
**न भाति भातीति च यौगपद्यात् ।**
**न मामहं वेद्म्यनुभूतिसिद्धं**
**स्वयंप्रकाशत्वमिहात्मनश्च ॥ ५९ ॥**

ननु भासमाने आत्मनि कथं तद्विरुद्धमज्ञातत्वं सम्भवतीत्याशङ्क्याह—अस्वप्रकाशस्येति । अज्ञानं तावदावरकम्, "नीहारेण प्रावृत्ताः" इति श्रुतेः । आवरकञ्च अभ्रादिभावरूपमेव दृष्टम् । तेन भासमानेऽप्यात्मनि अज्ञातत्वं सम्भवति वायोरन्यत्र रूपस्पर्शवत् स्थित्यविरोधादिति तात्पर्यार्थः ॥ ५९ ॥

**घटादिविश्वं परमात्मनीशे**
**स्वाविद्ययाऽध्यस्तमतो घटादौ ।**
**अभानभाने अपि तत्र विश्वा-**
**धिष्ठान एवात्मनि कल्पितेस्तः ॥ ६० ॥**

ननूक्तानुभवस्य द्वैविध्यं घटादावपि दृश्यते, तत्रापि स्वप्रकाशकत्वापादकं स्यादित्याशङ्क्य घटादीनामात्मन्यध्यस्ततया स्वतन्त्रसत्ताऽभावात्तत्र दृश्यभानं तद्द्वैविध्यमधिष्ठाने पर्यवस्यतीत्याह—घटादीति॥६०॥

**अध्यस्तसत्ता पृथगात्मनो नाऽ-**
**धिष्ठानभूता तत एव आत्मा ।**

स्वयंप्रकाशोऽस्ति सुखस्वभावः
स्वाविद्यया भाति जगत्स्वभावः ॥ ६१ ॥

अध्यस्तस्याधिष्ठानानतिरेकत्वं दर्शयन् फलितमाह—अध्यस्तसत्तेति। तथा च स्वप्रकाशत्वमजहदेवाऽऽत्मतत्त्वमज्ञानावृतत्वाज्जगदाकारेण भातीति फलितोऽर्थः। अक्षरार्थस्तु निगदव्याख्यातः ॥ ६१ ॥

अनाद्यविद्यावरणावृतोऽसौ
द्वैतात्मना भाति चिदद्वितीयः।
असङ्ग आत्मा परमार्थतस्तु
विज्ञानसारो भ्रमशून्य एकः ॥ ६२ ॥

अज्ञानकृतावरणमन्तरेण न स्वप्रकाशे शुद्धवस्तुनि जगदाकारता सङ्गच्छते, न वाऽज्ञानकल्पितेन जगता निर्विकारात्मस्वभावव्याहतिरपीत्याशयेनाह—अनादीति। निगदव्याख्यातं पद्यम् ॥ ६२ ॥

तस्मात्स्वतः सिद्धमखण्डतत्त्वं
प्रत्यञ्चमानन्दमपारबोधम्।
विध्वस्तमायागुणसम्प्रवाहं
ज्ञात्वा विमुच्येत मृषात्मबन्धात् ॥ ६३ ॥

प्रकृतमुपसंहरति—तस्मादिति। यस्मात्सर्वप्रमाणभासकोऽप्यात्मा लौकिकप्रमाणगोचरो न भवति, वेदान्तानामपि वेदान्तजन्यज्ञाननिवर्त्याज्ञानविषयत्वेनैव विषयो, न साक्षात्, तज्जन्यज्ञानभास्यत्वाभावात्। तस्मात्स्वतः सिद्धमितरनिरपेक्षप्रकाशस्वभावत्वेनैव सिद्धम्, अखण्डतत्त्वं स्वगतादिभेदशून्यमनारोपितवस्तु, प्रत्यञ्चमाविद्यकदेहादिविल-

क्षणस्वभावत्वेन सर्वान्तरम्, आनन्दं निरुपाधिकनिरतिशयप्रेमास्पदतया सुखस्वरूपम्, न विद्यते पार आश्रयविषयसन्निकर्षादिकृतः परिच्छेदो यस्य बोधस्य तम्, अतः स्वरूपबोधमाहात्म्येनैव विध्वस्ता बाधिता मायाऽनाद्यनिर्वाच्याऽविद्या तत्कार्यभूतगुणसम्प्रवाहो जन्ममृत्युपरम्परालक्षणः संसारश्च यस्मिंस्तमात्मानं ज्ञात्वा—वेदान्तवाक्यज्यासन्दिग्धाविपर्यस्तात्मबोधेन साक्षात्कृत्य, मृषाऽज्ञानकार्यतया आत्मनो बन्धः कर्त्तृत्वभोक्तृत्वादिलक्षणः संसाराख्यस्तस्माद्विमुच्यते—विशेषेण पुनर्भवलक्षणवृत्तिरहिततया मुच्यते। कृतकृत्यो भूत्वा स्वात्मन्यवस्थितो भवतीत्यर्थः । एतादृशतत्त्वज्ञानमन्तरेण संसृतेर्मोक्षो नास्तीति भावः ॥ ६३ ॥

**अध्यस्तमज्ञानकृतं प्रतीचि**
**स्वतो विमुक्ते जनिमृत्युबन्धम् ।**
**स्वात्मावबोधेन समूलमद्धाऽ-**
**पबाध्य जीवन्निह मुच्यतेऽज्ञः॥ ६४ ॥**

यदि बन्ध आत्मनि स्वाभाविकः स्यात्तदा स्वभावस्यान्यथाकर्त्तुमशक्यतया तत्त्वज्ञाननिवर्त्यो न स्यात् । तत्त्वज्ञाननिवर्त्यत्वान्यथानुपपत्त्या बन्धस्याध्यस्तत्वं कल्प्यते । ततश्चाध्यस्तबन्धस्य मूलभूतमज्ञानमप्यध्यस्तमित्यभिप्रेत्याह—अध्यस्तमिति । स्वतो विमुक्ते इति हेतुगर्भविशेषणं स्वतः एव विमुक्तस्वभावत्वं बन्धस्याध्यस्तत्वं गमयति । तेन नित्यमुक्तस्वभावेऽज्ञाननिवृत्तिमन्तरा तत्त्वज्ञानकृतातिशयोऽपि नास्तीति सूदितम् ॥ ६४ ॥

**प्रकृतिविकृतिभावं बाध्यमेवाऽपबाध्य**
**श्रुतिशिखरगिरोत्थाद्वैततत्त्वावबोधात् ।**

व्रजति चरमजन्मा यं विमुक्तस्वभावं
तमहममृतमीशं श्रीमुकुन्दम्प्रपद्ये ॥ ६५॥

इति प्रत्यक्तत्त्वचिन्तामणौ तृतीयं प्रकरणं सम्पूर्णम् ॥ ३ ॥

एवं प्रकरणं परिसमाप्य, तत्फलभूतं भगवदनुसन्धानं "यत्करोषि यदश्नासि" (गी० ९ । २७) इत्युक्तन्यायेन प्रकरणरचनात्मककर्मणो भगवति समर्पणञ्च कुर्वन्प्रकरणान्ते मङ्गलमाचरति—प्रकृतिविकृतिभावमिति । अज्ञानतत्कार्यरूपबन्धमध्यस्तत्वेन बाध्यमेवापबाध्य चरमजन्मा तत्त्वविद् वेदान्तोत्थाऽद्वैततत्त्वसाक्षात्कारेण यं प्रसिद्धं विमुक्तस्वभावं भगवन्तं व्रजति—तत्स्वरूपेणावस्थितो भवति, तममृतमविनाशिनम्, ईशं मायानियन्तृत्वेन तत्कृतदोषविनिर्मुक्तम्, स्वतन्त्रं श्रीमुकुन्दमन्तः प्रत्यगात्मतया प्रपद्ये—शरणं व्रजामीत्यर्थः ॥ ६५ ॥

अध्यस्तमप्यखिलविश्वमनन्तदुःखं
सत्यं विभाति यदबोधत आविमुक्तेः ।
यज्ज्ञानतो विलयमेति मृषान्ध्यमूलं
तं नन्दनन्दनमहं कलये मुकुन्दम् ॥ १ ॥

इति श्रीमन्मुकुन्दपदारविन्दमकरन्दाभिलाषिसदानन्दविद्वत्कृतायां प्रत्यक्तत्त्वचिन्तामणिव्याख्यायां स्वप्रभाभिधायां प्रत्यक्स्वप्रकाशत्वसाधकमयूखाभिधं तृतीयं प्रकरणं समाप्तिमगमत् ॥ ३ ॥

# अथ चतुर्थं प्रकरणम्

यदज्ञातं विश्वं स्थिरचरमिवाऽऽभाति सकलं
विबुद्धं सच्छान्तं सुखममृतमद्वैतमकलम् ।
स्थितं हृद्देशेऽद्धाप्यतिजडधियां दूरमिव यत्
विदां प्रत्यग्भूतं तदमितमहोऽन्तश्च कलये ॥ १ ॥

यं शास्त्रयोनिमखिलज्ञमनन्तशक्तिं
ब्रह्मादिवागपि समर्थतराऽसमर्था ।
कर्त्तुं गुणैरभिमुखं निजमानयोगै-
स्तं नन्दमन्दिरमणिं शरणं प्रपद्ये ॥ १ ॥

आनन्दकन्दमभिवन्द्यपदारविन्दं
छन्दोरसं स्वरसतोऽमरभृङ्गसेव्यम् ।
भक्त्या मुकुन्दममृतायनमात्मबुद्धेः
प्रावण्यसिद्धय इहाद्भुतमाश्रयेऽन्तः ॥ २ ॥

अतीतानन्तरप्रकरणे "अध्यस्तमज्ञानकृतं प्रतीचि स्वतो विमुक्ते जनिमृत्युबन्धम्" इत्यादिना प्रत्यगात्मनोऽज्ञानकृत एव बन्धो ज्ञानतोऽज्ञाननाशे तन्नाश इत्युक्तम्, तदेवोपपादयितुं प्रकरणान्तरमारभमाणः स्वेष्टदेवतानुसन्धानरूपं मङ्गलमाचरन्नर्थात्प्रकरणप्रतिपाद्यमर्थं संगृह्णाति—यदज्ञातमिति । तदमितमहोऽपरिच्छिन्नतेजःपदास्पदं श्रीकृष्णाभिधमन्तः प्रत्यगभिन्नतया कलयेऽनुसन्दधे इत्यन्वयः । तत्कि-मित्याकाङ्क्षायामाह—यदिति । यदज्ञातं सत् स्वाश्रयस्वविषयमायावृतं सद् विश्वमाकाशादिभूतजातं तत्कार्य्यं सकलं ब्रह्माण्डं तद्गतं

स्थिरचरं चराचरशरीरजातं भौतिकमिवाभाति। यद्विबुद्धं सम्यग्बोधेन साक्षात्कृतं सत् शान्तमविद्यातत्कार्यबाधोपलक्षितम्, अमृतं नित्यमुक्तस्वभावम्, सुखस्वरूपम्, द्वैतशून्यम्, अकलं निरवयवमासमन्ताद्भाति—बुद्ध्यारूढं प्रकाशते। यद्धृदेशे श्रद्धा साक्षात् स्थितमपि जड़धियां देहाद्यभिमानिनां दूरमिव भाति, वर्षकोटिभिरप्यप्राप्यत्वात्। यद्वस्तुविदां भगवत्प्रसादलब्धतत्त्वज्ञानानां प्रत्यग्भूतं स्वस्वरूपत्वं नित्यप्राप्तमेव भाति। तत्कलये इति योजना ॥ १ ॥

**सदानन्दाम्भोधौ जगदिदमशेषं सकलनं**
**समध्यस्तं शुद्धे निरवधिपदे स्वात्मनि विभौ।**
**अविद्याव्यक्त्या तद्विमलपदबोधेन सकलं**
**समूलं विध्वस्तं न च पुनरुदेतीति निगमः ॥ २ ॥**

एवं मङ्गलव्याजेन प्रकरणार्थं सङ्क्षेपेण प्रदर्श्य विस्तरेण तत् प्रतिपादयितुं प्रमेयं सूत्रयति—सदानन्दाम्भोधाविति। स्वात्मनि प्रत्यक्तत्त्वे, विभावपरिच्छिन्नतया पूर्णे, निरवधिपदे सर्वाध्यस्तबाधावधितया स्वव्यतिरिक्तावधिवर्जिते पदे सकलफलावधिभूते, शुद्धे वस्तुतोऽज्ञानतत्कार्यसम्पर्कशून्ये वस्तुन्यविद्यारूपा या शक्तिस्तया इदं जगद् दृश्यजातं समस्तं सकलनं तद्विषयकप्रतिभासः कलना तत्सहितं सम्यगध्यस्तमविद्यमानमपि विद्यमानमिवारोपितम्, तद् दृश्यरूपं सकलं समूलं मूलाज्ञानसहितं विमलपदबोधेन शोधिततत्त्वं पदार्थज्ञानपूर्वकमखण्डैक्यसाक्षात्कारेण विध्वस्तं बाधितं सत् न च पुनरुदेति—मूल बाधेन बाधितत्वात् कारणाभावान्न च पुनरुद्भवतीति निगमः—वेदान्त सिद्धान्तनिश्चय इति योजना ॥ २ ॥

**ननु प्रत्यक्तत्त्वे जनिमृतिमयी संसृतिरियं**
**प्रतीता सद्रूपा वदसि कथमध्यस्तमखिलम्।**

**प्रतीतेः प्रामाण्यात्स्वत इतरबाधादिविरहात्**

**प्रमाणैः सिद्धस्य प्रथितमिह वस्तुत्वमुचितम् ॥ ३ ॥**

प्रत्यक्षादिप्रमाणसिद्धविश्वस्याऽज्ञानकल्पितत्वमसहमानः पूर्वोक्तमर्थमाक्षिपति—नन्विति । प्रत्यक्तत्त्वे जीवात्मनि जन्ममृत्युप्रवाहलक्षणा संसृतिरियं प्रत्यक्षादिप्रमाणसिद्धा, प्रतीता सर्वप्रत्ययमारूढा, तद्रूपा अबाधितार्थक्रियाकारित्वेन सत्यैव भवति । एवं सति त्वं कथमखिलं प्रमाणप्रमेयादिविश्वमध्यस्तमारोपितमिति वदसि ? सकलमनुभवन् निःशङ्कतया कथं तस्याऽपह्नवं करोषीत्यर्थः । न च प्रतीतेर्भ्रमत्वं शङ्क्यम्, तस्याश्च स्वतः प्रामाण्यात्, इतरबाधादिविरहात्कारणदोषबाधकप्रत्ययानुपलम्भात् । प्रमाणप्रतीतस्य चेह व्यवहारभूमौ वस्तुत्वं परमार्थसत्यत्वम्, प्रथितं लोकप्रसिद्धम्, उचितञ्च । अन्यथा भ्रमप्रमाविशेषापत्तिः । तथा चात्मनि संसारः परमार्थ एवमुक्त इत्यर्थः ॥ ३ ॥

**न चेद्वस्तुत्वं स्याज्जगति च तदा शास्त्रमखिलं**

**भजेत्प्रामाण्यं तत्कथममृतभोगादिकरणम् ।**

**मृषाहेर्विध्वस्त्यै क्वचिदपि न मन्त्रादिकरणं**

**विधत्ते किन्त्वेतामधिकरणबुद्धिं दृढमतिः ॥ ४ ॥**

अत्रैवयुक्त्यन्तरमाह—न चेदिति । यदि संसारः परमार्थो न चेत्, तदा कथमिष्टाऽनिष्टप्राप्तिपरिहारोद्देशेन साधनविधायिशास्त्रं प्रमाणं भवेत् ? नहि रज्जुसर्पनिवृत्तये मन्त्रौषधादिसाधनमुपदिश्यते, किन्तु रज्जुस्वरूपज्ञानमेव दृढमतिरभ्रान्तः पुरुषो विधत्ते—उपदिशतीत्यर्थः ॥ ४ ॥

**ततश्चारब्धव्यं भ्रमतिमिरविध्वंसनकरं**

**सुकाण्डं ज्ञानस्याऽनुपकृतमिदं कर्म्म न कदा ।**

**नहीत्थं पश्यामस्तत इदमनाद्यन्तममलं**
**विचित्रारम्भाढ्यं नहि भवितुमध्यस्तमुचितम्॥५॥**

प्रपञ्चमिथ्यात्ववादिनं प्रति बाधकमप्याह—ततश्चेति। ज्ञानस्य विधायकं सुकाण्डमुपनिषद्रूपं भ्रमतिमिरविध्वंसकत्वादारब्धव्यं स्यादपि। कर्म्मविधायकं काण्डं नारब्धव्यं स्यादनुपयोगात्। तथा च कर्म्मविधायकवेदाप्रामाण्यस्वीकारे तव वेदैकदेशपरित्यागाद् वेदैकदेशग्रहणाच्च कथमुभयभ्रष्टता न स्यात्? किञ्च स्यादेवम्, यदि त्वदुक्तं प्रमाणारूढं स्यात्; नहीत्थं पश्यामो वयम्। तस्मादिदं प्रत्यक्षादिसिद्धं जगदाद्यन्तशून्यं सदैव प्रवाहरूपम्, अमलं त्वदभिमताज्ञानकार्यत्वादिदोषासंस्पृष्टम्, विचित्रारम्भसंयुक्तं नहि कदाचिदध्यस्तं भवितुमुचितमित्यर्थः। तथापि प्रपञ्चस्याऽऽविद्यकत्वाभिधानमत्यन्तानुचितमिति भावः॥ ५॥

**यदा बुद्धं ब्रह्माऽमृतमजमनाकारममलं**
**तदाऽन्यं कं दृष्ट्वा ह्ययमुपदिशेत्सत्यमनृतम्।**
**कृतार्थो विद्भूत्वा स्वपरमतभेदावदलनात्**
**कथं शास्त्रारम्भो भवति भवतां पक्ष उदिते॥६॥**

आत्मस्वरूपसाक्षात्कारे सति संसारस्य मिथ्यात्वावगमः, किं वा ततः प्रागेव? इति विकल्प्याद्यं दूषयति—यदेति। यस्मिन् समये ब्रह्म अमृतमविनाशि, जन्मादिविक्रियाशून्यम्, आकारवर्जितम्, निर्मलं बुद्धं साक्षात्कृतम्; तदा तस्मिन्समये कमन्यं द्वितीयस्याभावादेव दृष्ट्वा आलोच्याऽयं ज्ञानी हि यस्मादुपदिशेदुपदेशं कुर्यात् 'ब्रह्म सत्यम्' 'इदं जगदनृतम्' इति, तदुत्तरकालं प्रपञ्चस्यैवाभावात्। सत्यमिथ्यात्वादिव्यवहारानुपपत्तेरिति भावः। अथ कञ्चित्कालं बाधितानुवृत्तिरभ्यु-

पगम्यते इति चेत्तत्राह—कृतार्थ इति। तथापि स्वयं कृतार्थत्वात् स्वव्यतिरिक्तात्मान्तराभावनिश्चयात् तस्योपदेशसमये स्वमतस्थापनं परमतखण्डनमपेक्षितं स्यात्, तदपि दुर्घटं स्वपरपक्षविभागाभावादित्याह—स्वपरेति। इदं स्वमतम्, इदं परमतम्, इति भेदस्य बाधितत्वात्कथं भवतां पक्षेऽखिलाध्यस्ततत्ववादिनां मते मायावादे उदिते यथोक्ते शास्त्रारम्भोऽपि भवति? न कथमपीत्यर्थः॥ ६॥

**पुरा तत्त्वज्ञानान्न च जगति मिथ्यात्वधिषणा**
**न वा प्रत्यक्षाद्यैरवगतमिदं बाध्यमपि च।**
**विना बाध्यज्ञानं भ्रमजमिति निश्चेतुमपि तत्**
**न शक्यं न श्रौतं वचनमपि वक्तुं क्षममिति॥ ७॥**

ज्ञानात्प्रागेव संसारस्य मिथ्यात्वावगमपक्षं दूषयति—पुरेति। न वा प्रत्यक्षाद्यैरवगतमिदं जगदनुमानादिना बाधयोग्यम्। अपि चेति निपातसमुदायो युक्त्यन्तरसमुच्चायकस्तदाह—विनेति। बाधक-मन्तरेण मिथ्यात्वानभ्युपगमादित्यर्थः। न वा श्रौतं वचोऽपि सर्व-प्रमाणविरुद्धं वक्तुं समर्थमिति योजना॥ ७॥

**न वा श्रौतज्ञानं कथमपि जगद्बाधकमिति**
**स्वभावादात्माऽयं भवति न परोक्षः श्रुतिमतः।**
**कथं तत्र ज्ञानं जनयति परोक्षं श्रुतिवचो**
**न वा तादृग्ज्ञानाद्भवति जगतो बाधनमपि॥ ८॥**

नन्वागम एवात्मविषयं परोक्षज्ञानमुत्पाद्य प्रपञ्चबाधकः किन्न स्यात्? इति तत्राह—नवेति। निरुपाधिकस्यात्मस्वरूपस्यापरोक्षैकस्वभाव-तया तत्र परोक्षज्ञानासम्भवात्सोपाधिकज्ञानस्य विभ्रममात्रत्वात्तेनाऽ-

न्यस्य बाधानुपपत्तेः । श्रुतिरपि अपरोक्षस्वभावे आत्मनि परोक्षं ज्ञानं कथं जनयेत् ? प्रामाण्यापत्तेः । अपरोक्षस्य जगतस्तादृक्परोक्षज्ञानाद्बाधनमप्यनुचितमिति तात्पर्यार्थः ॥ ८ ॥

न सत्यः संसारो यदि भवति जीवात्मनि तदा
किमर्थं तद्ध्वस्त्यै ह्युपदिशति शास्त्रञ्च करणम् ।
मृषाबन्धध्वस्त्यै यदि मतमिदं नैतदपि सत्
न मिथ्याहिध्वस्त्यै दिशति मणिमन्त्रादिकरणम् ॥९॥

शास्त्रारम्भान्यथानुपपत्तिरपि संसारसत्यत्वं कल्पयतीत्याह—न सत्य इति । स्पष्टम् ॥ ९ ॥

अतः संसारोऽयं भवति परमार्थस्त्वितरथा
प्रमात्वं वेदानां क्रतुजपपराणां कथमहो ।
जगत्तस्मादात्मन्यखिलमिदमाबालमतिगं
किलाऽबाध्यं ज्ञानात्कथमपि लयं याति न कदा ॥१०॥

फलितमुपसंहरति—अत इति । इतरथा तव मते स्वर्गादिसाधनजपयज्ञादिपराणां वेदानां कथं प्रामाण्यं स्यात् ? अहो आश्चर्यमेतत्, यवान् वेदार्थं बुद्ध्वा तमन्यथाकर्त्तुं प्रवृत्त इत्यर्थः । न वा वेदान्तानामपि प्रामाण्यं वेदत्वाविशेषात् । इदमत्राकूतम्—किमात्मनि संसारसम्बन्धात्कोऽपि विशेषोऽस्ति ? न वा ? अस्ति चेत्, पारमार्थिकः काल्पनिको वा ? पारमार्थिकश्चेत्, तर्ह्येवं विशेषमात्मनि परमार्थमभ्युपगच्छतः सुखदुःखादिसंसारे कः प्रद्वेषः ? काल्पनिकश्चेत्, तर्हि संसारभावाभावयोर्विशेषाभावात्तन्निवृत्तये शास्त्रारम्भो निरर्थकः । काल्पनिकविशेषनिवर्त्तने न शास्त्रमर्थवत्स्यादित्यप्यसत् ।

लोके सर्पसम्बन्धासम्बन्धावभासयो रज्जुगतविशेषाभावेऽपि द्रष्टृगत-विशेषादेव सर्पभ्रान्तिसम्भवात्तन्निवृत्तये रज्जुस्वरूपोपदेशोऽर्थवान् । इह पुनरात्मन्यनात्माध्यासेऽधिष्ठानं द्रष्टा चोभयमप्यात्मैव, न तत्र कदाचिदप्यस्ति विशेषः । ततश्चात्मनि संसारभ्रान्तेरसम्भवे सति कथं तन्निवृत्तये शास्त्रमारभेत इति । प्रकृते किमायतमित्यत आह—तस्मादिति । तस्मात्संसारस्याबालपण्डितप्रतीतिसिद्धत्वात् तन्मिथ्यात्वे कर्म्मकाण्डज्ञानकाण्डयोरनारम्भप्रसङ्गादात्मनि पारमार्थिकः संसार इति तार्किका अध्वरमीमांसकाश्च मन्यन्ते इत्यर्थः ॥ १० ॥

**इति प्राप्ते ब्रूमः शृणु दृढसमाधानमधुना**
**विनाऽध्यासं युष्मन्मत इदमनात्मात्मवपुषोः ।**
**जगद् दुःखाद्यात्म प्रभवति विभौ त्वं वद कथं**
**न सर्वव्यापी यः कथमपि परिच्छेत्तुमुचितः ॥११॥**

एवं पूर्वपक्षे प्राप्ते तं दूषयितुं प्रपञ्चस्य स्वाभिमताध्यस्तत्वमुपपादयितुं चाध्यासमन्तरेण तन्मते संसारव्यवहारानुपपत्तिं प्रदर्शयन् प्रतिजानीते—इतीति । तत्र ये भवन्तस्तार्किकादयः सर्वगतात्मवादिनस्तेषां युष्माकं मतेऽनात्मा देहादिरात्मा च विभुस्तयोरात्मानात्मनोरन्योन्याध्यासमन्तरेणेदं जगद् दुःखादिरूपं विभौ सर्वगते आत्मनि कथं केन प्रकारेण प्रभवति बन्धकत्वेन समर्थं भवतीति त्वं वद । नहि यः सर्वव्यापी स कथमप्यध्यासमन्तरेण परिच्छेत्तुमुचितः । अहमस्मिन्सदने जानान इत्यादिपरिच्छिन्नव्यवहारगोचरयोग्यतां भजते इत्यर्थः ॥ ११ ॥

**गुणा ये ज्ञानाद्यास्तव मतमता आत्मनि विभौ**
**त्वयोत्पत्तिस्तेषां कथमभिमता तत्र वद भोः ।**

**मनःसंयोगाच्चेद्भ्रद कथमसौ योग उभयोः**
**परिच्छिन्नेनाऽऽत्मा विभुरपि कथं युज्यत इति ॥१२॥**

अध्यासं विना विभावात्मनि ज्ञानसुखाद्युत्पत्तिर्न कथमप्युपपादयितुं शक्येत्याह—गुणा इति। ये ज्ञानादयो आत्मनो विशेषगुणास्तवमतेऽभिमतास्तेषामुत्पत्तिस्तत्रात्मनि विभौ त्वया कथमभिमता इति भो वादिन्! वदेति सम्बन्धः। अयमर्थः—गुणश्च निरवयवद्रव्ये यावद्द्रव्यभावी दृष्टः, यथा परमाणुगतरूपादिः; यथा वाऽऽत्मगतसंख्यापरिमाणादिः। न चाऽऽत्मगतसंयोगविभागयोर्व्यभिचार इति वाच्यम्, तयोरद्यापि सद्भावस्यैवाऽनिश्चयात्। तथा सत्यात्मनि ज्ञानसुखादयो जायमाना देहाद्यवच्छिन्नदेशादन्यत्र जायेरन्निति। ननु सर्वं कारणत्रयमपेक्ष्यैव जायते, तत्र ज्ञानादेर्गुणस्यात्मा समवायिकारणम्, मनःसंयोगोऽसमवायिकारणम्, अदृष्टादि निमित्तकारणम्। ततश्च हृदयदेशावस्थानान्मनसो हृदयावच्छिन्नात्मदेशेनैव संयोगात्तत्रैव सुखादयो जायन्ते न तथा संख्यापरिमाणादय इत्याशङ्क्याह—मनःसंयोगादिति। आत्मनो हृदयावच्छेदो नाम किमात्मस्वरूपमेव? उत धर्मान्तरम्? स्वरूपं चेत्, तस्य सर्वगतत्वात्सर्वत्रैव सुखादयो जायेरन्। धर्मान्तरञ्चेत्, किं स्वरूपमात्रेऽवतिष्ठते? किं वाऽवच्छिन्नदेशे? आद्ये, तस्य सर्वात्मदेशव्यापित्वात्सुखादयो जायेरन्। द्वितीये, तस्याप्यवच्छेदान्तरापेक्षायामनवस्था। एवं सति कथमध्यासमन्तरेण संसारोपलम्भ इति तात्पर्यार्थः ॥ १२ ॥

**विभुत्वादात्माऽयं क्वचिदपि वियोगं न भजते**
**न वा संयोगं सोऽनवयववपुर्मायिकमृते।**
**अदृष्टैः सम्बन्धो यदि तदपि सम्यङ् न घटते**
**न दिक्शून्येऽदृष्टैरपि घटयितुं शक्यमुचितम् ॥१३॥**

एवमध्यासं विना सुखाद्युत्पत्त्यनुपपत्तिं प्रदर्श्याऽध्यासमङ्गीकारयति—विभुत्वादिति। निरवयवं वपुः स्वरूपं यस्य स च मायाकार्याध्यासमन्तरा क्वचिदपि बहिरन्तर्वा संयोगं वा विभागं वा न भजते। अदृष्टैर्नियमोपपत्तिः स्यादित्यप्यसङ्गतम्। नहि अदृष्टैरपि निःप्रदेशे एवात्मनि प्रदेशविशेषजन्मवस्तुस्वभावस्याऽन्यथाकर्त्तुमशक्यत्वादित्यभिप्रेत्याह—अदृष्टैरिति। दिक्शून्ये निःप्रदेशे अदृष्टैर्धर्माधर्मरूपैरपि सुखादिसम्बन्धनियममुचितरूपं घटयितुं सम्पादयितुं नहि शक्यमिति योजना। तथा च प्रतिनियतसुखाद्युत्पत्त्यनुपपत्तिरेवाध्यासं गमयतीत्यर्थः॥ १३॥

**अतोऽध्यासाद्योगो घटत उभयोरात्ममनसो-**
**स्तदाधारो बन्धोऽनृत इत इहाऽऽविद्यक इति।**
**यतोऽध्यस्तोपाधौ तनुयुगल आभाति न विभौ**
**मरीच्यम्भोवीचीवदखिलमिदं भ्रान्तिकलितम्॥१४॥**

तस्मादात्मनि प्रदेशविशेषप्रतिभासो विभ्रम एवेत्याह—अत इति। यस्मादपरिच्छिन्ने कथमपि प्रतिनियतसुखादिप्रतिभासोऽध्यासमन्तरेण न सम्भवति। अत उभयोरात्ममनसोरन्योऽन्याध्यासादेव योगः सम्बन्धो घटते सम्भवति। तदाधारस्तदन्योऽन्याध्यासाधीनो बन्धः सुखादिप्रतिभासरूपः, अनृतोऽनिर्वाच्यः, इतो हेतोरिहात्मनि आविद्यकोऽविद्याकार्य्यत्वादध्यस्तो यतो यस्मात्कल्पितोपाधौ शरीरद्वये आभाति अवभासते, न विभावात्मनि, इत्यतो हेतोर्मरीच्यम्भोवीचीवन्मृगतृष्णोदकसमुल्लसितवीचीतरङ्गमालावद् अखिलं जगदिदं सुखादिप्रतिभासरूपं भ्रान्तिकलितं मायाविजृम्भितमेवेत्यर्थः॥ १४॥

**न यावच्छास्त्रं तत्त्वमसिमुखमालोच्य विधिना**
**परब्रह्मास्मीति स्वमकलमजं वेत्त्यनुभवात्।**

स तावत्संसारं जनिमृतिमयं मायिकमिमं
सदित्येवं वेत्ति प्रबलतमसा संवृतमतिः ॥१५॥

यत्तूक्तमबाधितप्रतीतिगोचरत्वात् सत्य एव संसारस्तदपि दुस्तर्काग्रहविलसितमित्यभिप्रेत्याह—नेति । यावत्पर्यन्तं तत्त्वमस्यादिशास्त्रं विधिना सम्यग्गुरूपदिष्टोपक्रमादिलिङ्गैरालोच्य स्वमात्मानम्, अकलं षोडशकलात्मकलिङ्गशरीरवर्जितम्, अजं जन्मादिषड्भावविकारवत्स्थूलशरीररहितम्, परं ब्रह्मैवास्मीत्यनुभवात् साक्षात्काररूपान्न वेत्ति; तावत्कालपर्यन्तं स पुरुषः प्रबलतमसा दुस्तराज्ञानान्धकारेणाऽऽवृतमतिर्जन्मादिप्रचुरं संसारं मायाविकारमिमं प्रत्यक्षादिभिरवगतमर्थक्रियासमर्थत्वेनानुभूयमानतया सदित्येवं वेत्ति । ततश्च संसृतिभाग् भवतीत्यर्थः ॥ १५ ॥

मृषात्वं विश्वस्य श्रुतिरपि वदत्येव शतशः
प्रतीचोऽपि ब्रह्माद्वयसुखघनात्मत्वमिति च ।
मनुष्यत्वाद्यात्मन्यनृतमखिलं बाध्यत इतो
न सत्यः संसारोऽप्यनुभवत इत्येव फलितम् ॥१६॥

जगतो मिथ्यात्वे प्रत्यगात्मनो ब्रह्मत्वे च सकलप्रमाणमूर्द्धन्यवेदान्ताः प्रमाणमित्याह—मृषात्वमिति । "अतोऽन्यदार्तम्"(बृ० ३।४।२)"नेहनानास्ति किञ्चन" (बृ०४।४।१९) इत्यादिश्रुतिरपि शतशो वचनसमूहैर्विश्वस्य कार्य्यकारणात्मकस्य मिथ्यात्वं वदति "तत्त्वमसि" (छा० ६।८।७) "अयमात्मा ब्रह्म" (बृ० २।५।१९) "अहं ब्रह्मास्मि" (बृ० १।४।१०) इत्यादिश्रुतिः सहस्रशो यद्ब्रह्माद्वयसुखघनमखण्डानन्दब्रह्मतत्त्वमेकरसं तदात्मत्वं प्रतीचः प्रत्यगात्मनो वदति । इत्यतो वेदान्तजन्यबोधेनात्मन्यखिलं मनुष्यत्वादिविभ्रमात्मकं जगद् बाध्यते, इतस्तत्त्वज्ञानबाधान्यथानुपपत्तेर्न संसारसत्यत्वम्, लोके रज्जुज्ञानबाधा-

न्यथानुपपत्तेः सर्पादेः मिथ्यात्वं दृष्टम्, ततोऽनुभवादपीत्येव फलितम् । संसारोऽध्यासकृत एवेति सिद्धमित्यर्थः ॥ १६ ॥

**न वाऽध्यक्षादीनां निगमहृदयं ह्यन्यथयितुं**
**कदाचित्सामर्थ्यं निरतिशयतत्त्वावगमकम् ।**
**स्वयंज्योतीरूपे निरवधि सुखे संसृतिरियं**
**मृषैवातोऽध्यासाद्भ्रमभयनिधिः स्वात्मनि पदे ॥१७॥**

प्रत्यक्षादिप्रमाणबलेन संसारसत्यत्वापादनं दुर्घटमित्याह—न वेति । प्रत्यक्षादिप्रमाणानां प्रातिभासिकसंसारविषयाणां प्रमाणमूर्द्धन्यवेदान्ततात्पर्य्यनिरतिशयतत्त्वावगमकतया परमपुरुषार्थपर्यवसायिसिद्धान्तमन्यथाकर्त्तुं हि यस्मात्सामर्थ्यं कदाचिन्न चाऽस्तीति सम्बन्धः । अतः स्वयंज्योतीरूपे स्वात्मनि निरवधिसुखस्वरूपे इयं संसृतिर्भ्रमभयनिधिरतीवदुस्तरत्वेन भासमाना अध्यासादेव मृषैव न वस्तुसतीति योजना ॥ १७ ॥

**अधीतस्वाध्यायैर्विदितपदवाक्यार्थनिपुणै-**
**र्महावाक्यं श्रुत्वा सपदि परमात्मैक्यविषयम् ।**
**स्वयं लब्धुं शक्यं विमलमपरोक्षं भ्रमहरं**
**विपश्चिद्भिर्ज्ञानं परमपदविश्रान्तिजनकम् ॥१८॥**

अपरोक्षस्वभावे आत्मनि परोक्षज्ञानस्य भ्रान्तत्वादपरोक्षज्ञानस्य प्रमाणत्वेऽपि तदुत्तरकालं परमार्थप्रमाणव्यवहारानुदयात् संसारस्य मिथ्यात्वे प्रमाणानुपपत्तिरित्याशङ्क्याह—अधीतस्वाध्यायैरिति । गृहीतपदपदार्थसम्बन्धस्य न्यायविदो वाक्यश्रवणानन्तरमपरोक्षज्ञानमेवात्मनि समुत्पद्यते, नहि पुनः परोक्षज्ञानम्; ततश्च तत्त्वज्ञाननिवर्त्त्यान्यथानुपपत्तिरेव प्रपञ्चमिथ्यात्वे प्रमाणमिति तात्पर्यार्थः ॥ १८ ॥

परन्त्वात्मज्ञानं प्रभवदपरोक्षं नृमनसां
विशुद्धेर्वैषम्याद् दृढतरमिदं नैव यदपि।
तथापि श्रुत्यन्तप्रकटितमृषात्वं जगदिदं
विभौ नास्तीत्येवं दृढमतिरुदेत्येव सुधियाम्॥१९॥

तर्हि विदितपदपदार्थानां श्रुतवेदान्तानामपि कुतो विपर्ययादिदर्शनमित्याशङ्क्य पुरुषबुद्ध्यपराधादेवेत्याह—परन्त्विति। किन्त्वपरोक्षज्ञानमात्मनि प्रभवदपि साज्ञानविपर्य्ययबाधने समर्थतया जायमानमपि नृमनसामधिकारिजनान्तःकरणानां शुद्धतारतम्यान्नैवेदं दृढतरं भवति। ततश्चाऽऽत्मनिर्विचिकित्सानुभवफलस्य प्रतिबद्धत्वेऽपि तात्पर्य्यवद्वाक्यप्रामाण्यादेव पूर्वमपि संसारस्य मिथ्यात्वनिश्चय उपपद्यत इत्याशयेनाह—तथापीति। श्रुत्यन्तैः श्रुतिशिरोभिः प्रकटितं प्रकाशितं मृषात्वं यस्य तत्। "तरति शोकमात्मवित्" (छा० ७। १। ३) इत्यादिश्रुतयः प्रपञ्चमिथ्यात्वमन्तरेणाऽनुपपद्यमानाः शतशः प्रपञ्चमिथ्यात्वे प्रमाणम्। ततश्चेदं जगद्विभौ परमात्मनि नास्ति वस्तुत इत्येवं दृढमतिः शास्त्रीयदृढनिश्चयः सुधियां विगतान्तःकरणदोषतया विवेकादिसाधनसम्पन्नानां प्रज्ञानामुदेत्येव प्रादुर्भवत्येवेत्यर्थः। तथा चाप्रतिबद्धात्मतत्त्वसाक्षात्कारपर्यन्तं विपर्य्यासदर्शनम्, न ततः परमिति भावः॥ १९॥

दृढे बोधे जाते निखिलजगदाभासविलयः
स्वतः सिद्धो ब्रह्मामृतसुखपदस्यस्य सुमतेः।
अतोऽविद्वत्पुंसोऽनधिगतपरात्मैक्यसरणे-
र्विबोधार्थं शास्त्रं ह्युपदिशति यागादिकरणम्॥२०॥

श्रवणादिसकलसाधनसम्पत्तौ पुनरशेषप्रतिबन्धविगमोपपत्तेर्निर्विचिकित्सात्मानुभवे सति तद्विपरीतसंसारप्रतिभासो निवर्त्तते

इत्याह—दृढ इति । इष्टानिष्टप्राप्तिपरिहारयोर्मिथ्यात्वे सति तत्साधनविधायि शास्त्रमनर्थकमिति यदुक्तं तत्राह—अत इति । यस्मादज्ञस्याऽशुद्धचित्तस्य तत्त्वज्ञानेऽधिकाराभावात् संसारसत्यत्वप्रतिभासः, अतोऽविद्वत्पुंसोऽनाधिगता परमात्मैक्यसरणिर्ब्रह्मात्मैक्यज्ञानमार्गो येन तस्य विशोधार्थमन्तःकरणशुद्धिद्वारा ब्रह्मबोधार्थं शास्त्रं कर्मकाण्डं हि यस्माद्यागादिकरणमुपदिशतीति सम्बन्धः । अयमर्थः—यथा भ्रान्तपुरुषाभिप्रायमनुसृत्य श्येनादिसाधनविधानं तदनुष्ठानं तत्फलावाप्तिश्च दृश्यते, तथैवाऽऽत्मविज्ञानात्प्रागनाद्यविद्यया कर्म्मफलेषु पुरुषार्थत्वमध्यारोप्य, तत्राऽभिनिविशमानस्य भ्रान्तस्यैवाभिप्रायमनुसृत्य साधनविधानादिसर्वमावाधादुपपद्यते । तथा श्रुतौ वेदान्तस्यापि प्रतिबन्धबाहुल्ये सति ऐकात्म्यशास्त्रमपि फलपर्यन्तं विज्ञानं न जनयति, यज्ञादिक्षपिताखिलप्रतिबन्धस्य पुरुषस्य तु जनयतीति न काचिदनुपपत्तिरिति ॥ २० ॥

**अविद्याध्यस्तोऽयं जनिमृतिमयो बन्ध उदितः**
**प्रतीचीतो मुक्त्यै शमदमतितिक्षादिगुणकम् ।**
**पुमांसं संश्रित्य भ्रमतिमिरविध्वंसिकरणं**
**मतः शास्त्रारम्भोऽपरिमितपदावस्थितिफलः ॥ २१ ॥**

यत्तूक्तं संसारसम्बन्धादात्मनि पारमार्थिकविशेषाभ्युपगमे संसारस्यापि तथात्वप्रसङ्गात् अनभ्युपगमे संसारभावाभावयोरात्मन एकरूपत्वान्न संसारनिवृत्तये शास्त्रमारब्धव्यमिति तदप्यागमाशयानवबोधजृम्भितमित्याह—अविद्येति । आत्मनि संसारबन्धस्यैव विशेषत्वात्, तस्य च वस्तुतोऽभावेऽपि भ्रान्त्या प्रतीयमानत्वात्, सत्यमिथ्यात्वयोरपि संसारस्यात्मनि प्रतिभासमानतयैवानर्थत्वात्; तन्निवृत्तये शास्त्रारम्भोपपत्तिरनवद्यैवेति तात्पर्यार्थः । अक्षरार्थस्तु प्रतीचि प्रत्य-

गात्मनि जनिमृतिप्रचुरोऽयं कर्तृत्वादिरूपो बन्धोऽविद्ययाऽनिर्वाच्यया-ज्ञानेनैव परिकल्पित उदितो विद्वद्भिरिति शेषः। इतो बन्धान्मुक्त्यै मोक्षसिद्धये शमदमतितिक्षादिगुणविशिष्टं मुमुक्षुं पुमांसं पुरुषधौरेयं संश्रित्याऽऽत्मज्ञानाधिकारित्वेनाश्रित्य भ्रमतिमिरविक्षेपावरणशक्तिक-मज्ञानं विध्वंसयितुं स्वोत्पत्तिमात्रेण बाधितुं शीलमस्य तत्तथाविधं तत्त्व-ज्ञानं तस्य जनकतया करणं साधनं शास्त्रारम्भस्तत्त्वमस्यादिविचार-प्रधानम् "अथातो ब्रह्मजिज्ञासा" (ब्र० सू० १। १। १) इत्यादि-शास्त्रं तदारम्भो भगवद्व्यासस्य मतोऽभिमतः। अपरिच्छिन्नपदं ब्रह्मतत्त्वं तद्रूपेणावस्थितिर्मोक्षस्तत्त्वज्ञानजननद्वारा फलं यस्य स च तथेति ॥ २१ ॥

**श्रुतीनां प्रामाण्यादवगतमृषात्वस्य जगतोऽ-**
**वभासस्यात्मन्यध्यसनकरणं ह्यान्ध्यमुदितम्।**
**अतोऽध्यासादेवाखिलविकृतिसंसारकलना**
**चिदानन्दे भातीत्यपि निगमसिद्धं नययुतम् ॥ २२ ॥**

यदप्युक्तं रज्ज्वादौ सर्पाद्यध्यासे विषयकरणादिदोषसम्भवादुभयो-रपि विषयत्वाच्च भवेदपि भ्रान्तिः, आत्मन्यनात्माध्यासे पुनर्द्रष्टुरधि-ष्ठानस्य करणस्य चाऽऽत्मव्यतिरेकेणाभावात्, आत्मनश्च निर्विशेषत्वाद् द्रष्टृत्वाच्च, न तत्र भ्रान्तिसम्भव इति तत्राह—श्रुतीनामिति। द्रष्टु-रीदृशस्यावभासस्याविद्याध्यासात्मकत्वे सकलवेदान्तप्रामाण्यादेव निश्चिते सति आत्मनि बाह्याऽध्यासनिमित्तकारणाभावेऽपि सर्वभ्रमानु-गतानिर्वचनीयाज्ञानमेव कार्यान्यथानुपपत्त्या कारणं परिकल्प्यते इति न काचिदनुपपत्तिरिति तात्पर्यार्थः। अक्षरार्थस्तु श्रुतीनां वेदान्तानां प्रामाण्यादेवावगतमवबुद्धं मृषात्वं मिथ्यात्वं यस्य तस्य जगतो भूत-भौतिकप्रपञ्चस्य तदवभासस्य चात्मनि प्रत्यगभिन्ने ब्रह्मणि अध्यासः

तस्याऽर्थाध्यासस्य ज्ञानाध्यासस्य च करणं कारणं हि यस्मादान्ध्यमज्ञानमनाद्यनिर्वाच्यमविद्यादिशब्दवाच्यमुदितं कथितं विद्वद्भिरिति शेषः । यतः सदसतोर्ज्ञाननिवर्त्यत्वं नास्ति, यस्माच्च "तरति शोकमात्मविद्" ( छा० ७ । १ । ३ ) इत्यादिश्रुतेरात्मज्ञानेनैव शोकोपलक्षितस्य संसारसमुद्रस्य तरणं श्रूयते । अत आत्मज्ञाननिवर्त्योऽज्ञानकार्याध्यासादेवाऽखिलविकाररूपस्य संसारस्य जन्ममरणप्रवाहरूपस्य कलना कल्पना चिदानन्दे स्वप्रकाशसुखस्वरूपे प्रत्यगात्मनि भाति प्रतीयते—इत्यपि निगमसिद्धं नययुतं युक्तियुक्तञ्चेत्यर्थः । अपिशब्देन यद्यपि वेदान्ता अद्वितीये ब्रह्मण्येव प्रमाणम्, नाऽज्ञानतत्कार्याध्यासादौ, तथापि तत्प्रामाण्यान्यथानुपपत्त्या अज्ञानतत्कार्यमध्यासश्च कल्प्यते । न तु साक्षात्तन्निगमसिद्धमध्ययनविधिविरोधादिति सूच्यते ॥ २२ ॥

**प्रपञ्चो व्योमादिस्त्वयमनृत आविद्यकतया**
**विवर्त्तश्चिद्व्योम्नः प्रकृतिशबलस्येशितुरितः ।**
**यथा स्वाप्नं विश्वं दृशि कलितमाविद्यकतयाऽ-**
**वबुद्धेऽधिष्ठाने न च जगदभून्नास्ति भविता ॥२३॥**

नन्वस्तु जीवाविद्याकल्पितत्वात्तद्गतसंसृतेर्मिथ्यात्वम्, आकाशादिप्रपञ्चस्यानादिसिद्धतया प्रत्यक्षादिभिरनुभूयमानस्य कथं मिथ्यात्वं स्यात् ? तथा च तस्मिन् सत्यत्वेनानुभूयमाने सति कथं मुक्तिः ? इत्याशङ्क्याह—प्रपञ्च इति । व्योमादिप्रपञ्चस्त्वयम्, तु शब्द शङ्कानिवृत्त्यर्थः, यतोऽयमनृतः सद्विलक्षणः सदसद्भ्यां निर्वक्तुमशक्यत्वादनिर्वाच्य इति यावत् । तथात्वञ्चाऽस्याऽनिर्वाच्याऽविद्याकार्य्यत्वादित्याह—आविद्यकतयेति । नन्वीश्वराश्रितमायाकार्य्यत्वात्प्रपञ्चस्य कथमाविद्यकत्वम् ? इत्यत आह—प्रकृतिशबलस्येति । प्रकृतिर्माया

अविद्याऽज्ञानादिशब्दवाच्यं तदुपहितस्येश्वरस्य चिद्व्योम्नश्चिन्मात्रस्य ब्रह्मणो विवर्त्तोऽन्यथाप्रतिभासः "तत्त्वादप्रच्युतस्यान्यथाप्रतिभासो विवर्त्तः" इत्युक्तेः। यथा सर्परजताद्यात्मना रज्जुशुक्त्यादेः। विवर्त्त इति भावे कर्म्मणि च घञ्। तेन ज्ञानाध्यासविषयाध्यासयोः संग्रहः। तथा च सा मायैवाऽविद्या, नान्या, तयोर्लक्षणसाम्यात्, तत्त्वावभासविरोधित्वे सति विपरीतावभासहेतुत्वरूपं लक्षणमुभयत्र वर्त्तते इति भावः। न च "स्वाश्रयव्यामोहहेतुरविद्या", "तमव्यामोहयन्त्यन्यव्यामोहहेतुर्माया" इति लक्षणभेदाद् भेदोऽस्त्विति वाच्यम्। अव्यामोहस्य तत्त्वज्ञानप्रयुक्तत्वात्, अङ्गुल्यावष्टम्भादिना बुद्धिपूर्वचन्द्रद्वित्वादिप्रतिभासे दर्पणे मुखादिप्रतिभासे चाविद्याया अपि स्वाश्रयव्यामोहादर्शनात्। अत एव कर्त्तुः स्वातन्त्र्यपारतन्त्र्याभ्यामपि न भेदप्रत्याशा। एतेनेश्वरस्याविद्याश्रयत्वे भ्रान्तत्वापत्तिरपि निरस्ता, विरोधज्ञानाऽनास्कन्दितविपर्य्ययस्यैव भ्रान्तत्वापादकत्वात्। अन्यथा भ्रान्तभ्रान्तिज्ञसङ्करापत्तेः। तस्मात्—

तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते।
योगी मायाममेयाय तस्मै विद्यात्मने नमः॥

इति स्मृतावविद्यां मायामिति सामानाधिकरण्यात्, ज्ञाननिवर्त्यत्वाच्च न मायाविद्ययोर्भेदः। व्यवहारभेदस्तु स्वाश्रयव्यामोहाव्यामोहाद्युपाधिभेदादुपपादनीय इति विवरणाचार्य्याः। आचार्य्यवाचस्पतिमिश्रास्तु—"प्रतिजीवमविद्याभेदमङ्गीकृत्य व्यष्टिरूपेणाश्रयतासम्बन्धेन जीवेषु साऽविद्येत्युच्यते, समष्टिरूपेण विषयतया तु ब्रह्मणि सा माया" इत्याहुः। शुद्धचैतन्यमात्राश्रयविषया सेति संक्षेपशारीरकाचार्य्याः,

"आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला।
पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः॥"

(सं० शा० ३१९) इति वचनात्। इत्थञ्च तूलाविद्याया अपि घटाद्यधिष्ठानचैतन्यमेव विषयो न तु घटादिः, जडस्य तस्य स्वतः

स्फुरणप्रसक्त्यभावेन तत्रावरणकृत्याभावादिति बोध्यम्। एवं प्रपञ्चस्याविद्याकृतत्वं सम्भावयितुं दृष्टान्तमाह—यथा स्वाप्नमिति। दृशि द्रष्टरि कल्पितं स्वाप्नं विश्वं यथा द्विरूपं यथाऽऽविचारतयाऽनिर्वाच्यम्, तथाऽयमित्यर्थः। तत्त्वज्ञानमात्रेण निवृत्तिश्रवणादपि तस्यानिर्वाच्यत्वमित्याह—अवबुद्ध इति। अधिष्ठाने प्रत्यगभिन्ने ब्रह्मणि साक्षात्कृते जगन्नासीत्, नास्ति, न भविष्यतीति त्रैकालिकबाधविषयतां भजते इत्यर्थः॥ २३॥

यतो वेति श्रौतं जगदुदयवाक्यं प्रभवति-
न चान्यच्चिद्धातोरिति हृदयमाश्रित्य वचनम्।
जडानां स्वातन्त्र्यं क्वचिदपि न दृष्टं तत इदं
स्वमायाशक्त्यैवा रचयति जगद् ब्रह्म सकलम्॥२४॥

ननु "यतो वा इमानि भूतानि जायन्ते" (तै० ३। १) "यतः सर्वाणि भूतानि" (म० भा० अनु० अ० २५४। ११) "जन्माद्यस्य यतः" (ब्र० सू० १। १। २) इत्यादिश्रुतिस्मृतिन्यायकदम्बैर्ब्रह्मणः सकाशाज्जगतो जन्मादिप्रतिपादनात् कथं तस्याऽनृतत्वम्? इत्याशङ्क्याह—यतो वेति। "यतो वा इमानि भूतानि जायन्ते" इत्यादिश्रौतं वचनं चिद्धातोश्चिन्मात्राद् ब्रह्मणोऽन्यः कश्चिज्जगज्जन्मादिकृन्नास्तीति तात्पर्यमाश्रित्यैव भवति। "यतो वा" इति श्रुतौ 'इमानि' इति भूतविशेषणम्। तेन नामरूपाभ्यां व्याकृतं मनसाऽप्यचिन्त्यरचनादीत्येवंभूतधर्म्माः समर्प्यन्ते। तैश्च धर्म्मैः प्रधानादेरचेतनात् परिच्छिन्नशक्तेश्च हिरण्यगर्भादेर्जगतो जन्मादि न सम्भवतीति 'यतो वा' इत्यादिश्रुतिस्तन्मूलकस्मृतिन्यायकदम्बश्च जडानां प्रधानादीनां स्वातन्त्र्यं क्वचिदपि कुत्रापि देशे काले वा न दृष्टं श्रुतिस्मृतियुक्तिविचारेणैवानुभवपथमवतरतीति तेषां जगत्कारणत्वनिषेधपर एव। नहि चेतनानधिष्ठितरथादेः स्वतः

प्रवृत्तिर्दृष्टेत्यर्थः। फलितमाह—तत इति। ब्रह्म स्वमायाशक्त्यैव सकलमिदं जगदारचयतीति योजना। तथा च श्रुत्यादेर्जगतो ब्रह्म-कार्यत्वप्रतिपादने तात्पर्य्याभावान्मायिकत्वापरपर्य्यायानिर्वाच्यत्वरूप-मिथ्यात्वं प्रपञ्चस्येति भावः॥ २४॥

**असङ्गोदासीनं सुखघनमनन्तं समपदं**
**विना मायां विश्वं प्रति कथमिदं हेतुरुचितम्।**
**अतोऽध्यस्तां मायामनृतजडहेतुत्वमुदितं**
**समादाय ब्रह्माद्वयसुखनिधेः श्रौतवचनैः॥२५॥**

"तदेतद् ब्रह्माऽपूर्वमनपरम्" (बृ० २। ५। १९) इत्यादिश्रुति-सिद्धं कार्य्यकारणभावशून्यं ब्रह्म जगद्धेतुमायाधिष्ठानत्वमन्तरेण न जगत्कारणमित्याह—असङ्गेति। अनन्तमपरिच्छिन्नं ब्रह्म माया-मत्यन्तासम्भावितप्रदर्शिनीमनेकशक्तिमविद्यां विना कथं विश्वमाका-शादिप्रपञ्चं प्रति हेतुरुपादानं निमित्तं वा भवितुमुचितम्? इत्यन्वयः। ननु कुलालादिर्घटादिकार्य्यं रचयन्नाऽविद्यामपेक्षते, एवमीश्वरोऽपि जगन्निर्मास्यति विनैव मायामिति तत्राह—असङ्गेति। सङ्गः कार्य्य-कारणादिसम्बन्धस्तद्रहितोऽसङ्गः, "असङ्गो ह्ययं पुरुषः" (बृ० ४। ३। १४) इत्यादिश्रुतेः। ननु "तत्तेजोऽसृजत" (छा० ६। २। ३) इत्यादिश्रुतेरीश्वरस्य कर्त्तृत्वप्रतीतेरसङ्गत्वमसिद्धमिति नेत्याह—उदासीनमिति। अकर्त्तृरूपमित्यर्थः। नह्युदासीनस्य कर्त्तृत्वं तत्प्रयुक्तसङ्गो वा, अन्यथोदासीनमेव न स्यादिति भावः। चेतनो हि प्रयोजनमुद्दिश्य कार्य्यं करोति। प्रयोजनं चेश्वरस्य किं दुःखाभावः? सुखं वा? नाद्यः, तस्य स्वतः सिद्धत्वात्। न द्वितीय इत्याह—सुख-घनमिति। ततश्चोभयविधप्रयोजनशून्यत्वादुदासीनत्वाच्च तेजः-प्रभृतिकर्त्तृत्वमीश्वरस्य न युक्तमित्यर्थः। एवं निमित्तकारणत्वं

ब्रह्मणः पराकृत्योपादानत्वं निरस्यति—समपदमिति । विचित्ररचनात्मकत्वेन विषमकार्य्यं प्रति समं निर्विषमं यत्पदं तत्कथमुपादानं स्यात् ? "वैचित्र्यञ्च समस्य न" इति न्यायेन विचित्रकार्य्यं प्रति विचित्रमेव कारणं युक्तम्, न तु सममित्यर्थः। जगन्निर्माणं चेश्वराच्छ्रूयते "यतो वा" इत्यादिश्रुतेः । अतो ब्रह्मण्यध्यस्तां मायां समादाय श्रौतवचनैर्ब्रह्माद्वयसुखनिधेः परिपूर्णाद्वैतानन्दसमुद्रस्याऽनृतत्वेन जडत्वेन च प्रसिद्धं विश्वं प्रति हेतुत्वमभिन्ननिमित्तोपादानत्वमुदितमिति योजना । न हि जडानृतदुःखानेकविधप्रपञ्चं प्रति सत्यज्ञानानन्तानन्दासङ्गोदासीनस्य ब्रह्मणो मायामन्तरेण कथञ्चिदपि कारणत्वं सङ्गच्छते इति सृष्टिश्रुतीनामपि स्वार्थे तात्पर्याभावादिति भावः ॥ २५ ॥

**न तत्र प्रामाण्यं निगमशिरसां ब्रह्ममनसा-**
**मपूर्वाव्यावृत्ताद्वयसदवबोधोदयधियाम् ।**
**प्रधानाणवादीनां जडमतिमतानां निरसने**
**गभीरे तात्पर्य्यं श्रुतिहृदयविज्ञाश्रय इति ॥२६॥**

ननु "सदेव सौम्येदमग्र आसीत्" ( छा० ६ । २ । १ ) "तस्माद्वा एतस्मादात्मनः आकाशः सम्भूतः" ( तै० १ । २ । १ ) "यतो वा" ( तै० ३ । १ ) इत्यादिसृष्टिश्रुतीनां ब्रह्मजगतोः कार्य्यकारणभावप्रतिपादनपराणां स्वार्थे तात्पर्य्यं किन्न स्यात् ? इत्याशङ्क्याह—नेति । तत्र कार्य्यकारणभावे निगमशिरसां वेदान्तानां न प्रामाण्यम्, तत्र हेतुगर्भं विशेषणं—ब्रह्ममनसामिति । ब्रह्मण्यद्वितीये मनस्तात्पर्य्यं येषाम् । तथा च समन्वयविरोधान्न तत्र कस्यापि श्रुतिवाक्यस्य तात्पर्य्यमित्यर्थः । ननु किमर्थं तर्हि कार्य्यकारणभावः श्रुत्योच्यते ? तस्य तात्पर्य्यबहिर्भूततया वैयर्थ्यादिति नेत्याह—

अपूर्वेति। न विद्यते पूर्वं कारणं यस्य तत्, अव्यावृत्तं सजातीयविजातीयभेदशून्यतया कुतश्चिदपि भिन्नं न भवति यत्तत्, अत एवाद्वयं द्वैतशून्यम्, सद्ब्रह्म, तदपूर्वाव्यावृत्ताद्वयसत् तस्यावबोधः साक्षात्कारस्तस्योदये प्रादुर्भावे धीस्तात्पर्य्यं येषाम्। तथा च "अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते।" इति न्यायेन कार्य्यकारणयोरभेदस्तावल्लोकसिद्ध इति कार्य्यकारणभावमारोप्याऽद्वितीये वस्तुनि सम्भावनासिद्धये श्रुतीनां तथा वर्णनं सङ्गच्छते। न साक्षात्तादृशब्रह्मवर्णनं सम्भवति। येन तथा न वर्णयेयुरिति भावः। किञ्च, वादिपरिकल्पितप्रधानपरमाण्वादीनां जडा शास्त्राचार्योपदेशसंस्कारहीनतया मन्दा मतिर्येषाम्। यद्वा, जडेषु प्रधानपरमाण्वादिष्वभिनिविष्टा मतिर्येषाम्। तदभिमतानां निरसने निराकरणे सति निष्प्रत्यूहं गभीरेऽगाधेऽपरिच्छिन्ने ब्रह्मणि तात्पर्य्यं "यत्परः शब्दः स शब्दार्थः" इति न्यायेन सिद्ध्यतीति शेषः। इत्येवं श्रुतीनां हृदयं ब्रह्मतत्त्वं तस्य विज्ञास्तत्साक्षात्कारवन्तस्तेषामाशयस्तात्पर्य्यमित्ययमेवेत्यर्थः॥ २६॥

**यदि द्वैतं सत्यं भवति कथमद्वैतवचसां**
**भवेत्प्रामाण्यं तर्ह्यनधिगतवस्त्वैक्यविषयम्।**
**कथं वाऽसौ मोक्षो जनिमृतिमहानर्थनिगडा-**
**न्मुमुक्षूणां यस्मात्क्वथमपि लयं नैत्यवितथम्॥ २७॥**

ननु किमर्थमाग्रहेण श्रुतीनामद्वैते ब्रह्मण्येव तात्पर्य्यमिति वर्ण्यते? द्वैतमिथ्यात्वसिद्धये इति चेत्, तन्न; द्वैतस्य सत्यत्वेऽपि श्रुतिवाक्यानां स्वार्थे प्रामाण्योपपत्तेः। न वा मोक्षसिद्धये तथावर्णनम्, द्वैतसत्यत्वेऽपि मोक्षोपपत्तेश्च। किञ्च, द्वैतमिथ्यात्ववर्णनं न तावद् ब्रह्मज्ञाननिवर्हणीयत्वाय शास्त्रप्रामाण्यात् सत्यस्यापि ज्ञानान्निवृत्तेः। न च संसारिणोऽसंसारिब्रह्मैकत्वार्थमौपाधिकस्य संसारस्य सत्यस्याप्युपाधिनिवृत्त्या

निवृत्तौ जीवस्य ब्रह्मैक्यमनुभवेदित्याशङ्क्याह—यदीति । यदि द्वैतं सत्यं स्यात्तर्हि द्वैतवचसां "एकमेवाऽद्वितीयम्" (छा० ६।२।१) "तत्त्वमसि" (छा० ६।८।७) "अयमात्मा ब्रह्म" (बृ० २।५।१९) "ब्रह्मैवेदं विश्वम्" (मु० २।२।११) इत्याद्यद्वैततत्त्वप्रतिपादकवेदान्तवाक्यानां प्रामाण्यमनधिगतं प्रमाणान्तरैरविषयीकृतं यद्वस्तुनोऽनारोपितस्य ब्रह्मण ऐक्यमखण्डैकरसं तद्विषयं तदेकमात्रगोचरं कथं स्यादिति सम्बन्धः । कथं वा द्वैतसत्यत्वे सति इतो द्वैतरूपबन्धाज्जन्ममृत्युप्रवाहरूपानर्थनिगडाद् दुरुच्छेदपाशाद् मुमुक्षूणां मोक्षः स्याद् ? यस्मात्कथमपन्मितर्थं कालत्रयेऽप्यबाध्यं वस्तु कथं नैवेति न विनश्यतीत्यर्थः। सत्यस्यात्मवदनिवृत्तेः, द्वैतरूपबन्धस्यापि सत्यत्वात्; ततः कथमपि मोक्षो न स्यादिति भावः । न च सत्यः प्रपञ्चो ज्ञाननिवर्त्य इत्यागमोऽस्ति । प्रत्युत बन्धस्य ज्ञाननिवर्त्त्यत्वश्रुतार्थापत्त्या मिथ्यात्वप्रसिद्धेः । न च तार्क्ष्यध्यानादिना सत्यस्यापि विषादेर्निवृत्तिर्दृष्टेति वाच्यम्, विषादेः सत्यत्वासिद्धेः । ननु सर्वः प्रपञ्चोऽमिथ्येति त्वन्मते विषस्य सत्यत्वासिद्धिरस्तु नाम । तथापि विषस्य मिथ्यात्वं न तार्क्ष्यध्याननिवर्त्यत्वप्रयुक्तं त्वयेष्यते । किन्तु प्रपञ्चमिथ्यात्वसाधकप्रमाणान्तरप्रयुक्तमिष्यते । तथा च तार्क्ष्यध्याननिवर्त्यत्वं विषस्येव ब्रह्मज्ञाननिवर्त्यत्वं संसारस्य मिथ्यात्वे प्रयोजकं न स्यादिति चेत्, न; ध्यानस्याप्रमात्वेनाऽदृष्टान्तत्वात् । तथाहि—ब्रह्मज्ञानपरीक्षितप्रमाणमूलकं प्रमारूपमेव संसारनिवर्त्तकम्, "वेदान्तविज्ञानसुनिश्चितार्थाः"(क० ३।२।६) इत्यादिश्रुतेः; ब्रह्मविद्योपक्रमाम्नातगुरुशिष्यनिबन्धनतदुपाख्यानगतयावत्संशयनिवृत्तिप्रश्नोपदेशतत्तदुपपत्त्युपन्यासलिङ्गाच्च; तत्प्रमात्वस्थिरीकरणापेक्षितासम्भावनादिनिवृत्त्यर्थप्राप्तश्रवणमननध्यानानुवादलिङ्गाच्च । तार्क्ष्यध्यानस्य तु कल्पिताकल्पितसाधारण्येनोपदिष्टार्थविषयस्य विषनिवर्त्तकत्वे प्रमात्वं नापेक्षितमिति दृष्टान्ताऽसम्प्रतिपत्तिरिति । ननु "सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्या निवर्त्तते" इति स्मृतेः सेतुदर्शनं प्रमारूपमेव

सत्यस्याऽवस्य निवर्त्तकं दृष्टम्, तथात्राप्यस्तु, का क्षतिः ? इति चेद्, न; सेतुदर्शनञ्च चोदितक्रियात्मनैवैनोनिवर्हकम्, न प्रमारूपम्, पश्यतामपि सेतुं म्लेच्छानां श्रद्धाविरहिणां वाऽघानुपघातात्। आत्मप्रमा तु दृष्टद्वारेण बन्धनिवर्तिनी, न विधिद्वारा, तद्विधेः समन्वयसूत्रे भाष्यकृद्भिर्निराकृतत्वादित्यलं विस्तरेण ॥ २७ ॥

जगन्मिथ्यात्वे तु श्रुतिशतशिरोगीरविकलं
भजेत्प्रामाण्यञ्च व्यवहृतिरपीयं हि घटते।
मृषाबन्धं बोधो विदलयति मोक्षोऽपि सुलभः
परब्रह्माद्वैतं व्रजति न च कोपं श्रुतिमतम् ॥ २८ ॥

प्रपञ्चमिथ्यात्वे तु सर्वमनवद्यमित्याह—जगन्मिथ्यात्वे इति। "तरति शोकमात्मविद्" ( छा० ७ । १ । ३ ) "ब्रह्मविदाप्नोति परम्" ( तै० २ । १ ) "ब्रह्म वेद ब्रह्मैव भवति" ( मु० ३ । ९ ) इत्यादिश्रुतिशतशिरोगीरविकलं यथा स्यात्तथा प्रामाण्यं भजेत्। अन्यथा शोकोपलक्षितसंसारस्यात्मज्ञानेन तरणोक्तिर्ब्रह्मज्ञानमात्रेण जीवभावनिवृत्तिपूर्वकब्रह्मभावप्राप्तिकथनञ्च बाध्येत। तथा सति कथं श्रुतिशिरोगिरां प्रामाण्यं स्यादित्यर्थः। सर्वेषां वेदान्तानां समन्वयोऽद्वितीये ब्रह्मणि। शास्त्रस्य प्रथमाध्यायार्थः श्रुतिशतेत्यादिविशेषणेन दर्शितः। शतशब्द आनन्त्यपरः, "विश्वं शतं सहस्रञ्च सर्वमक्षय्यवाचकम्" इति महाभारतवचनात्। "ब्राह्मणशतं भोज्यताम्" इत्यत्र भोजनस्येव शिरसां संख्योपसर्जनसंख्येयेनान्वयः। नन्वस्तु जगन्मिथ्यात्वे तु श्रुतीनां प्रामाण्यम्, व्यवहारस्तु न सेत्स्यति; भ्रमजनितस्य व्यवहारसाधकत्वादर्शनात्। नहि मृगतृष्णाम्भः पिपासोपशमकं दृष्टमित्याशङ्क्याह—व्यवहृतिरपीति। किं भ्रमजनितस्य भ्रमकालेऽपि न व्यवहारसाधकत्वम्? बाधकाले वा? अन्त्ये, इष्टापत्तिः।

आद्ये, स्वाप्नखोरथादीनां तत्समये व्यवहारसाधकत्वं सर्वलोकसिद्ध-मित्यर्थः । बोधस्तत्त्वज्ञानं मृषाबन्धमनिर्वाच्याविद्याकार्य्यमविद्यानि-वर्त्तनेन विदलयति निवर्त्तयतीत्यर्थः । मिथ्याबन्धस्य तत्त्वज्ञानेन बाधि-तत्वात्स्वरूपावस्थानलक्षणो मोक्षः स्वतः सिद्धत्वात्सुलभः । श्रुतीनां मतं तात्पर्य्यविषयोऽद्वैतं परब्रह्मतत्त्वं न च कोपं व्रजति—जगतो मिथ्यात्वे सति एवैतत्सर्वं सिद्ध्यतीत्यर्थः ॥ २८ ॥

**अविद्यायां सत्यामनृतमिदमेवं मतिरपि**
**प्रमात्राद्यध्यस्तं श्रुतिवचनजोदेति न ततः ।**
**क्रियाकाण्डे ज्ञानेऽप्यहमिति ममेत्याद्यनुभवात्**
**प्रवृत्तिः संसिद्धा भ्रमयुतधियां वैदिकपथे ॥ २९ ॥**

ननु जगतो मिथ्यात्वे "स्वर्गकामो यजेत" "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन" (बृ० ४ । ४ । २२) इति "शान्तो दान्त उपासीत" इत्यादिशास्त्रञ्च साध्यसाधनबोधकमनर्थकं स्यादित्याशङ्क्य किं शास्त्रानर्थक्यापादनं विद्वांसं प्रति ? आहोस्विद् अज्ञं प्रति ? नाद्यः, इष्टापत्तेः । न हि तज्ज्ञं प्रति किञ्चिच्छास्त्रं विधत्ते, तस्य कृतकृत्यतया साध्यसाधनप्रत्ययबाधात् । द्वितीयश्चेत्, तत्राह—अविद्यायामिति । सत्यामविद्यायां प्रमात्रादिजगदध्यस्ततयाऽनृतं मिथ्येत्येवं मतिर्निश्चया-त्मिका बुद्धिरपि श्रुतिवचनजन्या नोदेति । ततश्च मिथ्येदमिति ज्ञाना-भावात् क्रियाकाण्डे "स्वर्गकामो यजेत" इत्यादौ कर्म्मप्रतिपादके शास्त्रे ज्ञानेऽपि तत्त्वज्ञानसाधनप्रतिपादके शास्त्रे 'तमेतम्' इत्यादौ वेदान्त-विचाररूपश्रवणादौ तत्त्वज्ञानसाधनेऽपि वैदिकमार्गे प्रवृत्तिभ्रमणादेहाद्य-भिमानेन युता धीर्येषां तेषामहं ब्राह्मणोऽमुकशर्म्मेति, ममेदं गृहं कलत्र-मिति, अहं विरक्तो ममायमाश्रम इत्याद्यनुभवादेव सम्यक्सिद्धा

स्यादिति योजना । "सर्वाणि शास्त्राणि विधिनिषेधपराणि मोक्षपराणि चाऽविद्वद्विषयाणि" इति भाष्यादित्यर्थः ॥ २९ ॥

**परे द्वैतं युक्त्याऽप्यखिलमिदमध्यस्तमनृतं**
**भवेद् भ्रान्तौ सत्यां व्यवहरणयोग्यं खमलवत् ।**
**क्षमा मिथ्याश्वाद्या व्यवहृतिपदे स्वप्नसमये**
**प्रबोधे मा सन्त्वस्त्वनृतमवभासात्मकमिदम् ॥ ३० ॥**

मिथ्यापदार्थोऽपि भ्रान्तिकाले व्यवहारसाधकः, तद्बाधे तु माऽस्तु, बाधितानुवृत्त्याऽस्तु वेति दृष्टान्तावष्टम्भेन साधयति—परे इति। युक्त्याऽपि परे परमात्मनि इदं समस्तं द्वैतं प्रपञ्चात्मकमनृतं सद्विलक्षण-मध्यस्तं कल्पितमेव भवेत् सिद्ध्येत्, भ्रान्तौ सत्याञ्च तत्तद्व्यवहार-योग्यमपि नीलं नभ इति व्यवहारवत्। ननु नीलं नभ इति व्यवहार एकविध एव दृश्यते, प्रपञ्चे तु नानाविधविचित्रव्यवहारयोग्यतया विषमो दृष्टान्त इत्यपरितोषाद् दृष्टान्तान्तरमाह—क्षमा इति। स्वप्नसमये व्यवहारगोचरे मिथ्याऽश्वगजादयोऽप्यारोहणादिविचित्रार्थक्रियासमर्था दृष्टाः। प्रबोधे तत्त्वसाक्षात्कारे जागरण इव व्यवहारसमर्था मा सन्तु, तत्कारणस्य बाधादेव। यद्वा, बाधितानुवृत्त्याऽनृतमनिर्वाच्यमवभासा-त्मकं प्रतीतिमात्रशरीरमिदं सर्वमस्तु वा, तेन का हानिरित्यर्थः ॥३०॥

**निजाज्ञानं देहाद्यखिलजगदाकारविकृतिं**
**ह्यवाप्तं ज्ञातं सज्जगदिदमनर्थार्थविषयम् ।**
**न चाज्ञातं किञ्चिद् व्यवहरणयोग्यं भवति वा**
**प्रतीतः प्राक् पश्चादपि न च भवेद्भ्रान्तिजनितम् ॥ ३१ ॥**

प्रतीतिमात्रशरीरमित्युक्तमित्युपपादयति—निजेति। स्वाज्ञान-मेव देहाद्यखिलजगदाकारेण विकृतिं परिणाममवाप्तम्। हिशब्दः

प्रसिद्धशुक्तिरूप्यरज्जुसर्पादौ तथात्वस्य द्योतकः । अत इदं जगद्देहादि-रूपमनर्थः प्रतिकूलरोगादिभिः, अर्थस्तत्तद्विषयभोगानुकूलस्वास्थ्यादि-भिः, तद्विषयं तद्रूपमनर्थार्थरूपं ज्ञातमेव सद्भवति । न च प्रतीतेः प्राग-ज्ञातमपि सत् किंचिद्वस्तु व्यवहारयोग्यं भवति । पश्चाद्वा प्रतीति-विलयादूर्ध्वं न च भवति । तत्र हेतुः—भ्रान्तिजनितमिति । प्रतीति-मात्रशरीरत्वाद् भ्रान्तिजन्यस्येत्यर्थः ॥ ३१ ॥

**स एवायं कुम्भस्तदिदमिह वेश्मेति धिषणा**
**भवेत्साम्याद्यद्वद्युगपदहिभानं स्रजि नृणाम् ।**
**न चान्योऽन्याविद्याकृतभुजगमाज्ञातुमुचित-**
**स्तथाऽत्र द्रष्टव्यं तमसि किमसम्भावितमहो ॥ ३२ ॥**

ननु द्वैतस्य प्रतीतिमात्रशरीरत्वे तदेवेदं गृहम्, सोऽयं घट इत्यादि-प्रत्यभिज्ञा न स्यात्, तस्याः पूर्वसंस्कारसहकृतचक्षुरादिजन्यत्वादित्या-शङ्क्याह—स एवेति । इह भूतले स एवायं कुम्भः; तदेवेदं गृह-मिति धिषणा प्रत्यभिज्ञा प्रातीतिकवस्तुनः प्रतीतिभेदेन भेदेऽपि साम्यात् सेयं दीपज्वालेत्यादिवत्सादृश्याद् भवति । यद्वद् येन प्रकारेण बहूनां नृणां स्रजि पुष्पमालायामहिभानं सर्पभ्रमावभासो युगपदेकदैव भवति । तत्र स्वस्वाविद्याकल्पितसर्पैक्याभावेऽपि यथा तेषामेक एव सर्पः सर्वैरनुभूयते । न च अन्याविद्याकृतभुजङ्गमन्य आज्ञातुमुचितः । अन्यान्तःकरणप्रतिबिम्बितचैतन्यनिष्ठाविद्यात्मको भ्रमस्तदन्तःकरण-वृत्तेर्दुर्ज्ञेयत्वात्ततोऽन्येन ज्ञातुमशक्य इत्यर्थः । तथाऽत्रापि सत्यत्वेनाऽ-भिमतव्यवहारभूमौ प्रातीतिकघटादीनां प्रतीतिभेदेन भेदेऽपि साद-श्यादेव प्रत्यभिज्ञानं भविष्यतीति नानुपपत्तिरित्यर्थः । ननु कथमेत-त्स्यादित्यत आह—तमसीति । अहो आश्चर्यमेतत्, यत्त्वया स्वप्नादौ-स्वशिरश्छेदादिकमत्यन्तासम्भावितमनुभूयापि न सम्भाव्यते । तमसि

अज्ञानेऽघटितघटनाचतुरे किमसम्भावितम् ? सर्वं सम्भाव्यते इत्यर्थः ॥ ३२ ॥

**जगज्जाग्रत्काले विविधमनुभूयान्ध्यजनितं**
**सुषुप्तिं गत्वा स्यात्पुनरपि समुत्थाय सहसा ।**
**जगद्बुद्धिर्या सा जगदभिनवं गोचरयति**
**स्फुटं सादृश्यात् स्यात्तदिमिति बुद्धिर्व्यवहृतौ ॥ ३३ ॥**

प्रतीतिसमानयोगक्षेमस्य प्रपञ्चस्य ज्ञातमेव सत्त्वं नाज्ञातसत्त्वमिति द्रढयितुमवस्थासु प्रपञ्चभेदं साधयति—जगदिति । जाग्रत्काले इन्द्रियैरर्थोपलब्धिलक्षणे विविधमान्ध्येनाज्ञानेन कल्पितं भूतभौतिकं जगद्विचित्रमनुभूय, सुषुप्तिं गत्वा, पुनरपि जागरे समुत्थाय, सहसा या जगद्बुद्धिर्जगद्गोचरा प्रतीतिः स्यात्; सा प्रतीतिरभिनवं स्वसमानशरीरं जगत्स्पष्टतया गोचरयति । तत्र तदिदं गृहमित्यादिबुद्धिर्व्यवहारे सादृश्यादेव स्यादिति योजना ॥ ३३ ॥

**नहि द्रष्टुर्दृष्टेरपि विपरिलोपो न तु ततो**
**द्वितीयं वाऽन्यत्स्याद्यदयमपि पश्येदिति वचः ।**
**जगद्द्वैतं सुप्तावपवदति सत्यामपि दृशि**
**प्रपञ्चाभावोऽतः श्रुतिवचनसिद्धोऽस्ति सततम् ३४**

ननु प्रत्यभिज्ञाया भ्रमत्वसाधिका युक्तिर्मूलप्रमाणाभावेनाभासत्वान्नावस्थासु प्रपञ्चभेदं साधयितुं क्षमते इत्याशङ्क्य युक्तेः श्रुतिप्रमाणमूलत्वान्नाभासत्वमित्याह—नहीति । "नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्नतु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्" ( बृ० ४ । ३ । २३ ) इति श्रुतेर्वचो दृशि द्रष्टुः स्वरूपभूतदृष्टौ सत्यामेव सुषुप्तौ जगद्द्वैतमपवदति निषेधति । अतः श्रुतिवचनप्रमाण-

सिद्धः सततमेव प्रपञ्चाभाव इति सिद्धान्तः । द्रष्टुरात्मनोऽविनाशित्वात्तत्स्वरूपभूता दृष्टिरप्यविनाशिनीति सुषुप्तेऽप्यात्मा पश्यत्येव । परन्तु यद् द्वितीयमन्तःकरणं प्रमातृ जाग्रदादौ पश्येत्, तदत्र नास्ति । ततोऽन्तकरणादप्यन्यच्चक्षुरादिकरणम्, तदप्यत्र नास्ति । यथा यच्च विभक्तं रूपादिविषयजातम्, तदप्यत्र सुषुप्तौ नास्तीत्यात्मनो विशेषदर्शनाभावो युक्तः, विशेषदर्शनकारणभूतानां प्रमातृविषयाणामभावादिति श्रुतेरर्थः ॥ ३४ ॥

**तथान्या प्राणादेरनिशमवदत्सृष्टिमपि गी-**
**स्ततोऽवस्थास्वैक्यानुभव इह विश्वस्य च मृषा ।**
**न सर्पभ्रान्तेः स्याज्जगदनुभवे भेद उचितः**
**प्रतीतेरन्यन्न क्वचिदपि मृषाध्यासजनितम् ॥ ३५ ॥**

सुप्तोत्थितस्य पुनः प्राणादेः सृष्टिर्भवतीत्यपि श्रुतिसिद्धमित्याह—तथेति । यथा पूर्वोक्तश्रुत्या सुप्तौ सृष्टिविलयः कण्ठरवेणोक्तः तथैवाऽन्या श्रुतिः "स यदा प्रतिबुध्यते" इत्युपक्रम्यानिशं प्रत्यहं प्राणादेः सृष्टिमप्यवदत् वदति । "यदा सुप्तः स्वप्नं न कञ्चन पश्यत्यथास्मिन् प्राण एव एकधा भवति तदैनं वाक् सर्वैर्नामभिः सहाप्येति, चक्षुः सर्वै रूपैः सहाप्येति, श्रोतं सर्वैः शब्दैः सहाप्येति, मनः सर्वैर्ध्यानैः सहाप्येति, स यदा प्रतिबुध्यते यथाग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः सर्वे प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः" ( कौ० ३ । ३ ) इति ततः श्रुतिप्रमाणादेवावस्थासु विश्वस्य घटादेः प्रपञ्चस्यैक्यानुभव इह व्यवहारभूमौ मृषैव । अत एव सर्पभ्रान्तेः सर्पभ्रमानुभवाद् जगदनुभवे भेद उचितो न भवति, यतः प्रतीतेरन्यत्क्वचिदपि जाग्रत्काले स्वप्र-

काले भ्रमकाले वा मिथ्याध्यासजनितं वस्तु पृथङ्नास्ति, प्रतीतिमात्रशरीरत्वादित्यर्थः ॥ ३५ ॥

**ननु भ्रान्तिज्ञानाज्जगदनुभवे कारणकृतो**
**विशेषस्तद्वत्स्याद्विषयकृत आजानत इति ।**
**जगद्धीः प्रत्यक्षाद्यखिलबलसिद्धा भ्रममृते**
**भ्रमज्ञानं नैवं कथमिह तयोः साम्यमुदितम् ॥ ३६ ॥**

**भ्रमात् पूर्वं सर्पो न भवति तथेदं तु न जगद्**
**यतः पूर्वं तस्येन्द्रियविषयसंयोगत इतः ।**
**मतं सत्त्वं लोकेऽविदितमपि नैवं भ्रमजने-**
**रतो भ्रान्तिज्ञानाज्जगदनुभवे भेद उचितः ॥ ३७ ॥**

तत्र दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यं शङ्कते—नन्वित्यादिद्वाभ्याम् । यद्यपि भवदुक्तरीत्या प्रपञ्चभ्रान्तिज्ञानयोर्न भेदः प्रतिभाति । तथाप्याजानतः स्वभावत एव रज्जुसर्पादिज्ञानादाकाशादिप्रपञ्चज्ञाने कारणकृतो विषयकृतश्च विशेषोऽस्ति । प्रपञ्चज्ञानस्य प्रत्यक्षादिप्रमाणजन्यत्वम्, सर्पज्ञानस्य त्वविद्याजन्यत्वम् । प्रपञ्चज्ञानविषयोऽज्ञातसत्त्वं घटादिः । सर्पज्ञानविषयः प्रतीतिमात्रशरीरज्ञातसत्त्वं सर्पादिः । प्रपञ्चज्ञानस्येन्द्रियसन्निकर्षजन्यत्वात् ज्ञानात्पूर्वमपि विषयसत्त्वमावश्यकम् । न तु भ्रान्तिज्ञानस्येव प्रतीतिमात्रसत्त्वम् । तस्माद् भ्रान्तिज्ञानप्रपञ्चज्ञानयोर्बहुवैषम्यात् कथं तयोः साम्यमुक्तम् ? इति द्वयोः सङ्क्षिप्तार्थः ॥ ३६—३७ ॥

**इति प्राप्ते ब्रूमो न भवति भिदा स्वाप्नजगतो**
**यथा स्वाप्नाध्यक्षाद्यखिलबलसिद्धं भ्रममयम् ।**

तथा जाग्रद्विश्वं भ्रममयमिहाध्यक्षगमितं
न वाऽध्यक्षं हेतुर्जगदनुभवे सत्त्वजनने ॥ ३८ ॥

भ्रान्तिज्ञानप्रपञ्चज्ञानयोस्तद्विषययोः शङ्कितं वैषम्यं परिहरति—इतीति । स्वाप्नज्ञानजाग्रज्ज्ञानयोस्तद्विषयोश्च भेदो न भवति । यथा स्वप्ने भ्रान्तिरूपाऽध्यक्षादिप्रमाणवत्त्वेन सिद्धं भ्रममयं स्वाप्नं वस्तु तथैव जाग्रत्कालीनं विश्वं भ्रमकार्य्यमिह जागरे कल्पिताध्यक्षादिना गमितं ज्ञापितम् । अतः प्रत्यक्षादिप्रमाणं जगतो घटादिविश्वस्यानुभवविषये यत्सत्त्वजननं तत्र हेतुर्न भवतीति योजना ॥ ३८ ॥

अविद्याकार्य्येऽस्मिञ्जगदनुभवे नास्ति किमपि
स्वतः सत्यं योगो विषयकरणादेरपि मृषा ।
यथा यक्षो लोके बलिरपि तथा भाणकमिति
स्वतः सत्ताशून्ये क्रियत इह सत्ता न करणैः ॥ ३९ ॥

तयोः साम्ये कारणसाम्यं हेतुत्वेनाह—अविद्येति । अस्मिन् प्रत्यक्षादिसिद्धे जगदनुभवेऽविद्याकार्य्ये इति हेतुगर्भं विशेषणम्, आविद्यकत्वात्किमपि वस्तु स्वतः सत्यं नास्ति, स्वाधिष्ठानवृत्तित्रैकालिकाभावप्रतियोगित्वात् । सर्वस्याप्याविद्यकस्य योगो विषयेन्द्रियसन्निकर्षविषयो घटादिः, करणानीन्द्रियाणि, आदिशब्देनालोकादेर्व्याप्तिलिङ्गादेश्च ग्रहणम् । सर्वेषामपि मृषात्वं वदन् सन्निकर्षो विषयकरणादेर्मृषेत्याहत्य वदति । तेन प्रत्यक्षादिजन्यत्वं प्रपञ्चज्ञाने विशेष इत्युक्तं परास्तम् । नहि मिथ्याज्ञानकार्य्यस्य प्रपञ्चसाधकं प्रत्यक्षादि सत्यम्, यतो लोके यक्षानुरूपो बलिरित्याभाणकम् । न वा स्वतः सत्ताशून्ये वस्तुनि करणैरिन्द्रियादिभिः सत्ता क्रियते । नहि व्योम्नि स्वतः सत्ताशून्यस्य नीलवर्णादेः सत्ता स्वच्छचक्षुरादिभिरपि सम्पादयितुं शक्येति भावः ॥ ३९ ॥

**भ्रमव्यावृत्तत्वं न च जगति बाध्यत्वकथना-**
**दतोऽन्यत्स्यादार्त्तं न च किमपि नानास्ति विमले।**
**इति श्रुत्या कार्य्येऽनृततमशरीरत्वमुदितं**
**मरीच्यम्भो रज्जावहिरिव जगद्बाध्यमुचितम्॥४०॥**

न केवलं युक्त्यैव प्रपञ्चस्य मिथ्यात्वमपि तु श्रुतिसिद्धमपीत्याह— भ्रमेति। जगति विषये भ्रमवैलक्षण्यं नास्ति, बाध्यत्वकथनात्। श्रुतिस्मृतिसहस्रैरिति शेषः। तत्र श्रुतिं दर्शयति—अत इति। अतो ब्रह्मणोऽधिष्ठानादन्यदध्यस्तं कार्य्यकारणरूपं जगदार्त्तमभावपीडितं कालत्रयेऽपि बाधितमिति यावत्। अत्रैव "नेह नानास्ति किञ्चन" (बृ० ४। ४। १९) इति श्रुत्यन्तरमर्थतः पठति—न चेति। इहेति यदस्यार्थे विमले स्वच्छे ब्रह्मणि किमपि नाना विश्वाकारेण भासमानं नास्तीति श्रुत्या विश्वस्मिन्कार्य्ये भूतभौतिकप्रपञ्चेऽनृततमशरीरत्वमत्यन्तमिथ्यात्वमुदितं कण्ठरवेणोक्तम्, तस्मान्मरीचिसमूहे जलमिव, रज्जौ सर्प इव, ब्रह्मणि जगद्बाध्यम्—मिथ्यात्वेन तत्त्वज्ञानबाधार्हमेवोचितमित्यर्थः॥ ४०॥

**प्रमाणत्वेनैवाभिमतकरणानां भवतु वा-**
**ऽखिलाधिष्ठानत्वादविदिततयात्मैव विषयः।**
**जगन्नास्त्यज्ञातं ह्यतिजडतया ज्ञानविकृतिः**
**प्रमाणानां यस्मादविदितपदार्थोऽस्ति विषयः॥४१॥**

एवं प्रपञ्चस्य भ्रान्तमात्रशरीरत्वं प्रसाध्य तद्विषयकज्ञानसाधनेन्द्रियाणां प्रामाण्यमेव नास्तीति वक्तुमुपक्रमते—प्रमाणत्वेनेति। प्रमाणत्वेनाभिमतानां चक्षुरादिकरणानामज्ञातार्थविषयता वाच्या। तथा चाखिलविश्वाधिष्ठानत्वादविदिततयाऽज्ञातरूपेणात्मैव विषयः। हि

यस्माज्जगदज्ञानविकृतिरूपमत्यन्तजडतयाऽज्ञातं नास्ति, तस्याऽऽवृतैकरूपस्य पुनरविज्ञानविषयत्वलक्षणाज्ञातत्वकल्पने प्रयोजनाभावादित्यर्थः । अविदितपदार्थो यस्मात्प्रमाणानां विषयोऽभिमतोऽस्ति । तच्चाविदितत्त्वमधिष्ठाने प्रत्यक्तत्त्वे विश्रान्तमित्यर्थः ॥ ४१ ॥

न चाज्ञातः कुम्भः कथमिति तदेयं व्यवहृतिः
स साक्षिण्यध्यस्तो घटपटमुखो ज्ञानसहितः ।
नहि ज्ञानाज्ञाने जडविषयमाश्रित्य सफले
स्वयंभानार्हेऽस्मिन्द्वयमपि कृतार्थं व्यवहृतौ ॥ ४२ ॥

घटादौ जडवर्गेऽज्ञातत्वादिव्यवहारोऽप्यन्यथासिद्ध इत्याह—न चेति । 'अज्ञातो घटः' इत्यादिप्रतीत्युपपत्तिस्त्वज्ञानेन सह साक्षिचैतन्ये घटादेरध्यासादिति स्वयंभासमानेऽस्मिन् साक्षिचैतन्ये ज्ञानाज्ञाने सफले, न तु जडे, तत्र तयोर्निष्फलत्वादिति समुदायार्थः ॥ ४२ ॥

न तु प्रत्यग्बोधे प्रविशति कदापीन्द्रियगणो
न नीरूपे शब्दे विगतगुणतत्कार्य्यकलने ।
प्रवेशो वा योगो भवति करणानां प्रमहसि
भ्रमे सत्ये वैषां गतिरपि यथा स्वाप्नजगति ॥ ४३ ॥

अस्तु तर्हीन्द्रियाणामात्मविषयत्वेनैव प्रामाण्यमित्यत आह—नत्विति । प्रत्यग्बोधे विषयविषयिभावविनिर्मुक्ततया सर्वान्तरात्मनि ज्ञानघने कदापि कथञ्चिदपि चक्षुरादीन्द्रियगणो न प्रविशति प्रवेशयोग्यतां नैवाप्नोतीत्यर्थः । प्रवेशायोग्यतामेवाह—नेति । नीरूपे रूपरहिते, अशब्दे शब्दातीते । एतदुपलक्षणमस्पर्शादेरपि, "अशब्दमस्पर्शमरूपमव्ययम्" (क० १ । ३ । १५) इत्यादिश्रुतेः । तत्र हेतुगर्भ-

विशेषणं—विगतगुणतत्कार्यकलने इति। विगताः स्वत एव निरस्ता गुणानां सत्त्वरजस्तमसां तत्कार्य्यपञ्चमहाभूतानाञ्च कलना सम्बन्धो यस्य तस्मिन् प्रमहसि सर्वोत्कृष्टतेजःस्वरूपे सूर्य्यचन्द्राग्न्याद्यवभासके करणानां सूर्य्यादिप्रकाश्यानां चक्षुरादीनां प्रवेशो योगः सम्बन्धो वा नास्तीत्यर्थः। तर्हीन्द्रियाणां प्रामाण्ये का गतिरित्यपेक्षायामाह— भ्रम इति। भ्रमे देहाद्यध्यासे सत्येव भ्रान्तिदशायामेषामिन्द्रियाणां गतिर्यथा स्वप्ने कल्पितवस्तुजातविषये तथा जागरेऽपि बोद्धव्यमित्यर्थः। अयं भावः—स्वप्नावस्थायां स्वाप्नदेहवत्, विषयवच्चेन्द्रियाणामपि प्रातिभासिकी सृष्टिर्न शक्यते वक्तुम्, प्रातिभासिकस्याऽज्ञातसत्त्वाभावात्। इन्द्रियाणाञ्चातीन्द्रियाणां स्वप्नेऽज्ञातसत्त्वस्य वाच्यत्वान्नापि व्यवहारिकाणामेवेन्द्रियाणां स्वस्वगोलकेभ्यो निष्क्रम्य स्वाप्नदेहमाश्रित्य स्वस्वविषयग्राहकत्वं वक्तुं शक्यते, स्वप्नसमये तेषां व्यापारराहित्यरूपोपरतिश्रवणात्। तथा सत्येव "अत्रायं पुरुषः स्वयंज्योतिः" (बृ० ४। ३। १४) इति श्रुतिः सङ्गच्छते। जागरे आदित्यादिज्योतिर्व्यतिकराच्चक्षुरादिवृत्तिसञ्चाराद्दुर्विवेचमात्मनः स्वयंज्योतिष्ट्वमिति स्वप्नावस्थायामधिकृत्य तत्रात्मनः स्वयंज्योतिष्ट्वं प्रतिपादयति। तत्रापि तथा सति दुर्विवेचं स्यात्। तथा च स्वप्ने यथा भ्रान्त्यैवेन्द्रियान्वयव्यतिरेकानुविधायि भानं तथा जाग्रत्यपि द्रष्टव्यमिति ॥४३॥

**यथा स्वप्ने भ्रान्त्येन्द्रियगणकृताऽपि व्यवहृति-**
**स्तथाजाग्रद्दृश्ये व्यवहृतिरियं भ्रान्तिकलिता।**
**अविद्याकार्य्याणां व्यवहृतिरिहाऽध्यस्तकरणैः**
**प्रमात्वे हेतुत्वं न च करणजन्यस्य भवति॥ ४४ ॥**

यथा स्वाप्नजगतीत्युक्तं विवृणोति—यथेति। यथा स्वप्नावस्थायां भ्रान्त्यैवेन्द्रियगणकृतापि व्यवहृतिरस्ति, "न तत्र रथा न रथयोगाः"

(बृ० ४।३।१०) इति श्रुतेः, मायामात्रन्तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वादिति न्यायाच्च स्वप्नसृष्टेर्मिथ्यात्वसिद्धिः। अतः प्रातीतिकस्वाप्नपदार्थविषयकव्यवहारो यथा भ्रान्त्यैवेन्द्रियान्वयव्यतिरेकानुविधायी तथा जाग्रद्दृश्ये जगत्यपि प्रातीतिकत्वाविशेषादियं व्यवहृतिर्व्यवहारोऽपि भ्रान्तिकल्पिततया तदनुरूपेन्द्रियगणान्वयव्यतिरेकानुविधायिनीत्यर्थः। प्रातीतिकत्वमेव दर्शयति—अविद्येति। जाग्रत्स्वप्नयोरवान्तरभेदे सत्यपि आविद्यकत्वाविशेषात् कल्पितैरेव कारणैरुभयत्र व्यवहारोऽस्तु न काचित् क्षतिरस्तीत्यर्थः। तस्मात्करणजन्यत्वं प्रपञ्चज्ञानस्य प्रमात्वे हेतुर्न भवतीति राद्धान्तः ॥ ४४ ॥

**अतो व्योमादीनां प्रकृतिविकृतीनां जनिमता-**
**मविद्यैवाध्यस्तात्मनि चितिकला कारणमलम् ।**
**विशेषोपादानं यदपि तदपि स्वप्नवदिदं**
**ह्यनिर्वाच्यं कार्य्यं जनयति तथा कारणमतः ॥४५॥**

फलितमाह—अत इति। यस्मात्प्रतीतिमात्रं सत्त्वं प्रपञ्चस्याऽतो व्योमादीनां कार्य्यकारणरूपाणामुत्पत्तिमतां चित्प्रतिबिम्बगर्भा आत्मन्यध्यस्ता अविद्यैव कारणमलमत्यन्तासम्भावितप्रदर्शने समर्था। कथं तर्हि मृद्घटादीनां लोके कार्य्यकारणभावमादाय घटाद्यर्थिनां मृदाद्युपादानमित्यपेक्षायामाह—विशेष इति। यदपि विशेषोपादानमविद्याकार्य्यमृदादीनामुपादानं घटादिनिष्पत्तये, तदपि स्वप्नवत् यथा स्वप्ने कल्पितकुलालेन कल्पितमृदाद्युपादाय कल्पित एव घटादी रच्यते तथाऽत्रापि बोद्धव्यमित्यर्थः। "योग्यं योग्येन सम्बद्ध्यते" इति न्यायेनानिर्वाच्यम्, हीति विद्वत्प्रसिद्धम्, कार्य्यं घटादिरूपम्, अतस्तथैव कार्य्यानुरूपमेव कारणमविद्याख्यं जनयत्युत्पादयतीत्यर्थः ॥ ४५ ॥

**ततः शुद्धाद्वैतात्पृथगखिलमाविद्यकमिदं**
**यतो ज्ञानज्ञेयात्मकजगति विभ्रान्तिनिविडे ।**
**प्रतीतेः सत्त्वं नो पृथगिति विवेकेन विदितं**
**जगन्मिथ्या सत्यं सुखनिधि परब्रह्म तदिति ॥४६॥**

ततः किमित्यत आह—तत इति। शुद्धमविद्यातत्कार्य्यासंस्पृष्टं यदद्वैतं वस्तु ततः पृथक् तस्मिन्नध्यस्तमखिलमाविद्यकमेवेदं जगत्कुतो यतो ज्ञानज्ञेयस्वरूपे जगति विभ्रान्तिनिविडे भ्रममात्रैकशरीरे प्रतीतेर्विभ्रमरूपायाः पृथग्विलक्षणं सत्त्वं नास्तीति विवेकेन विदितं सत् जगन्मिथ्या स्वाधिष्ठानवृत्तित्रैकालिकाभावप्रतियोगितया अत्यन्ततुच्छमिति फलितम्। तदधिष्ठानं परब्रह्म तेनासंस्पृष्टतया सुखनिधिरूपमेवापरिच्छिन्नमिति सिद्धमित्यर्थः ॥ ४६ ॥

**अविद्यायोनित्वं वदसि जगतस्त्वं कथमहो**
**न चैकस्माद्धेतोर्बहुविधमिदं कार्य्यमुचितम् ।**
**अदृष्टेशादिभ्यो जगदिदमुदेतीति यदि भोः**
**किमर्थं मिथ्येयं जडवपुरविद्याऽभ्युपगता ॥ ४७ ॥**

प्रपञ्चस्याऽऽविद्यकत्वमसहमानः शङ्कते—अविद्यायोनित्वमिति। अहो आश्चर्यमेतत्, यद्विचित्ररचनामनुभूयापि जगतोऽविद्याकार्य्यत्वं वदसि। नह्येकस्मादविचित्रादविद्याख्यात् कारणाद्बहुविधं विचित्रमिदं कार्य्यं भवितुं योग्यम्। भो वेदान्तिन्! यद्यदृष्टेश्वरादिभ्यस्तदिदं विचित्रं जगदुदेतीति स्वीकरोषि, तर्हि किमर्थं मिथ्येयं जडवपुश्चाऽविद्या अजागलस्तनायमाना स्वीकृतेति। वदेति शेषः। नहि प्रामाणिकैराग्रहेण वृथा किञ्चिदभ्युपगम्यते। अन्यथा प्रामाणिकत्वमेव भज्येतेति भावः ॥४७॥

इह ब्रूमः कार्य्यानुगुणमुचितं कारणमिदं
न कार्य्यं सत्यं स्याद् व्यभिचरति दिक्कालत इदम् ।
न चासत्यं भाति व्यवहृतिदशायां समभितोऽ-
प्यनिर्वाच्यं कार्य्यं तदनुगुणमज्ञानमुचितम् ॥ ४८ ॥

समाधानं प्रतिजानीते—इहेति । अस्मिन् पूर्वपक्षे प्राप्ते सिद्धान्तं ब्रूमः । अविद्यायाः प्रपञ्चं प्रति कारणत्वं कथं सिद्ध्यतीत्यपेक्षायां वक्तव्यमाह—कार्य्येति । कार्य्यस्याऽनिर्वाच्यस्याऽनुगुणमेव कारणमिदमविद्याख्यम्, कार्य्यं न तावदात्मवत्सत्यम्, यत इदं दिक्कालतो देशकालादिपरिच्छेदेन व्यभिचरति । न चाऽसत्यं शशशृङ्गादिवत्तुच्छम्, यतो व्यवहारदशायामर्थक्रियासमर्थं भाति । न चोभयात्मकम्, विरोधात् । इतः कार्य्यं जगदनिर्वाच्यम्, तदनुगुणं कारणमप्यनिर्वाच्यमज्ञानमेवोचितमित्यर्थः ॥ ४८ ॥

श्रुतीनां तात्पर्य्यादपि सुखचिदद्वैतविषये
न सत्यं कार्य्यं स्याज्जगदिदमविद्यादिरचितम् ।
न जायेताऽसत्यं क्वचिदपि विषाणं नृशशयोः
स्वसत्तासम्बन्धो जनिरपि कथं सत्त्वविरहे ॥ ४९ ॥

न केवलकार्य्यानुगुणत्वादेवाऽज्ञानं कारणत्वेन कल्प्यते, अपि तु श्रुतिप्रामाण्यान्यथानुपपत्तेरपीत्याह—श्रुतीनामिति । सुखात्मनि चिदद्वैते वस्तुनि विषये सर्वासां श्रुतीनां तात्पर्य्यादपि न सत्यं कार्य्यं जगत्, तस्य सत्यत्वे कथमद्वैतश्रुतीनां प्रामाण्यं स्यात्? तत्तस्माच्छ्रुतिप्रामाण्यान्यथानुपपत्तेरपि जगदिदमविद्यातत्कार्य्यकामादिभिर्विचित्रं ब्रह्मणि कल्पितमित्यर्थः । सर्वथा तुच्छत्वमपि नास्ति, कार्य्यत्वव्याघातादित्याह—नेति । असत्यमलीकञ्चेत्कार्य्यं जगत्, न जायेत ।

नहि क्वचिदपि देशे काले वा नरशशयोर्विषाणं शृङ्गं जायते, सम्भवति, दृष्टं वेति। स्वसत्तासम्बन्धो हि जनिः सर्वथा सत्त्वविरहे कथं स्यात् ? नहि अलीकस्य स्वकारणसम्बन्धनिरूपकत्वं स्वसत्तासमवायाधारत्वं वा जन्मलक्षणं सङ्गच्छते। तस्माज्जनिमत्वात् कार्य्यं जगदलीकमपि वक्तुं न शक्यमित्यर्थः ॥ ४९ ॥

**त्रिकालाबाध्यं यत्तदमृतमिदं तर्हि न कदा**
**जगज्जायेतेह क्वचिदपि न सत्तादिविरहः।**
**न हेतोः साफल्यं तत इदमनिर्वाच्यमुचितं**
**जगज्जन्यत्वं तद् गमयति च मायात्वमनृतम् ॥५०॥**

तर्ह्यस्तु सत्यमेवेदं जगत्, नेत्याह—त्रिकालाबाध्यमिति। यत्सत्यं कालत्रयेऽप्यबाध्यम्, तदमृतमविनाशि, यथाऽऽत्मतत्त्वम्; तथेदं जगच्चेत्स्यात्; तर्हि न कदाचिदपि जायेत, यत इह सद्वस्तुविषये सत्तादिविरहो न क्वचिदपि देशेकाले वा सम्भवति। नहि सत्यस्य कदापि सत्तावियोगोऽन्यथा सत्यत्वव्याघातापत्तिः स्यात्। न वा जगतः सत्यत्वपक्षे हेतोः कारणस्य तद्व्यापारस्य वा साफल्यम्। तस्मात्सदसद्भ्यां निर्वक्तुमशक्यत्वाज्जगतो जन्यत्वमेव। तदुक्तलक्षणं स्वाधिष्ठाननिष्ठात्यन्ताभावप्रतियोगित्वं मायात्वं मायाकार्य्यत्वादनृतमनिर्वाच्यरूपत्वमवगमयतीत्यर्थः। तदुक्तं—

"यथा सतो जनिर्नैवमसतोऽपि जनिर्न च।
जन्यत्वमेव जन्यस्य मायिकत्वसमर्पकम् ॥" इति ॥ ५० ॥

**न सत्यस्यासत्ये जगति किल हेतुत्वमुचितं**
**विनाऽविद्यां रज्जुर्जनयति न सर्पादिकलनाम्।**

**अतो हेतुः कार्य्यानुगुणमिदमज्ञानमुचितं**
**स्वशक्त्यानन्त्यात्तत्क्षमतममनेकं रचयितुम् ॥ ५१ ॥**

ननु ब्रह्मैव जगतः कारणं किन्न स्यात् ? सन्ति हि ब्रह्मकार्य्यत्ववादिन्यः श्रुतयः स्मृतयश्च सहस्रशः ; तथा च किमनाद्यविद्याकल्पनयेत्याशङ्क्याह—नेति । किन्त्वेति प्रसिद्धमेतत्, यतः सजातीययोरेव कार्य्यकारणभाव इति ; विनाऽनाद्यनिर्वाच्यामविद्यां सत्यस्य ब्रह्मणोऽसत्येऽनिर्वाच्ये जगति हेतुत्वं श्रुत्युक्तमपि कारणत्वं नोचितम्—न सङ्गच्छते । नहि रज्जुः स्वावच्छिन्नचैतन्यनिष्ठामविद्यामन्तरेण सर्पादिकल्पनां जनयति । अतो वेदान्तानुकूलतर्केणापि कार्य्यानुगुणमज्ञानमिदं कारणत्वेनोचितम् । न चाऽज्ञानमेकं कथं विचित्रकार्य्यजनकं स्यादिति वाच्यम्, तस्यैकत्वेऽपि "इन्द्रो मायाभिः पुरुरूप ईयते" (बृ० २।५।१९) इति श्रुत्या स्वशक्त्यानन्त्यादज्ञानशक्तीनामानन्त्यात्तदज्ञानमेकमेव जगदनेकविधं विचित्ररचनारूपं रचयितुं स्वाधिष्ठाने कल्पयितुं क्षमतममत्यन्तसमर्थं "किमज्ञानस्य दुष्करम्" इति न्यायेनेत्यर्थः । श्रुतीनां तन्मूलकस्मृतीनाञ्चाऽद्वितीये ब्रह्मणि तात्पर्यान्न कार्य्यकारणभावे । अतोऽद्वये वस्तुनि सम्भावनावताराय ब्रह्मणः कारणत्वोक्तिरित्युक्तमधस्तादित्यलम् ॥ ५१ ॥

**अतोऽविद्याध्यस्तं जगदिदमनिर्वाच्यमनृते**
**न चादृष्टादीनामनृतजडमज्ञानकमृते ।**
**क्वचित्स्वातन्त्र्यं तत्कृतजगति तद्द्वारत इमे**
**विकारा अध्यस्ता ह्यविकृतसुखेऽज्ञानशबले ॥ ५२ ॥**

फलितमाह—अत इति । न चादृष्टादीनामनिर्वाच्याज्ञानमन्तरेण क्वचित्कार्य्ये स्वातन्त्र्यम्, किन्तु तत्कृतेऽज्ञानपरिकल्पिते जगति तदज्ञान-

द्वारैवेमेऽहङ्कारादयो विकारा जगद्वैचित्र्यनिर्वाहका हीति श्रुतिस्मृति-विद्वज्जनानुभवप्रसिद्धेऽविकृतसुखे निर्विकारकूटस्थब्रह्मानन्दस्वभावेऽज्ञानशबले मायोपहिते चैतन्येऽध्यस्ताः परिकल्पिताः, न स्वतन्त्रा इत्यर्थः ॥ ५२ ॥

**अविद्याकार्य्यत्वादखिलमिदमाभासमनृतं**
**प्रतीतेः सत्त्वं नो पृथगपि भजेत्स्वाप्निकमिव ।**
**नहि स्वप्ने सत्त्वं पृथगनृतमाभासनमृते**
**चिदध्यस्ताश्वादेर्भवति नयसिद्धं श्रुतिमतम् ॥ ५३ ॥**

उक्तं ज्ञातसत्त्वं जगतो निगमयति—अविद्येति । अखिलमिदं जगदाभासरूपं शुक्तिरजताभासमिवाऽविद्याकार्य्यत्वाद्धेतोरनिर्वाच्यमिदं प्रतीतेः पृथक्सत्त्वं न भजेत् स्वाप्निकप्रपञ्चजालमिव । स्वप्ने आभासनं प्रतीतिस्तदृतेऽनृतमनिर्वाच्यमाभासनमन्तरेण चिति द्रष्टरि अध्यस्ताश्वादेः पृथक्सत्त्वं नहि भवति । तस्मात्प्रपञ्चस्यानिर्वाच्यस्य ज्ञातसत्त्वं श्रुति-न्यायसिद्धमित्यर्थः ॥ ५३ ॥

**जगत्कार्य्यं हेतुः सदचलमिति श्रौतवचनं**
**प्रधानादेर्हेतोर्जगति च निरासाय भवति ।**
**न कार्य्यं नो हेतुः परपदमिति श्रौतवचसा-**
**मखण्डे तात्पर्य्यं यत इति मतं वेदविदुषाम् ॥ ५४ ॥**

ब्रह्मकारणत्ववादिनीनां श्रुतीनां तात्पर्य्यमाह—जगदिति । जग-त्कार्य्यं भवति, हेतुः कारणं सद्रूपं ब्रह्म कूटस्थम्, इति श्रौतवचनं जगति पर-परिकल्पितप्रधानपरमाण्वादेः कारणत्वस्य निरासाय भवति । वस्तु-तस्तु परपदं परमात्मतत्त्वमवाङ्मनसगोचरं "तदेतद् ब्रह्मापूर्वमनपरम्"

( बृ० २ । ५ । १९ ) इति श्रुतिसिद्धं न कार्य्यं कस्यचित्, न वा हेतुः तदुक्तम्— "अपूर्वानपरं ब्रह्म तस्य कार्य्यं न कारणम् ।
अधिष्ठानत्वमात्रेण कारणं ब्रह्म गीयते" ॥

इत्यतो हेतोः श्रौतवचसां "यतो वा" इत्यादीनां सृष्टिश्रुतीनामखण्डे ब्रह्मैक्ये तात्पर्य्यं वेदविदुषां व्यासादीनामिति मतं निश्चितमिति योजना ॥ ५४ ॥

**अधिष्ठानाद्भिन्नं क्वचिदपि न चाध्यस्तमखिलं**
**ह्यधिष्ठानं ब्रह्माद्वयमजमविद्यादिशबलम् ।**
**अतो ज्ञानज्ञेयात्मकमखिलमद्वैतममृतं**
**परब्रह्मैवाऽस्तीत्यखिलनिगमान्तैकहृदयम् ॥ ५५ ॥**

विद्वन्मतमेव दर्शयति—अधिष्ठानादिति । क्वचिल्लोके वेदे वा देशे काले वा अखिलमध्यस्तं रज्जुसर्पादिवद्विश्वं स्वाधिष्ठानाद् वस्तुतो भिन्नं न भवति । ननु तर्हि यथायोग्यं मृद्घटादीनां रज्जुसर्पादीनामेवाधिष्ठानाधिष्ठेयभावः कुतो न स्यात् ? नेत्याह—हीति । यतो ब्रह्मैवाधिष्ठानम्, न मृदादि, न वा रज्ज्वादि, तेषां कल्पितत्वाविशेषात् । न च कल्पितस्य कल्पितमेव अधिष्ठानमस्त्विति वाच्यम्, शून्यवादापत्तेः । अज्ञातञ्चाधिष्ठानं वाच्यम्, अज्ञातत्वमज्ञानावृतत्वम् । तच्च स्वभानार्हे ब्रह्मण्येव पर्यवस्यति । तथा च सर्वत्राध्यासाधिष्ठानं ब्रह्मैव । तच्चाद्वैतवर्जितमजं जन्मादिविक्रियातीतमविद्याद्युपहितत्वेन रूपेणैवाखिलजगद्धेतुरित्यर्थः । यतोऽध्यस्तसत्ता अधिष्ठानसत्तानतिरिक्ता, अतो ज्ञानज्ञेयात्मकमखिलं विश्वं "सर्वं खल्विदं ब्रह्म" ( छा० ३ । १४ । १ ) "आत्मैवेदं सर्वम्" ( छा० ७ । २५ । २ ) "नारायण एवेदं सर्वम्" "वासुदेवः सर्वम्" (गी० ७ । १९) इति श्रुतिस्मृतिसिद्धं परब्रह्मैवास्तीति बाधायां सामानाधिकरण्यम्, अत एव "तदनन्यत्वमारम्भणशब्दा-

द्भ्यः" ( ब्र० सू० २ । १ । १४ ) इत्यत्र तस्मात्कारणरूपाद् ब्रह्मणः सकाशात्तस्य कार्य्यस्य प्रपञ्चस्यानन्यत्वं नाम भेदाभावो नत्वैक्यमिति भाष्ये भामत्याञ्च "नह्यभेदं प्रतिपादयामः किन्तु भेदं व्यासेधामः" इत्युक्तम् । तथा च ब्रह्मातिरिक्तसत्ताशून्यत्वमेव प्रपञ्चस्येति ब्रह्मसत्त्वैव प्रपञ्चसत्ता नान्येति समस्तवेदान्तरहस्यमित्यर्थः ॥ ५५ ॥

**अतस्तज्ज्ञा ज्ञानं परपदमजं शुद्धममृतं**
**प्रपश्यन्तो नान्यज्जगदपि हि पश्यन्ति कलितम् ।**
**अनात्मज्ञा भिन्नं सकलमिदमध्यस्तमपि चाऽ-**
**परिच्छिन्ने द्वैतं भ्रमवशत ईक्षन्त इतरे ॥ ५६ ॥**

विद्वदविद्वदनुभवयोर्भेदं दर्शयति—अत इति । यतो ब्रह्मसत्तातिरिक्त-सत्ताशून्यमिदं जगद्विचित्रमतस्तज्ज्ञास्तद्ब्रह्म स्वानुभवारूढं प्रत्यगभिन्नं जानन्तीति। तथा परपदम्, शुद्धं निरतिशयम्, ज्ञानं स्वप्रकाशम्, जन्मादि-विक्रियाशून्यम्, अमृतं नित्यमुक्तम्, प्रकर्षेणासन्दिग्धाविपर्य्यस्तं पश्यन्तः सन्तोऽन्यत्वेन पुरा कल्पितं जगदपि हि यतो बोधेन बाधितं तस्मान्न पश्यन्ति । अनात्मज्ञा देहात्मबुद्धयो भिन्नं नामरूपजात्यादिगुणै-र्विलक्षणं सकलमिदं कल्पितं द्वैतमपरिच्छिन्ने ब्रह्मणि भ्रमवशाद्वस्तु-सदित्येवमीक्षन्ते पश्यन्ति, इतरे—स्वयञ्च विलक्षणजात्याद्यभिमा-निनः सन्तः । अतो ज्ञानाज्ञानयोर्महदन्तरमित्यर्थः ॥ ५६ ॥

**यथा रज्जुर्भ्रान्त्या भुजगवपुषा भात्यविकृता**
**तथा भाति भ्रान्त्याऽविकृतमपि चिद्वस्तु जगता ।**
**न रज्जुः सर्पो वा न च जगदिदं ब्रह्म विमलं**
**विबुद्ध्वैवं धीरस्त्यजति जडबुद्धिं निजधिया॥५७॥**

अतो मुमुक्षुरनात्मज्ञदृष्टिमनादृत्य विद्वद्दृष्टिं समाश्रयेदित्याह—यथेति । यथा रज्जुरविकृता सती भ्रान्त्या भुजगाकारेण भाति, तथाऽविकृतं ब्रह्मापि चिद्वस्तु भ्रान्त्या जगदाकारेण । विचारदृष्ट्या न रज्जुः सर्पो भवति, न च विमलं ब्रह्म जगदिदं भवति । एवं धीरो मुमुक्षुर्विशेषेण बुद्ध्वा तत्त्वं साक्षात्कृत्य, निजधिया स्वरूपाकारवृत्त्या जडबुद्धिं देहाद्यात्मबुद्धिं त्यजतीत्यर्थः ॥ ५७ ॥

**तथा चाज्ञातेऽस्मिन् सुखघनपदे ब्रह्मणि परे**
**जगद्भानं सर्वा व्यवहृतिरपीहाऽस्तु च मृषा ।**
**न तेनासङ्गेऽस्मिन् क्षतिरपि मनागस्त्यविकृते**
**चिदानन्दे विष्णौ स्वत इह विमुक्ते श्रुतिमते ॥५८॥**

अनिर्वाच्याज्ञानपरिकल्पितविश्वं नाधिष्ठानं ब्रह्म स्पृशति, ततश्च नित्यशुद्धबुद्धमुक्तस्वभाव ब्रह्मैव कालत्रये वरीवर्तीति फलितमाह—तथा चेति । सुखैकरसे ब्रह्मणि परे मायाद्यतीते प्रत्यगभिन्ने अज्ञानोपहिते जगद्भानमस्तु, सर्वा व्यवहृतिरपि इहाधिष्ठानेऽनिर्वाच्याऽस्तु च । तेन जगत्प्रतिभासेनानिर्वचनीयव्यवहारेण वा अस्मिंश्चिदानन्दे ब्रह्मणि, विष्णौ व्यापके, असङ्गे वस्तुतो व्याप्यव्यापकभावासंस्पृष्टे, अत एवाविकृते सर्वविकारातीते, स्वतो विमुक्ते, श्रुतिसिद्धान्तरहस्ये, इह प्रत्यगभिन्ने मनागपीषदपि क्षतिरज्ञानतत्कार्य्यसम्पर्करूपहानिर्नास्ति, स्वरूपमहिम्नैवाज्ञानतत्कार्य्यस्य बाधितत्वादित्यर्थः ॥ ५८ ॥

**अतो ब्रह्मज्ञानाच्छ्रवणमननध्यानजनिता-**
**दविद्याध्यस्ता या जनिमृतिमयी संसृतिरियम् ।**
**विनश्येत्तद्धेतौ प्रविलयमिते ज्ञान उदिते**
**प्रतीचि ब्रह्मैक्ये जयति निजरूपे स्थित इति॥५९॥**

अज्ञानं तत्कार्य्यं जगद्भ्रमश्च तत्त्वज्ञानं स्वोदयसमसमयं बाधते, अतो महता प्रयत्नेन तत्त्वज्ञानमेव सम्पाद्यमित्याह—अत इति। यतोऽज्ञानकृतेयं संसृतिरतः श्रवणमनननिदिध्यासनैरुत्पादिताद्ब्रह्मज्ञानात्तस्याः संसृतेर्हेतुभूते उदिते उक्तलक्षणेऽज्ञाने प्रकर्षेणात्यन्ताभावप्रतियोगितया विलयं बाधमिते प्राप्ते सति अविद्ययाऽनाद्यनिर्वाच्याऽज्ञानेनाऽध्यस्ता सा सर्वलोकबुद्धिस्था इयं प्रत्यक्षादिभिरनुभूयमाना जनिमृतिमयी संसृतिर्विनश्येद्विनश्यतीति सम्बन्धः। तदा ब्रह्मवित् प्रत्यगभिन्ने ब्रह्मैक्ये निजरूपे स्वात्मत्वेनावबुद्धे स्थितः सन् जयति सर्वोपरि वरीवर्त्ति, कृतकृत्यतया तिष्ठति। इतिशब्दः शास्त्रार्थपरिसमाप्तौ। इत्येव सर्ववेदान्तप्रमेयमित्यर्थः॥ ५९॥

**अनृतजडविषादाकारमेतत्समस्तं**
**जगदपि लयमेति प्रत्यगात्मैक्यदृष्ट्या।**
**दृगपि भवति सा यद्भक्तिलेशेन सम्यक्**
**तमहमखिलवन्द्यं कृष्णमेवावलम्बे॥ ६०॥**

इति प्रत्यक्तत्त्वचिन्तामणौ चतुर्थं प्रकरणं सम्पूर्णम्॥ ४॥

इयं ब्रह्मविद्या भगवद्भक्त्यधीना, "यस्य देवे परा भक्तिः" (श्वे० ६। २३), "यमेष वृणुते तेन लभ्यः" (मु० ३। २। ३) इत्यादिश्रुतेः। अतः सर्वोपायेन भगवद्भक्तिरेव मुमुक्षुभिरादर्त्तव्या, न तामन्तरेण संसृतेर्निस्तार इत्याशयेन प्रकरणार्थं परिसमाप्य, स्वकृतिञ्च भगवति समर्पयन्भवन्तं शरण्यत्वेनाऽऽश्रयति—अनृतेति। एतत्प्रत्यक्षादिभिरनुभूयमानं समस्तं जगदपिशब्दात्तन्मूलमज्ञानं तत्कार्य्यमनृतजडविषादाकारमनर्थपुञ्जात्मकं यया प्रत्यगभिन्नब्रह्मसाक्षात्काररूपदृष्ट्या लयं बाधमेति प्राप्नोति, सा परब्रह्मात्मैक्यसाक्षात्काररूपादृष्टिरपि

यस्य भक्तिलेशेन रत्यङ्कुरोत्पत्त्या सम्यग् भवति समुत्पद्यते; तमहं बराकोऽपि सकलजगद्वन्द्यं कृष्णं भक्तानामनन्यशरणानां संसारक्लेशहरं भगवन्तं वासुदेवमेवावलम्ब्य शरणं व्रजामीति योजना ॥ ६० ॥

दृश्यातिगं परमनन्तमशेषहेतुं
संसारवार्द्धिपरपारमलक्ष्यमूर्तिम् ।
क्रीडन्तमद्भुतपदं व्रजराजसूनुं
वृन्दावने व्रजवधूभिरहं प्रपद्ये ॥ १ ॥

इति श्रीमन्मुकुन्दपदारविन्दमकरन्दाभिलाषिसदानन्द-विद्वत्कृतायां प्रत्यक्तत्त्वचिन्तामण्याख्यायां स्वप्रभाभिधायां प्रत्यगात्मनि संसृतिनिराकरणमयूखाभिधं चतुर्थं प्रकरणं समाप्तिमगमत ॥ ४ ॥

---

# अथ पञ्चमं प्रकरणम्

अद्वैतसच्चितिसुखं श्रुतिमौलिगम्यं
विध्वस्तविभ्रममशेषजडावभासम् ।
यत्पादभक्तिरसिकैरवबुद्ध्यतेऽज्ञ-
स्तं श्रीमुकुन्दमतिभावनयाऽऽश्रयेऽहम् ॥१॥

मात्रादिविश्वमखिलं जडदुःखमिथ्या-
रूपं भ्रमोत्थमपि चेष्टत आविरिञ्चयम् ।
यत्सत्तया तममृतं निगमैकवेद्यं
श्रीमन्मुकुन्दमनिशं शरणं प्रपद्ये ॥ १ ॥

चतुर्थप्रकरणान्ते "अनृतजडविषादाकारमेतत्समस्तं जगदपि लयमेति प्रत्यगात्मैक्यदृष्ट्या" इत्युक्तं तत्राऽनर्थात्मकं जगत् त्रिविधप्रमात्रादिरूपेण स्वस्वरूपप्रत्यगात्मदृष्टिप्रतिबन्धकं प्रत्यगात्मविवेकेन तद्दृष्ट्या तदपगमे संसारानर्थोपशम इत्येतदर्थविचारप्रधानं प्रकरणमारभमाणः स्वेष्टदेवतानुसन्धानात्मकं मङ्गलमाचरन्नर्थादभिधेयप्रयोजने दर्शयति—अद्वैतेति । तं श्रीमुकुन्दमहमतिभावनया भक्त्युद्रेकेण भगवदाकारवृत्त्या आश्रये—तदतिरिक्तभावनामनादृत्य तमेव फलभूतमनुसन्दधे इत्यन्वयः। तं कमित्याकाङ्क्षायामाह—यत्पादेति । यस्य भगवतो मुकुन्दस्य पादाम्भोजानुरागाक्रान्तचित्तैः पुरुषधौरेयैरज्ञोऽनायासेनाऽद्वैतं विषयविषयिभावरूपद्वैतशून्यं सदबाध्यं चितिरितरनिरपेक्षप्रकाशस्वभावतया ज्ञप्त( प्ति ? )रूपं यत्सुखं ब्रह्मानन्दशब्दवाच्यं तदवबुध्यते साक्षात्क्रियते—इति मुख्यप्रयोजनोक्तिः । तत्केन प्रमाणेनावबुध्यत इत्यत आह—श्रुतिमौलिगम्यमिति । वेदान्तप्रमाणैकवेद्यमित्यर्थः । दुःखाभावोऽपि

प्रयोजनमित्याह—विध्वस्तविभ्रममिति । विध्वस्तो मूलबाधेन बाधितो विभ्रमः कर्त्तृत्वभोक्तृत्वादिरूपोऽनर्थो यस्मिन्ननर्थनिवृत्त्युपलक्षितं सच्चिदद्वयानन्दात्मकं ब्रह्मेति फलितम् । लौकिकसुखं तत्साधनञ्च स्रगादिरूपं ततो विलक्षणं स्यात्, तेन तस्य परिच्छेदापत्तिश्च स्यादित्याशङ्क्याह—अशेषजडावभासमिति । अशेषजडं समस्तब्रह्माण्डान्तर्वर्ति सुखसाधनत्वेनाभिमतं स्रक्चन्दनरम्भागान्धर्वामृतपानादिरूपं तज्जन्यसुखाकारान्तःकरणपरिणामरूपञ्च तस्यावभासः स्फूर्तिस्तद्रूपम् । तथा च सच्चिदद्वयानन्तात्मकब्रह्मसुखमन्तरेण संसारे स्वातन्त्र्येण सुखगन्धोऽपि नास्तीत्यपरिच्छिन्नसुखं ब्रह्मैव तत्र तत्र तदभिव्यञ्जकतारतम्येन प्रतीयमानतारतम्यं लौकिकसुखत्वेन व्यपदिश्यते, न ततो विलक्षणं सुखं नामास्ति । "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति श्रुतेः" ( बृ० ४ । ३ । ३२ ) इति भावः ॥ १ ॥

**स्वाज्ञानकल्पितमखण्डसुखावबोधे**
**देहेन्द्रियादिजडजातमनात्मभूतम् ।**
**तत्रात्मतामतिरियं भवमृत्युहेतु-**
**रध्यास आत्मनि तथा जडधर्म्मबुद्धिः ॥ २ ॥**

एवमनर्थनिवृत्त्युपलक्षितं सच्चिदद्वयात्मकं सुखं ब्रह्मैव ज्ञातं सत्प्रयोजनम्, अज्ञातं सद्विषय इत्युक्तम् । तत्राऽज्ञानमेवाऽऽत्मानात्मनोरन्योन्याध्यासद्वारा सकलानर्थहेतुरिति तन्निवृत्तये सर्ववेदान्तगिरां प्रवृत्तिः, ततश्चादौ तत्त्वज्ञाननिवर्हणीयाध्यासस्वरूपं दर्शयति—स्वाज्ञानेति । अखण्डं त्रिविधपरिच्छेदशून्यं यत्सुखमवबोधरूपं ज्ञानघनं तत्र स्वात्माज्ञानेनारोपितं देहेन्द्रियादिजडजातं घटादिवदनात्मभूतम् । तत्र देहादावनात्मनि आत्मत्वमतिरियं सर्वलोकप्रसिद्धा । भवमृत्यू जन्ममरणे तद्धेतुरध्यासोऽतस्मिंस्तद्बुद्धिरूपः। तथात्मनि जडा देहादयस्तद्धर्मांश्च

जाड्यादयस्तद्धर्मास्तद्बुद्धिरध्यासः। तथाचात्मानात्मनोस्तद्धर्माणामितरेतराव-भासलक्षणोऽध्यासः सर्वानर्थहेतुरित्यर्थः॥ २॥

**सेयं परस्परमतिर्बहुधात्मविद्भिः**
**प्रोक्ता नयैर्निरसनाय भवाब्धिहेतुः।**
**नैनामृते व्यवहृतिः परमात्मतत्त्वे**
**काचित्प्रसिद्ध्यति मनो वचनाद्यतीते॥ ३॥**

ननु किमर्थमप्रामाणिकोऽयमध्यासः कल्प्यते, तं विनैव सर्वव्यवहारसिद्धिः किन्न स्यात्? इत्याशङ्क्य तस्याप्रमाणिकत्वनिरासेन सर्वव्यवहारानास्पदे सर्वव्यवहारसाधकत्वं प्रदर्शयंस्तं विना व्यवहारानुपपत्तिरित्याह—सेयमिति। सेयं परस्परमतिरन्योन्याध्यास आत्मविद्भिर्भगवत्पादप्रभृतिभिस्तत्त्वज्ञैरत्यन्तप्रामाणिकैर्बहुधा लक्षणसम्भावनाप्रमाणप्रदर्शनप्रकारैः प्रोक्ता प्रकर्षेण सर्ववादिमते यथायथमावश्यकस्वीकार्य्यत्वेन रूपेणोक्ता दर्शिता। तैरपि किमर्थं निरर्थकाध्यासवर्णनं कृतमित्यत आह—नयैर्निरसनायेति। व्यासोक्तन्यायानुसारिणोभिर्युक्तिभिर्निरासाय तस्य वर्णनं कृतमित्यर्थः। ननु किमर्थं तन्निरासोऽपीत्यत आह—भवाब्धिहेतुरिति। संसारसिन्धौ पातहेतुत्वात्सकलानर्थबीजभूतः स्वयं साक्षादनर्थश्चायमध्यासः सर्वथा निरसनीय एवेत्यर्थः। एनां सर्वलोकप्रसिद्धां परस्पराध्यासात्मिकां मतिम्—अहम, इदम्, ममेदम्—इति लक्षणामृते विना मनोवचनाद्यतीते परमात्मतत्त्वे सर्वव्यवहारानास्पदे प्रत्यगभिन्ने ब्रह्मणि काचिदपि व्यवहृतिः कश्चनापि लौकिको वैदिको वा व्यवहारो नैव प्रसिद्ध्यति—कथञ्चिदपि नैव सिद्ध्यति, प्रथते वेत्यर्थः। तथा च सर्वसंसारदोषपुञ्जाकरोऽयमध्यासः, तस्य निरासे सर्वथा मुमुक्षुभिर्यतितव्यमिति भावः॥ ३॥

**स्वज्योतिरात्मनि समानविशेषभाव-**
**शून्येऽप्यनादिविपरीतधियोऽवभासः।**
**स्वाविद्ययाऽहमिति संसृतिहेतुभूतोऽ-**
**ध्यासाभिधो व्यवहृतावभाति सद्वत् ॥४॥**

ननु मनोवचनाद्यतीते सामान्यविशेषभावशून्ये प्रत्यगात्मतत्त्वे कथमध्यासः? लोके सामान्यतो ज्ञाते विशेषतोऽज्ञाते शुक्त्यादौ रजताद्यध्यासो दृष्टः। आत्मनि तु तथा न सम्भवति। यत्रापरोक्षाध्यासाधिष्ठानत्वम्, तत्रेन्द्रियसम्प्रयुक्तत्वं विषयत्वञ्चेति व्याप्तिः। तत्र व्यापकाभावादात्मनोऽधिष्ठानत्वं न सम्भवतीत्याशङ्क्याह—स्वज्योतिरिति। स्वप्रकाशरूपे सामान्यविशेषभावशून्येऽपि प्रत्यगात्मनि स्वाविद्ययाऽहमित्यनादिविपरीतधियोऽवभासः सत्यानृतमिथुनीकरणरूपोऽध्यासाभिधः संसृतेर्हेतुभूतो व्यवहारदशायां सद्वदाभाति—वस्तुतो मिथ्या सन्नपि सद्वत्प्रतीयते इति योजना। अयमर्थः—"सत्यं प्रत्यगात्मा स्वयंप्रकाशत्वादिविषयोऽनंशश्च, तथाप्यनिर्वचनीयानाद्यविद्यापरिकल्पितबुद्धिमनःसूक्ष्मस्थूलशरीरेन्द्रियावच्छेदेनानवच्छिन्नोऽपि वस्तुतोऽवच्छिन्न इव, अभिन्नोऽपि भिन्न इव, अकर्त्ताऽपि कर्त्तेव, अभोक्ताऽपि भोक्तेव, अविषयोऽप्यस्मत्प्रत्ययविषय इव जीवभावमापन्नोऽवभासते" (भामती अ० १।१।१)। अतः स्वप्रकाशस्य स्वतोऽविषयत्वेऽप्यौपाधिकरूपेण विषयत्वान्न काचिदनुपपत्तिरिति। ननु स्वतोऽविषयत्वमौपाधिकरूपेण विषयत्वमिति किमर्थं व्यवस्थाप्यते? स्वत एव शुक्त्यादिवद् ग्रहणाग्रहणे किन्न स्याताम्? इति चेत्, न; दृष्टान्तवैषम्यात्। नहि शुक्त्यादिवच्चिदेकरसस्याऽऽत्मनश्चिदंशे गृहीतेऽगृहीतं किञ्चिदस्ति। तथाचाहुरत्रभवन्तो वाचस्पतिमिश्राः—"न खल्वानन्दनित्यविभुत्वादयोऽस्य चिद्रूपाद्वस्तुतो भिद्यन्ते, येन तद्ग्रहेऽपि न गृह्येरन्; गृहीता एव तु कल्पितेन भेदेन न विवेचिता इत्य-

गृहीता भान्तीति" ( भामती ब्र० १।१।१ )। "यथा खल्वभिज्ञायां भासमानमपि देवदत्तैक्यं तत्तेदन्तोपाधिद्वारकसामानाधिकरण्यात्परामर्शाद्विविक्तं नोल्लिख्यते। एवं चिद्रूपभानेऽपि दुःखप्रत्यनीकत्वादिरूपेणापरामृष्टा आनन्दादयोऽप्यगृहीता इव भान्ति" इति कल्पतरौ ( कल्पत० ब्र० १।१।१ )। "ननु देवदत्तोऽयमित्यभिज्ञायामिदमर्थे यद्देवदत्तैक्यं भासते, तद्विविक्तमुल्लिख्यते एव। यत्तु तत्र तत्ताविशिष्टैक्यं नोल्लिख्यते, तन्न भासत एव। अतो भासमानस्य विविक्तोल्लेखाभावे नेदमुदाहरणमिति चेत्, न; एकस्मिन्निदमर्थे ऐक्यद्वयाभावेन भासमाने एव देवदत्तैक्ये तत्तोपाधिपरामर्शाभावेन तत्तेदन्ताविशिष्टाभेदरूपतयोल्लेखाभावरूपस्य विविक्तानुल्लेखस्य विवक्षितस्य सत्वात्। तथा चाऽध्यस्तापकर्षयुक्ततया गृहीतोऽप्यानन्दो मेघावरणकृतापकर्षसौरालोकवदगृहीत इव भातीति तात्पर्य्यम्" इति परिमले ( परि० ब्र० १।१।१ ) तथा चाविषयेऽपि सामान्यादिधर्म्मविनिर्मुक्तेऽपि स्वप्रकाशत्वेन भासमानतया प्रत्यगात्मन्यनाद्यविद्ययाऽध्यासः सिद्ध इति न काचिदनुपपत्तिः। तथा च भाष्यम्—"न तावदयमेकान्तेनाविषयोऽस्मत्प्रत्ययविषयत्वादपरोक्षत्वाच्च प्रत्यगात्मप्रसिद्धेः। न चायमस्ति नियमः पुरोऽवस्थितविषये विषयान्तरमध्यसितव्यमिति। अप्रत्यक्षेपि ह्याकाशे बालास्तलमलिनताद्यध्यस्यन्ति एवमविरुद्धः प्रत्यगात्मन्यप्यनात्माध्यासः" ( ब्र० सू० भा० १।१।१ ) इति ॥ ४॥

**अध्यासोऽहं ममेत्येवं सर्वानर्थाश्रयो नृणाम्।**
**तत्राऽहमिति चिद्व्योम्नि निर्विकल्पे भ्रमो महान् ॥५॥**

तदेवं चैतन्यैकरसोऽनिदंरूपोऽप्यात्मा स्वात्मनि अध्यस्तेऽहङ्कारे प्रतिबिम्बितोऽहमित्येतस्मिन्प्रत्ययेऽध्यस्यमानाहङ्कारसम्भिन्नतया भासमानोऽहं प्रत्ययविषयत्वेनोपचर्यत इति सम्भवत्येव। तत्राध्यासोऽ-

धिष्ठानारोप्ययोरेकस्मिञ्ज्ञाने भासमानत्वमात्रमध्यासव्यापकं तच्चात्राप्यस्त्येवेत्यभिप्रेत्याह—अध्यास इति । अध्यासोऽहमिति ममेत्येवञ्च पुंसां सर्वानर्थाश्रयत्वेन दृश्यत एवेत्यविवादम् । तत्र तादात्म्यसंसर्गाध्यासयोर्मध्ये निर्विकल्पेऽहं ममेत्यादिकल्पशून्येऽपि प्रतीचि 'अहम्', इति महान् भ्रमः—सर्वाध्यासमूलत्वेनात्यन्तानर्थरूप इत्यर्थः ॥ ५ ॥

**नन्वेवं भासमानेऽस्मिन्निर्विकल्पतया विभौ ।**
**स विकल्पाहमोऽध्यासश्चैतन्येनैव सम्भवेत् ॥ ६ ॥**

अध्यासमाक्षिपति—नन्विति । न तावन्निर्विकल्पतया भासमानेऽस्मिंश्चैतन्येऽपरिच्छिन्ने सविकल्पस्याहङ्कारस्याध्यासः सम्भवति, तथाविधस्याऽदृष्टचरत्वात् । लोके हि सविकल्पके शुक्त्यादौ सविकल्पस्य रजतादेरध्यासो दृष्टः, न तु निर्विकल्पे वस्तुनि कुत्राप्यध्यासो दृष्टचर इति भावः ॥ ६ ॥

**न मातृत्वादिसंयुक्ततया भानेऽपि सम्भवः ।**
**मातृत्वादेरहङ्कारपूर्वकत्वादहङ्कृतेः ॥ ७ ॥**

ननूक्तरीत्या प्रमातृत्वादिना सविकल्पे वस्तुन्यध्यासो भविष्यतीति नेत्याह—नेति । प्रमातृत्वादिविकल्पविशिष्टतयाऽवभासमानेऽपि प्रत्यगात्मनि नाहङ्कृतेरध्यासः सम्भवति, प्रमातृत्वादेरहङ्कारपूर्वकत्वादिति योजना ॥ ७ ॥

**न वा पूर्वाहमुत्थेन प्रमातृत्वादिहेतुना ।**
**चितः स्यात्सविकल्पत्वं संस्कारेणाऽप्यनादिना ॥ ८ ॥**

ननु पूर्वपूर्वप्रमातृत्वाद्यध्यासस्योत्तरोत्तरमपि प्रमातृत्वाद्यध्यासं प्रति संस्कारद्वारा हेतुत्वं किन्न स्यात् ? अध्यासप्रवाहस्यानादित्वा-

दिति शङ्कामनूद्य दूषयति—नेति। न वा पूर्वाहमः सकाशात् समुत्थेन पूर्वाहङ्कारकृतप्रमातृत्वादिसंस्कारेणोत्तरोत्तरप्रमातृत्वाद्यैकहेतुनाऽनादिप्रवाहात्मकेन चैतन्यस्य सविकल्पत्वं स्यात्—इत्यपि साधुमतमित्यर्थः ॥ ८ ॥

**न प्रमातृप्रमाणादिव्यवहारोऽपि युक्तिभिः।**
**उपपादयितुं शक्यः समस्तैरपि वादिभिः ॥ ९ ॥**

प्रमातृप्रमाणादिव्यवहारस्य सर्वेणापि वादिना दुरुपपादत्वादपि नाऽध्याससम्भव इत्याह—नेति। स्पष्टम् ॥ ९ ॥

**वेदान्तिसांख्ययोः पक्षे प्रमाता किमहङ्कृतिः।**
**उतात्मा तत्र नाद्यः स्याज्जडत्वादप्यहङ्कृतेः ॥१०॥**

दुरुपपादत्वमुपपादयति—वेदान्तीति। वेदान्तिसांख्ययोर्मते किमहङ्कारः प्रमाता? उत आत्मा? नाद्यः, तस्य जडत्वादिति योजना ॥ १० ॥

**द्वितीयेऽपि प्रमाणाख्यक्रियारूपेण सर्वगे।**
**कूटस्थे परिणामित्वं प्रमातृत्वं कथं भवेत् ॥ ११ ॥**

द्वितीयमनिष्टापत्त्या दूषयति—द्वितीयेऽपीति। प्रमाणाख्यक्रियारूपेण परिणामित्वं प्रमातृत्वम्। तच्चाविकारिणि सर्वगे आत्मनि दुःसम्पादमन्यथा कौटस्थ्यभङ्गादिदूषणमित्यर्थः ॥ ११ ॥

**प्रमातृत्वं विना तेन चैतन्येन जडप्रथा।**
**चेत्तया सर्वगत्वेन युगपत्सर्वभासनम् ॥ १२ ॥**

मास्तु तर्हि प्रमातृत्वं तद्विना चैतन्येनैव विषयप्रकाशः सेत्स्यतीति शङ्कामनूद्यातिप्रसङ्गेन दूषयति—प्रमातृत्वमिति । अन्तरेणैव प्रमातृत्वं चैतन्येन विषयप्रकाशे तस्य सर्वगत्वेन सर्वं युगपत्प्रकाशेतेति प्रतिकर्म्मव्यवस्था न सिद्ध्येदित्यर्थः ॥ १२ ॥

**तार्किकादिमतेऽप्येवं सर्वगात्मनि चेत्प्रथा ।**
**जायमाना तदा सर्वभानं युगपदापतेत् ॥ १३ ॥**

एवं वेदान्तिसांख्ययोर्मते प्रतिकर्म्मव्यवस्थानुपपत्तिमभिधाय तार्किकादिमते तदनुपपत्तिमुपपादयति—तार्किकादिमते इति । तन्मते किं सर्वगतात्मनि जायमानं ज्ञानं यावदात्मसमवायि ? उत शरीरावच्छिन्नात्मप्रदेशसमवायि ? तत्राद्यं दूषयति—सर्वगात्मनीति ॥ १३ ॥

**यावदात्मगतं ज्ञानं युगपत्सर्वभासकम् ।**
**भवे नियामकाभावाच्चेद्धर्मादिनियामकम् ॥ १४ ॥**
**सुखदुःखात्मको भोगो धर्म्माधर्म्मफलं भवेत् ।**
**तावुपेक्ष्यतृणादेस्तु भासने न नियामकौ ॥ १५ ॥**

एतदेवोपपादयति—यावदिति । नियामकाभावाद् युगपत्सर्वावभासप्रसङ्गान्नाद्य इत्यर्थः । धर्माधर्मौ नियामकाविति चेत्, न; तयोः सुखदुःखजनकविषये तथात्वेऽपि उपेक्षणीयतृणादिसर्ववस्तुष्वनियामकत्वादिति द्वयोर्योजना ॥ १४—१५ ॥

**यस्य ज्ञानस्य यद्धेतुः प्रकाश्यं तेन तद्भवेत् ।**
**इत्येवं नियमः स्याच्चेत्तदाप्यतिप्रसञ्जनम् ॥ १६ ॥**

उपपत्त्यन्तरमाशङ्क्य निरस्यति—यस्येति । यस्य ज्ञानस्य यज्ज-

नकं तत्तेन प्रकाश्यमिति नियमः स्याच्चेत्, तदाप्यतिप्रसङ्गः स्यादित्यन्वयः ॥ १६ ॥

**चक्षुरादेरपि स्वोत्थज्ञानवेद्यत्वमापतेत् ।**
**विषयत्वन्तु नाद्यापि सिद्धं तस्याऽनिरूपणात् ॥ १७ ॥**

अतिप्रसङ्गमेव दर्शयति—चक्षुरिति । चक्षुरादेरपि चक्षुर्जन्यज्ञानवेद्यत्वप्रसङ्गादित्यर्थः । विषयत्वे सति जनकं वेद्यमिति चेत्, नेत्याह—विषयत्वमिति । तस्य विषयत्वस्याऽनिरूपणादित्यर्थः ॥ १७ ॥

**ज्ञानस्य न गुणत्वेऽपि नियमो विषयग्रहे ।**
**प्रदीपगुणभा कुम्भं भासयत्यप्यकारणम् ॥ १८ ॥**

विषयत्वसिद्धावपि ज्ञानस्य गुणत्वं क्रियात्वं वा नोभयथापि नियमसिद्धिरिति । तत्रादौ ज्ञानस्य गुणत्वेन नियममाशङ्क्य निरस्यति—ज्ञानस्येति । ज्ञानस्य गुणत्वेऽपि स्वजनकविषयग्राहित्वनियमसिद्धिर्नास्ति, प्रदीपगुणस्य प्रकाशस्याजनकेऽपि घटे प्रकाशकत्वदर्शनादित्यर्थः ॥१८॥

**क्रियात्वे तस्य वाय्वादिक्रियाणामनपेक्षिते ।**
**वस्तुन्यात्माऽऽश्रयाक्तेऽतिशयहेतुत्वदर्शनात् ॥ १९ ॥**

ज्ञानस्य क्रियात्वपक्षेऽपि दूषणमाह—क्रियात्वे इति । वाय्वादिक्रियाणाञ्चानुद्दिष्टेऽपि वस्तुनि आत्माश्रयाक्ते स्वाश्रयसंयुक्ते तृणादावतिशयहेतुत्वदर्शनादित्यर्थः ॥ १९ ॥

**अथ ज्ञानाश्रयस्यात्मवस्तुनो निष्कलत्वतः ।**
**न सर्ववस्तुसंयोग इति नातिप्रसञ्जनम् ॥ २० ॥**

परिहारान्तरं शङ्कते—अथेति ॥ २० ॥

**तदा न कश्चिदप्येवं प्रकाशेताऽप्यसङ्गतः ।**
**नान्यत्र स्वाश्रयाज्ज्ञानं संसर्गं भजते गुणः ॥ २१ ॥**

दूषयति—तदेति । क्रियारूपस्य गुणस्य वा ज्ञानस्य स्वाश्रयमतिलङ्घ्याऽन्यत्र संसर्गायोगात्, असंसृष्टग्राहित्वे चातिप्रसङ्गादित्यर्थः ॥२१॥

**देहावच्छिन्न एवात्मप्रदेशसमवायि चेत् ।**
**ज्ञानं तर्हि प्रसज्येत सांशत्वे नित्यमात्मनः ॥ २२ ॥**

शरीरावच्छिन्नात्मप्रदेशसमवायिज्ञानमित्यस्मिन् पक्षेऽपि दूषणमाह—देहेति । आत्मनि प्रदेशस्य स्वाभाविकत्वम्? औपाधिकत्वं वा? तत्राद्यं दूषयति—तर्हीति । प्रदेशस्वाभाविकत्वे सावयवत्वेनानित्यत्वमात्मनः प्रसज्येतेत्यर्थः ॥ २२ ॥

**औपाधिकत्वेऽपि ज्ञानं तत्प्रदेशान्वितग्रहात् ।**
**तदा देहाद्बहिर्भूतघटादीन्नावभासयेत् ॥ २३ ॥**

औपाधिकत्वपक्षे दूषणमाह—औपाधिकत्वेऽपीति । औपाधिकत्वेऽपि ज्ञानं तत्प्रदेशसंयुक्तग्राहकञ्चेत्, तदा देहाद्बाह्यघटादीन्नैव भासयेदिति योजना ॥ २३ ॥

**बाह्यात्मदेशसंयुक्तग्राहित्वे सर्वमप्यदः ।**
**अवभासेत नातोऽस्ति व्यवस्था तार्किके मते ॥२४॥**

बाह्यात्मप्रदेशसंयुक्तग्राहित्वे बाह्यं सर्वमप्यवभासेत! नेत्याह—बाह्येति ॥ २४ ॥

**ननु सम्बन्धशून्येऽपि वस्तुन्यैव व्यवस्थया ।**
**ज्ञानक्रिया स्वभावेनातिशयं जनयिष्यति ॥ २५ ॥**
**अभिचारक्रिया यद्वद् दूरे व्यवहितं नरम् ।**
**उद्दिष्टमेव हन्त्येवं ज्ञानं भासयतीति चेत् ॥ २६ ॥**

उपपत्त्यन्तरेण नियमं शङ्कते—नन्विति द्वाभ्याम् । सम्बन्धरहितेऽपि वस्तुनि व्यवस्थयैव ज्ञानक्रियाऽतिशयं जनयिष्यति । यथा अभिचारक्रियया सहस्रयोजनव्यवहितोऽप्युद्दिष्ट एव पुरुषो मार्यते, इति कथन्न नियमसिद्धिः ? इति द्वयोर्योजना ॥ २५—२६ ॥

**तत्रापि हन्यमानेन हन्त्रा युक्तस्य चेशितुः ।**
**नियामकस्य कृत्यादिरनुमेयतया तथा ॥ २७ ॥**

तद्दूषयति—तत्रापीति । अभिचारक्रियायामपि हन्तृहन्यमानपुरुषद्वयसंयुक्तदेवतात्मन ईश्वरस्य वा कृत्यादेर्वा नियामकस्यानुमेयत्वान्न तथाऽत्र नियामकत्वं कस्यचिदित्यर्थः ॥ २७ ॥

**अभिचारक्रियात्वेन संयुक्तेऽतिशयावहा ।**
**क्रियात्वाद्बाणशक्त्यादिक्रियावदिति साधनात्॥२८॥**

अनुमानं दर्शयति—अभिचारेति । विमतमभिचारकर्म्म स्वसम्बन्धिन्यतिशयजनकम्, क्रियात्वात्, बाणादिक्रियावदित्यर्थः ॥ २८ ॥

**अथ संयुज्यते ज्ञानाधारेणैवात्मना मनः ।**
**मनसा चेन्द्रियं तेन विषयो युज्यते तथा ॥ २९ ॥**
**नियामिकाऽस्तु तत्रेयं सा संयोगपरम्परा ।**
**अतस्तार्किकपक्षे स्याद् व्यवस्थेति तदप्यसत् ॥३०॥**

परिहारान्तरं शङ्कते—अथेति द्वाभ्याम्।

तद्दूषयति—तदिति ॥ २९—३० ॥

**तस्याः परम्परायास्तु ज्ञानात्पूर्वमुपक्षयात्।**
**ज्ञानोत्पादन एवातो व्यवस्था तत्र दुर्लभा ॥३१॥**
**ज्ञानादूर्ध्वमपीयञ्चेत्तदा सर्वं जगत्समम्।**
**तत्संयुक्तादिरूपेणाऽवभासेताऽवभासने ॥ ३२ ॥**

तस्या इति। तस्याः परम्पराया ज्ञानात् पूर्वं ज्ञानोत्पादने एवोपक्षयाद् ज्ञानादुपर्यपि संयोगपरम्परयाऽवभासे विषयसंयुक्ततत्संयुक्तादिरूपेणावस्थितं सर्वं जगत्समं युगपदेवावभासेतेति द्वयोर्योजना॥३१—३२॥

**एवमेवोहनीयाः स्युरणुमात्रात्मविन्मते।**
**देहमात्रात्मवादे च दोषा युक्तिविदां वरैः ॥ ३३ ॥**
**तस्मान्मातृप्रमाणादिव्यवहारस्य सम्भवः।**
**सर्ववादिमते नास्ति युक्तिभिश्चेति संग्रहः ॥ ३४ ॥**

एवमणुपरिमाणदेहपरिमाणात्मपक्षयोरपि दोषा ऊहनीया इत्याह—एवमेति। तत्राणुपरिमाणात्मवादिमते ह्रदादिनिमग्नस्य पुरुषस्य सर्वाङ्गे शीतस्पर्शानुभवोऽपि न स्यात्, अणोः सर्वाङ्गसम्बन्धस्य युगपदसम्भवात्। क्रमिकसंयोगानाञ्चायौगपद्येनैकज्ञानजनकत्वासम्भवात्। यदि स्वशरीरेऽपि सर्वाङ्गज्ञानासम्भवः, तर्हि बहिर्ज्ञानं तस्य कुतः? कुतश्च प्रतिकर्म्मव्यवस्था? इति शरीरपरिमाणात्मवादिमतेऽपि तस्य बहिर्देशसम्बन्धाभावादनेकान्त्यवादाच्च न प्रतिकर्म्मव्यवस्थासम्भवः। तथाचोपहसितमाचार्य्यवाचस्पतिमिश्रैः—

"तस्मात्स्थाणुर्वा पुरुषो वेति ज्ञानत्रत्सप्रत्वपञ्चत्वनिर्धारणस्य च फलस्य निर्धारयितुः प्रमाणस्य च तत्प्रमेयस्य च सप्तत्वपञ्चत्वसुदशत्वसंशये साधु समर्थितं तीर्थङ्करत्वमृषभेण" इति। अलं पल्लवितेन ॥ ३३ ॥

पूर्वपक्षमुपसंहरति—तस्मादिति ॥ ३४ ॥

**अत्रोच्यते समीचीनं त्वया प्रोक्तं मतं मम।**
**प्रतिकर्म्मव्यवस्थायाः सर्ववादिष्वसम्भवः ॥ ३५॥**

पूर्वपक्षमिष्टापत्त्या स्वीकुर्वन् समाधानं प्रतिजानीते—अत्रोच्यते इति। सर्ववादिषु तार्किकादिमतेषु प्रतिकर्म्मव्यवस्थाया असम्भवोऽस्तीति यत्त्वया प्रोक्तं तत्समीचीनमेव प्रोक्तम्। इति यत्तदोरध्याहारेणान्वयः। यतो ममापि वेदान्तवादिनो मतमभिमतमस्तीत्यर्थः ॥३५॥

**सा वेदान्तिमते सम्यक् सम्भवेद् व्यवहारतः।**
**परमार्थदशायान्तु माऽस्तु सा तेन का क्षतिः ॥३६॥**

कथं तर्हि वेदान्तिमते तत्सम्भवः? तत्रापि तदसम्भवस्त्वस्माभिरुक्त एवेत्याशङ्क्य किं परमार्थतो वेदान्तिमते प्रतिकर्म्मव्यवस्थाया असम्भव उच्यते? उत व्यवहारतोऽपि? नाद्यः, इष्टापत्तेः। नहि वस्तुतः किमप्यद्वितीये वस्तुनि सर्वव्यवहारानास्पदे वेदान्तिभिर्व्यवहरणं स्वीक्रियते,

"न निरोधो न चोत्पत्तिर्न बन्धो न च साधकः।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥" (गौ० का० २। ३२)

इति श्रुतेः। न द्वितीयो व्यवहारदशायां मायाद्युपहितचैतन्ये माययैव सर्वव्यवहारसिद्धेरित्यभिप्रेत्याह—सेति ॥ ३६ ॥

**तत्कथं शृणु वेदान्तसिद्धान्तमतमादरात्।**
**तव शङ्काकलङ्कासंस्पृष्टं यदि विपर्य्ययम्॥ ३७॥**

तर्हि व्यवहारदशायामुक्तदूषणानां कथमुद्धार इति शङ्कते—तत्कथमिति। समाधत्ते—शृण्विति। त्वदुक्तशङ्काकलङ्केनाऽसंस्पृष्टं वेदान्तसिद्धान्तमतम्। यद्विपर्य्ययशून्यं सम्यक्प्रमाणसिद्धं तदादराच्छृण्वित्यर्थः। नहि श्रद्धाभक्ती विना वेदान्तमतश्रवणेऽधिकार इति भावः॥ ३७॥

**अनिर्वाच्याऽविद्या सकलकलनाकारणतया**
**समावृत्याऽऽत्मानं निरवधि चिदानन्दममृतम्।**
**प्रपञ्चाकारेण प्रचुरगुणयुक्ता परिणता**
**प्रमात्राद्यध्यासं सृजति विमलेऽहङ्कृतितया॥ ३८॥**

प्रतिज्ञातमर्थमुपपादयितुं भूमिकामाह—अनिर्वाच्येति। वस्तुतोऽपरिछिन्नं चिदानन्दस्वरूपममृतं नित्यमुक्तमप्यात्मानं स्वाश्रया स्वविषयाऽनाद्यनिर्वाच्याऽविद्या सम्यक् तत्प्रतिविम्बगर्भिता आच्छाद्य सकलव्यवहारहेतुकल्पनाकारणतया प्रचुरगुणविशिष्टा प्रपञ्चाकारेण परिणता सती तत्राप्यहङ्कृतिरूपेण परिणता सती विमलेऽत्यन्तविशुद्धतया सर्वव्यवहारानास्पदेऽपि चैतन्ये प्रमात्राद्यध्यासं सृजतीति योजना। तथा च परमार्थवस्तुनि प्रत्यकूतत्त्वेऽविद्याद्यध्यासमन्तरेण न कस्यापि व्यवहारस्य सम्भवः, तदुपहिते तु न कस्यापि व्यवहारस्यानुपपत्तिरिति भावः॥ ३८॥

**अविद्याधिष्ठानं प्रकृतिविकृतीशानमचलं**
**निरीहं निर्द्वन्द्वं सुखघनमबाध्यं समरसम्।**

परब्रह्माऽद्वैतं जडजगदधिष्ठानवपुषा
प्रमात्राद्याकारैः स्फुरति विविधं व्यापृतिपदे॥ ३८॥

अविद्या सृजतीत्युक्ते तस्याः स्वातन्त्र्यं प्राप्तं तद्वारयन् अविद्योपहितं चैतन्यमधिष्ठानमेवाध्यस्तपदार्थाकारेण व्यवहारदशायां स्फुरतीत्याह—अविद्येति। अविद्याधिष्ठानं परब्रह्मैव व्यापृतिपदे व्यवहारभूमौ विविधं प्रमात्राद्याकारैः स्फुरतीत्यन्वयः। वस्तुतस्तु अचलं क्रियारहितम्, निरीहमिच्छाशून्यम्, निर्द्वन्द्वं दृश्यधर्म्मविनिर्मुक्तम्, सुखैकरसम्, कालत्रयेऽप्यबाध्यम्, समरसमखण्डैकरसम्, द्वैतवर्जितम्, सर्वैर्विशेषणैर्निर्विशेषं सर्वव्यवहारानास्पदं ब्रह्मैतादृशमपि प्रकृतिर्माया, विकृतिस्तत्कार्य्यं वियदादिः, तयोरीशानं तन्नियन्तृत्वेन सर्वज्ञं सर्वशक्ति स्वतन्त्रं जडाज्ञानतत्कार्य्यजगदधिष्ठानत्वेन स्थितं तथा स्फुरतीत्यर्थः॥ ३८॥

तत्रात्मविद्याधिपतिर्महेशो
मायां वशीकृत्य निजानुभूतिः।
स्वतन्त्र आत्मस्थ उदारशक्ति-
र्ब्रह्मैव शुद्धं परमेश्वरोऽभूत्॥ ४०॥

विविधस्वरूपत्वं दर्शयन्नादौ "मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्" ( श्वे० ४। १० ) इति श्रुतिसिद्धं शुद्धस्यापि ब्रह्मणो मायोपहितत्वेन परमेश्वरत्वमित्याह—तत्रेति। प्रमात्रादिभेदस्फुरणे तद्धेतुभूतमायासम्बन्धे सति शुद्धं ब्रह्मैव परमेश्वरोऽभूदित्यन्वयः। तत्र हेतुः—मायामिति। मायावशीकरणे हेतुः—आत्मविद्याधिपतिरिति। एतदुपलक्षणं सकलैश्वर्य्यादीनाम्। तथा च समग्रैश्वर्य्यधर्म्मयशःश्रीवैराग्यज्ञानाधिपतिः, अत एव निजस्यासाधारण-

स्वरूपस्याऽनुभूतिर्निरावरणतत्त्वावबोधः स्वत एव यस्य सः, अत एव आत्मोस्थोऽप्रच्युतस्वरूपः, अत एव स्वतन्त्रः, यत उदारशक्तिरुदाराऽपरिच्छिन्नाऽव्याहता शक्तिर्मायाख्या स्वरूपस्फूर्त्यात्मिका वा यस्य स इति योजना ॥ ४० ॥

**न तत्र मायाकृतदोष ईषत्**
**स्वबोधतेजोऽनभिभूतधाम्नि ।**
**स्वीये महिम्नि स्थित एव सर्वं**
**करोत्यकर्ताऽवति हन्त्यसङ्गः ॥ ४१ ॥**

तस्य जगज्जन्मादिकारणत्वेऽपि मायोत्थविकारैरसंस्पृष्टत्वमित्याह—नेति । तत्र हेतुः—स्वबोधतेजसा निजबोधप्रतापेनैव मायाविजृम्भणैरनभिभूतमुलूकादिदिवान्धपरिकल्पिततमोविजृम्भणैर्मध्यन्दिनवर्त्तिप्रचण्डमार्तण्डमण्डलमिवानास्कन्दितं धाम स्वरूपं यस्य तस्मिन् स्वीये महिम्नि स्थित एव सन् सृष्टिकाले सर्वं विश्वं करोति सृजति—स्वसत्तास्फूर्त्तिदानेन स्वस्मिन्नध्यस्तं प्रकाशयति, स्वतोऽकर्त्तैव सन् स्वानन्दलवदानेन स्थितिकालेऽवति पालयति, लयं सर्वं स्वस्मिन्ननन्यरूपेणाकर्षकत्वेन हन्ति संहरति; तथापि सर्वदा स्वतोऽसङ्ग एवेत्यर्थः ॥४१॥

**अखण्डमद्वैतमसङ्गमच्छं**
**ब्रह्माप्यविद्यावृतभावतस्तत् ।**
**अनाद्यनिर्वाच्यमनन्तदुःखं**
**जीवत्वमाश्रित्य भवं प्रयाति ॥ ४२ ॥**

तस्यैव ब्रह्मणोऽविद्याद्युपाधिकस्य स्वस्वरूपावरणेनैव जीवत्वमाह—अखण्डमिति । वस्तुतोऽखण्डं स्वगतादिभेदशून्यम्, अद्वैतम्,

असङ्गं सर्वसम्बन्धातीतम्, अच्छं विशुद्धमपि ब्रह्मैव स्वाविद्यावृत-स्वरूपत्वात् जीवत्वं लिङ्गदेहाध्यासेनान्तःकरणावच्छिन्नत्वमनाद्यनिर्वाच्यमाश्रित्य—स्वस्मिन्नध्यस्य भवं संसारमनन्तदुःखालयं प्रयातीति योजना ॥ ४२ ॥

**चैतन्यमेवानुगतं विशुद्धं**
**सामान्यमेकं ह्युभयत्र वस्तु ।**
**उपाधिभेदेन विभाग इत्थं**
**जीवोऽयमीशोऽयमिदं जगच्च ॥ ४३ ॥**

एकमेव चैतन्यमुपाधिभेदेन जीवत्वम्, ईश्वरत्वम्, जगत्त्वञ्च स्वस्मिन्नध्यस्य नानारूपेण भातीत्याह—चैतन्यमिति। उभयत्र जीवे परमेश्वरे च। हीति श्रुतिस्मृतिविद्वज्जनानुभवप्रसिद्धमेकमेव चैतन्यमनुगतमित्यर्थः। सुगममन्यत् ॥ ४३ ॥

**त्रिविधविश्वमिदं परमेशितु-**
**र्व्यवहृतौ स्फुरति स्वचिदञ्चितम् ।**
**विषयवृत्तिहृदां भिदयाऽनृतं**
**जगदुपेक्ष्य विचार्य्यमिदं पदम् ॥ ४४ ॥**

प्रमातृत्वाद्युपाध्यन्तःकरणाद्युपेक्ष्य सर्वत्रानुगतचैतन्यं यावत्तत्त्वसाक्षात्कारं विचारणीयमित्याह—त्रिविधमिति। परमेशितुर्मायाशबलाद् ब्रह्मणः सकाशात् त्रिविधं प्रमात्रादिभेदेन त्रिप्रकारकं विश्वं भूतभौतिकरूपं स्थिरजङ्गमात्मकञ्च त्रिगुणात्मकमिदं प्रत्यक्षादिसिद्धं समुत्पद्य, व्यवहृतौ स्थितिसमये स्वचिदञ्चितं स्वात्मचैतन्यखचितं सत्—विषयो घटादिर्विषयचैतन्योपाधिः, वृत्तिर्घटाद्याकारान्तःकरण-

परिणामविशेषः प्रमाणचैतन्योपाधिः, इदं अन्तःकरणं धर्म्मि प्रमातृचैतन्योपाधिः, तेषां भिदया भेदेन—स्फुरति कर्त्रादिरूपेण भासते। तत्रानृतमनिर्वाच्याविद्याकार्य्यमन्तःकरणादि जगत्कार्यजातमुपेक्ष्याध्यस्तत्वेनाविद्यमानवत्कृत्वा इदं नित्यापरोक्षचैतन्यं पदं पद्यते। श्रवणादिपरिपाकोऽस्य तत्त्वसाक्षात्कारेण फलत्वेन गम्यते इति पदं नित्यमेव विचार्य्यमित्यर्थः। तदुक्तम्—

"जाग्रतः स्वपतो वापि गच्छतस्तिष्ठतोऽपि वा।
न विचारपरञ्चेतो यस्यासौ मृत उच्यते॥"

"तस्मादध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते" इति न्यायेन ब्रह्मतत्त्वसाक्षात्काराय सर्वत्रवेदान्तेषु दृश्यमद्वितीये तत्त्वे आरोप्य, तत्रैव पुनः प्रतिषिध्य, तत्त्वं प्रतिपाद्यते; तथाऽत्रापि वेदान्तप्रकरणत्वात् प्रतिपाद्यतत्त्वबोधायेत्थं विचारणेति भावः॥ ४४॥

**सकलगा चितिरात्मपदाभिधा**
**जडमृषाऽऽवरणात्मिकयाऽजया।**
**निजपदाश्रययाऽपि समावृता**
**सृजति भेदमभेदवपुः सती॥ ४५॥**

सर्वगस्यापि चैतन्यस्य स्वाश्रयस्वविषयाज्ञानावृतस्य परिच्छिन्नजडत्वाद्याकारेण स्फूर्तिरित्याह—सकलगेति। आत्मपदवाच्या चितिश्चैतन्यं ब्रह्म निजपदाश्रययापि निजमात्मतत्त्वमेव पदं तदाश्रयापि अजया अनाद्यविद्यया जडा चैतन्यस्फूर्त्यधीना, मृषा चैतन्यसत्ताधीना, आवरणाऽऽत्मिकाऽनिर्वाच्यभावरूपा तया सम्यगाऽऽच्छादिता वस्तुतो भेदशून्याऽपि चितिः सती अबाधितस्वरूपा भेदं प्रमात्रादिविभ्रमं सृजतीति योजना॥ ४५॥

अनाद्यविद्या परमात्मतत्त्व-
मावृत्य सर्वत्र गतं स्थितेयम् ।
अनेकविश्वात्मतया विचित्रा
विवर्त्तते भाववपुश्चिदिद्धा ॥ ४६ ॥

एवमुपोद्घातं सपरिकरमुपवर्ण्य प्रतिकर्म्मव्यवस्थामुपपादयितुमुपक्रमते—अनादीति । सर्वानुस्यूतपरमात्मतत्त्वमियं साक्षिप्रत्यक्षगम्याऽनाद्यविद्याऽऽवृत्य चिता स्वाधिष्ठानचैतन्येनेद्धा उद्दीपिता प्रतिबिम्बदानेनानेकविश्वाकारतया विवर्त्तते; विचित्राऽदृष्टादिसहकृता सती भाववपुः कार्य्यमात्रं प्रति हेतुत्वादिभावविलक्षणेति योजना ॥ ४६ ॥

तत्र स्थितोऽन्तःकरणं शरीरे
विद्याविवर्त्तो नयनादिवृत्त्या ।
निर्गत्य संव्याप्य यथोचितं तद्
घटादिवस्त्वस्ति हि तत्तदात्म ॥ ४७ ॥

विचित्रविवर्त्ततामाह—तत्रेति । अविद्याविवर्त्तेषु मध्येऽन्तःकरणाख्यस्तद्विवर्त्तः शरीरमध्ये स्थितो धर्माधर्म्मप्रेरितो नेत्रादिद्वारा निर्गत्य, यथोचितं घटादिविषयान् व्याप्य, तत्तदाकारो भवतीत्यर्थः ॥ ४७ ॥

तटाकस्थं जलं सेतुगतच्छिद्राद्यया स्वयम् ।
कुल्यात्मना विनिर्गत्य केदारान् सम्प्रविश्य च ॥४८॥
चतुष्कोणतया तद्वत् त्रिकोणत्वेन वाऽन्यथा ।
तत्तत्केदाररूपेण भवतीदं मनस्तथा ॥४९॥

एतदेव दृष्टान्तेन विवृणोति—तटाकस्थमिति । यथा लोके पूर्ण-तटाकस्थमुदकं सेतुगतच्छिद्रान्निर्गत्य, कुल्याप्रवाहरूपेण केदारान् प्रविश्य, चतुष्कोणत्वेन त्रिकोणत्वेन वर्त्तुलत्वेन वा तत्तत्केदारानु-सार्येवाऽवतिष्ठते, तद्वन्मनोऽपीति द्वयोर्योजना ॥ ४८—४९ ॥

**न स्यन्दते मन इदं जलवत्क्रमेण**
**किन्त्वर्करश्मिवदिदं खलु तैजसत्वात् ।**
**दीर्घप्रभाकृतितया परिणाममेति**
**सङ्कोचमेति सहसा रविरश्मिवच्च ॥ ५० ॥**

तत्तदाकारांशमात्रे जलदृष्टान्तो न तु तद्वन्मनसः स्यन्दनं किन्त्व-न्यथैवेति दृष्टान्तान्तरेण मनसो झटित्येव तत्तद्देशप्राप्तिं सम्भावयति—नेति । नह्युदकवदन्तःकरणं परिस्यन्दते, येनातिदूरवर्त्तिचन्द्रनक्षत्र-ध्रुवादिप्राप्तिर्न सिद्ध्येत्, किं तर्हि सूर्य्यरश्मिवत्तैजसत्वाद्दीर्घप्रभा-कारेण परिणमते । अत एव रश्मिवत् सहसा सङ्कोचोऽप्युपपन्न इत्यर्थः ॥ ५० ॥

**दूरस्थितेन्दुगुरुशुक्रबुधध्रुवादि-**
**प्राप्तिर्झटित्यपि ततो मनसोऽस्य सिद्ध्येत् ।**
**क्षीरादिवत्परिणतिस्तत एव सिद्धा**
**चित्तस्य सावयवरूपतयाऽऽदिमत्त्वात् ॥५१॥**

उक्तमर्थं स्पष्टयन्नन्तःकरणस्य सावयवत्वात् क्षीरादिवत्परिणा-मोऽप्युपपन्न इत्याह—दूरेति । तस्य सावयवत्वम्, "तन्मनोऽसृजत" इति श्रुतिसिद्धादिमत्त्वादित्यर्थः । सुगममन्यत् ॥ ५१ ॥

तच्चान्तःकरणं तथा परिणतं देहस्य चाभ्यन्तरे
कुम्भादौ विषये च तैजसवपुः संव्याप्य वृत्त्या स्वया।
मध्ये च्छिन्नमिदं शरीरघटयोर्दण्डायमानं यतः
सर्वत्र व्यवतिष्ठते तत इदं त्रेधा स्थितं व्यापृतौ॥५२॥

तत्परिणामं विभज्य दर्शयति—तच्चेति द्वाभ्याम्। तच्च परिणतमन्तःकरणं देहाभ्यन्तरे घटादौ च सम्यग्व्याप्य देहघटयोर्मध्यदेशेऽपि दण्डायमानमविच्छिन्नं व्यवतिष्ठते तस्मादिदमन्तःकरणं व्यवहारभूमौ त्रिधारूपेण स्थितमिति योजना॥ ५२॥

कर्त्ता देहगतोऽस्य भाग उदितोऽहङ्कारनामा हृदो
वृत्तिर्देहघटादिमध्य इतरो भागोऽस्य दण्डाकृतिः।
कुम्भादौ विषयेऽस्य भाग उचितः कर्म्मत्वसम्पादकः
स्याज्ज्ञाने विषयस्य तस्य मनसोऽभिव्यक्तियोग्यत्वतः५३

त्रिविधत्वं विवृणोति—कर्त्तेति। तत्र देहावच्छिन्नान्तःकरणभागोऽहङ्काराख्यः कर्त्तेत्युच्यते, देहविषयमध्यवर्त्तिदण्डायमानस्तद्भागो वृत्तिर्ज्ञानाभिधा क्रियेत्युच्यते, विषयव्यापकस्तद्भागो विषयस्य ज्ञानकर्म्मत्वसम्पादकमभिव्यक्तियोग्यत्वमित्युच्यते, इति योजना॥ ५३॥

अस्मिंस्त्रिभागमनसि ह्यतिनिर्मले याऽ-
भिव्यज्यते चिदमला पुनरत्र तस्य।
तद्भागभेदकृतभागविभेदभाक्त्वं
लोके भवेद् व्यवहृतौ किल केवलायाः॥५४॥

उपाधिभेदेन तदवच्छिन्नचैतन्यस्य भेदभाक्त्वमित्याह—अस्मिन्निति। तस्य च त्रिभागस्यान्तःकरणस्यातिस्वच्छत्वाच्चैतन्यं तत्राभिव्यज्यते। तस्याभिव्यक्तस्य चैतन्यस्यैकत्वेऽभिव्यञ्जकान्तःकरणभागभेदेन कृतो यो भागविभेदस्तद्भाक्त्वं लोके व्यवहृतौ किल प्रसिद्धमित्यर्थः ॥ ५४ ॥

**चिदंशः कर्त्रवच्छिन्नः प्रमाता सम्प्रकीर्तितः।**
**प्रमाणं स्यात्क्रियाभागावच्छिन्नश्चेतनांशकः ॥५५॥**

**विषये योग्यताभावावच्छिन्नः प्रमितिर्भवेत्।**
**मातृमानमितीनां स्यादसाङ्कर्यं विभागशः ॥५६॥**

उपाधिकृतभेदभाक्त्वं चितो दर्शयति—चिदंश इति द्वाभ्याम् ॥ ५५—५६ ॥

**भागत्रयेऽप्यनुगता हृदयाकृतिश्चि-**
**न्मातृप्रमेययुगयोगितया च तस्याः।**
**ज्ञातं मयेदमिति संव्यवहार एष**
**सङ्गच्छते तदनुभावितया विशिष्टः ॥५७॥**

अत एव मयेदमवगतमिति विशिष्टव्यवहारसिद्धिरित्याह—भागत्रयेऽपीति। कर्त्रादिरूपेऽनुगताऽन्तःकरणाकारा चितिस्तस्याः प्रमातृप्रमेयसम्बद्धत्वात् 'ज्ञातं मयेदम्' इत्येष विशिष्टव्यवहारस्तदनुभावितया पूर्वोक्तसम्बन्धानन्तरमवश्यम्भावित्वेन सङ्गच्छते—उपपद्यते इत्यर्थः ॥५७॥

**व्यङ्ग्यव्यञ्जकयोरैक्याध्यासाच्चिन्मनसोर्द्वयोः।**
**परस्परस्मिन्नन्योन्यधर्म्मादिव्यापृतिर्भवेत् ॥ ५८ ॥**

चिन्मनसोऽन्योन्याध्यासकृत एव सर्वो व्यवहार इति वक्तुं तयो-रन्योन्यस्मिन्नन्योन्यधर्माध्यासस्तयोरैक्याध्यासप्रयुक्त एवेत्याह—व्यङ्ग्यव्यञ्जकयोरिति। व्यापृतिर्विनिमयः ॥ ५८ ॥

**अतो घटाद्यवच्छिन्नचैतन्यावरणं तमः।**
**तदाकारमनोवृत्त्या नाश्यते व्यापृतौ स्फुटम् ॥५९॥**

अत्रोपपत्तिमाह—अत इति। अन्योन्यस्मिन्नन्योन्यधर्माध्यासादेवेत्यर्थः। स्पष्टमन्यत् ॥ ५९ ॥

**नन्वन्तःकरणेन चेच्चितिगताऽज्ञानावृतिर्नाश्यते**
**कुम्भज्ञानत एव तर्हि सकलो मुच्येत बन्धाज्जनः।**
**यद्यत्रातिशयोऽपि तेन मनसा चैतन्य उत्पाद्यते**
**तर्ह्येतस्य विकारिता खलु भवेदित्यत्र सम्प्रोच्यते॥६०॥**

नन्वन्तःकरणेन चैतन्यस्याभिव्यक्तिर्नामावरणविनाशश्चेत्, घट-ज्ञानेनैव मोक्षः स्यात्; आत्मगतातिशयश्चेत्, आत्मनो विकारित्वं स्यादिति शङ्कते—नन्विति। समाधानं प्रति जानीते—अत्रेति ॥६०॥

**आवृत्यभिभवस्तत्र मनसा क्रियते जडे।**
**चिदभिव्यक्तिरेवेयं नात्मन्यतिशयादिकम् ॥ ६१ ॥**

प्रतिज्ञातमर्थं विवृणोति—आवृतीति। आवरणाभिभवस्याभि-व्यक्तित्वादित्यर्थः ॥ ६१ ॥

**तूलाज्ञाने विनष्टेऽपि मूलाज्ञानं न नश्यति।**
**प्रत्यग्ब्रह्मैक्यविज्ञानान्मूलाज्ञानं विनश्यति ॥६२॥**

तूलाज्ञाने इति । स्पष्टम् ॥ ६२ ॥

आत्मनो परिणामित्वाज्जडत्वाच्चाप्यहङ्कृतेः ।
प्रमाता ते मतेनैव सिद्ध्येदित्यत्र कथ्यते ॥ ६३ ॥

चिदभिव्यक्तियुक्तोऽत्राऽहङ्कारः परिणाम्ययम् ।
प्रमाता सिद्ध्यतीत्येवं दर्शितं पूर्वमेव हि ॥ ६४ ॥

पूर्वोक्तशङ्कामनूद्य परिहरति--आत्मन इति द्वाभ्याम् । पूर्वं कर्त्रादिभागनिर्णयावसरे इत्यर्थः ॥ ६३—६४ ॥

ननु सर्वगतत्वाच्चिद्रूपस्य परमात्मनः ।
प्रतिकर्म्मव्यवस्था ते नैव सिद्ध्यति युक्तिभिः॥६५॥

सुखदुःखादिकं पुंसां यदेकेनानुभूयते ।
तत्सर्वैरनुभूयेत सर्वात्मकतया चितः ॥ ६६ ॥

घटोऽनुभूयते यर्हि देवदत्तेन वै तदा ।
सर्वगत्वाच्चितः सर्वं जगत्तेनाऽनुभूयताम् ॥ ६७ ॥

चैतन्यस्य सर्वगत्वेऽपि प्रतिकर्म्मव्यवस्था सुखेन सिद्धयतीत्युपपादयितुं पूर्वोक्तशङ्कामुत्थापयति—नन्विति त्रिभिः ॥ ६५, ६६, ६७ ॥

मैवं चितो नहि ब्रूमः केवलायाश्च हेतुताम् ।
विषयाऽनुभवे तस्याः स्वाविद्याच्छादितत्वतः ॥६८॥

किं तर्हि स्वान्तवृत्त्याऽभिव्यक्ताया इष्यते चितः ।
तानि व्यवस्थितान्यन्तःकरणानि शरीरिणाम् ॥६९॥

परिहरति—मैवमिति द्वाभ्याम्। यदि केवलशुद्धचैतन्यस्य सर्वगस्य विषयानुभवे हेतुत्वमभ्युपगम्येत, तदा त्वदुक्तानुपपत्तिर्भवेत्। न तु तथा स्वीक्रियते, किन्तु व्यवस्थासिद्धयेऽन्तःकरणानि पृथक् स्वीक्रियन्ते। तथा च नोक्तदोषशङ्कावकाश इति तात्पर्य्यार्थः॥ ६८—६९॥

**तत्कथं सर्वजन्तूनां भोगसङ्कर आपतेत्।**
**चितः कर्तृत्वभोक्तृत्वे केवलाया यतो नहि॥ ७०॥**

अन्तःकरणावच्छिन्नस्यैव सुखदुःखादिसम्बन्धभानम्, न तु शुद्धस्य, तथा च कथं भोगसङ्कर इत्याह—तदिति॥ ७०॥

**न व्यवस्थापरिच्छिन्नं देवदत्तान्तरिन्द्रियम्।**
**युगपत्सर्वजगता यतः सम्बद्धयतेऽञ्जसा॥ ७१॥**

तत्रोपपत्तिमाह—नेति। अञ्जसेति योगाभ्यासं विना॥ ७१॥

**तदभिव्यक्तचैतन्यबलात्सर्वमसावतः।**
**नैवानुभवतीत्येवं व्यवस्था सम्भवेदिह॥ ७२॥**

तथा च प्रतिकर्म्मव्यवस्थासिद्धेत्याह—तदिति। तस्मिन्नन्तःकरणेऽभिव्यक्तं यच्चैतन्यं तद्बलादेव प्रतिनियतघटाद्यनुभवति असौ देवदत्तादिरूपा चितिः, अतः सर्वं नैवानुभवतीत्येवं व्यवस्थासिद्धिरित्यर्थः॥ ७२॥

**न वा सर्वगतस्तस्य परिच्छिन्नस्य चेतसः।**
**परिणामो भवेदेवं सूर्य्यरश्मिवदित्यपि॥ ७३॥**

परिछिन्नस्याप्यन्तःकरणस्य सूर्यरश्मिवत्सर्वव्यापी परिणामः किन्न स्यात्? इति शङ्कामनूद्य दूषयति—न वेति॥ ७३॥

**तत्परिणामसामग्रीपुण्यपापनिबन्धना ।**
**नेत्रश्रोत्रादिरूपा या साऽपि यस्माद् व्यवस्थिता॥७४॥**

**प्रतिकर्म्मनयैस्तस्मात्परिणामस्य सम्भवात् ।**
**व्यवस्था सिद्ध्यतीत्येवं न दोषोऽस्मन्मतेष्वपि॥ ७५॥**

प्रतिज्ञायां हेतुमाह—तदिति । अन्तःकरणपरिणामसामग्र्याः पुण्यपापनेत्रश्रोत्रादिरूपायाः प्रतिविषयं व्यवस्थितत्वेन परिणामस्यापि व्यवस्थासिद्धेरिति द्वयोरर्थः ॥ ७४—७५ ॥

**यस्तु योगं समभ्यस्य योगी सर्वगतस्य च ।**
**परिणामस्य सामग्रीं यत्नात्सम्पादयेदिह ॥ ७६ ॥**

**स युगपज्जगत् सर्वं सुखेनैवाऽवगच्छतु ।**
**न ततः स्याद् व्यवस्थाया हानिः काचिन्मते मम॥७७॥**

ननु तर्हि योगिनो युगपद् व्यवहितानेकपदार्थान् कथमवगच्छन्तीत्याशङ्क्य तादृशसामग्रीसम्पादनादित्याह—य इति द्वाभ्याम् ॥७६-७७॥

**नन्वन्तःकरणोपाधिः किमर्थं कल्प्यते त्वया ।**
**जडोपरागसंसिद्ध्यै चितोऽसङ्गितयेति चेत् ॥ ७८ ॥**

**तर्ह्यसङ्गितयोपाधावुपरागो न सम्भवेत् ।**
**नह्यसङ्गस्य केनापि सम्बन्धो घटते नयात् ॥ ७९ ॥**

ननु किं चैतन्यस्यासङ्गितया स्वतो विषयोपरागाभावात् तत्सिद्धयेऽन्तःकरणोपाधिः कल्प्यते ? किं वा सत्यपि तदुपरागे विषयप्रका-

शनसिद्धये ? इति विकल्प्य, आद्यमनूद्य दूषयति—नन्विति। चित्सम्बन्धादेव प्रकाशसिद्धावुपाधिवैयर्थ्यादित्यर्थः ॥ ७८—७९ ॥

**न वा सत्युपरागेऽपि विषये भानसिद्धये।**
**अपेक्ष्यतेऽन्तःकरणोपाधिरित्यपि साम्प्रतम् ॥ ८० ॥**

द्वितीयं दूषयति—नेति ॥ ८० ॥

**चिद्योगादेव तद्भानं सिद्धौ सत्यामुपाधिना।**
**प्रयोजनं न पश्यामः स्वप्रकाशतयाऽऽत्मनः ॥ ८१ ॥**

ननु स्वस्वरूपाभिव्यक्तिसिद्धये तदपेक्षा किन्न स्यात् ? इत्यत आह—स्वप्रकाशतयेति। स्वप्रकाशतयैव नित्यसिद्धस्यात्मनो न तदपेक्षेत्यर्थः ॥ ८१ ॥

**तस्मादुपाध्यसम्बन्धाच्चिता सर्वगयाऽखिलम्।**
**संयुक्तमिति सर्वस्य युगपद्भानमापतेत् ॥ ८२ ॥**

तत्किमित्यत आह—तस्मादिति। यस्मादसङ्गस्योपाधिसंसर्गो न सङ्गच्छते। तस्माच्चिता सर्वगया समस्तं जगत्संयुक्तं सम्बद्धमिति सर्वस्य युगपद्भानप्रसङ्गात् प्रतिकर्म्मव्यवस्थानुपपत्तिरेवेत्यर्थः ॥ ८२ ॥

**अथ जीवे परिच्छिन्ने नैकदा भानमापतेत्।**
**ब्रह्मणश्चेत्तदिष्टत्वादभेदेऽपि भिदा भ्रमात् ॥ ८३ ॥**

परिहारान्तरं दूषयितुमाशङ्कते—अथेति। अथ किं प्रतिबिम्बभूतजीवचैतन्यस्य युगपत्सर्वाऽवभासकत्वमापादयसि ? किं वा बिम्बभूतब्रह्मचैतन्यस्य ? नाद्यः, तस्य परिच्छिन्नत्वात्। न द्वितीयः, इष्टत्वात्।

जीवब्रह्मणोर्भेदाभावेऽपि किञ्चिज्ज्ञत्वसर्वज्ञत्वे असङ्कीर्णे बिम्बप्रतिबिम्बयोरवदातत्वश्यामत्वे इवेत्यर्थः ॥ ८३ ॥

**तथा सत्यपि जीवस्य किञ्चिज्ज्ञत्वमपि ध्रुवम् ।**
**न स्यात्सार्वज्ञ्यवद् ब्रह्म विषयानुभवो यतः ॥ ८४ ॥**

दूषयति—तथा सतीति । विषयानुभवस्य ब्रह्मचैतन्यरूपतया सर्वज्ञत्ववदहङ्कारावच्छिन्नजीवाऽनुसङ्गाभावाज्जीवस्य किञ्चिज्ज्ञत्वमपि न स्यादित्यर्थः ॥ ८४ ॥

**अथान्तःकरणोपाधेश्चक्षुरादिभिरिन्द्रियैः ।**
**घटादियोगाज्जीवस्य ज्ञातृत्वं घटते जडे ॥ ८५ ॥**

जीवोपाधेरन्तःकरणस्य चक्षुरादिद्वारा विषयसम्बन्धाज्जीवस्य विषयज्ञातृत्वं घटते इति शङ्कते—अथेति ॥ ८५ ॥

**तथाप्युपाधिसंसृष्टवस्तुज्ञातृत्व एष यः ।**
**जीवो ब्रह्मस्वरूपं स जानीयात्सर्वदा स्वयम् ॥ ८६ ॥**

अन्तःकरणसंसृष्टवस्तुज्ञातृत्वे ब्रह्मस्वरूपमपि जीवः सर्वदा जानीयादिति दूषयति—तथापीति ॥ ८६ ॥

**ब्रह्मणः सर्वगस्यान्तःकरणे सत्त्वसम्भवात् ।**
**अन्यथा ब्रह्मणः सर्वव्यापित्वं नैव सम्भवेत् ॥ ८७ ॥**

तत्र हेतुमाह—ब्रह्मण इति । विपक्षे बाधकमाह—अन्यथेति ॥ ८७ ॥

अथ सर्वगतो जीवोऽविद्योपाधिक इष्यते ।
स चैकदा जगत्सर्वं नावभासयितुं क्षमः ॥ ८८ ॥

अविद्याच्छादितत्वेन स्वस्याप्यनवभासनात् ।
सर्वगायाश्रितोऽप्येषाऽविद्यास्याच्छादिकाल्पिका ॥ ८९ ॥

धृतेनांगुलिमात्रेण समीपे चक्षुषो यथा ।
तिरोधानं हिमांश्वादेर्महतस्तद्वदात्मनः ॥ ९० ॥

तथाऽन्तःकरणस्योपरागेणाऽऽवरणं जडे ।
यत्राऽभिभूयते तत्र चिता किञ्चित्प्रकाश्यते ॥ ९१ ॥

परिहारान्तरं शङ्कते—अथेत्यादिचतुर्भिः । अथ मतमविद्योपाधिकत्वाज्जीवः सर्वगतः, स च न कृत्स्नं जगदवभासयितुं क्षमः, अविद्यावृतत्वेन स्वयमप्यप्रकाशमानत्वात् । 'अहमज्ञः' इति परिच्छिन्नतयाऽवगताया अप्यविद्यायाः सर्वगतचैतन्यतिरोधायकत्वमप्युपपन्नमेव; नेत्रसमीपे धृतेनाङ्गुलिमात्रेण महतश्चन्द्रादित्यादेरपि तिरोधानदर्शनात् । एवं सत्यन्तःकरणोपरागेण यत्रावरणमभिभूयते, तत्रैवाऽभिव्यक्तेन चैतन्येन किञ्चिदेव प्रकाश्यते । न तु सर्वमपीति प्रतिकर्म्मव्यवस्थासिद्धिरिति चतुर्णां योजना ॥८८, ८९, ९०, ९१॥

इत्यप्यसाम्प्रतं भाति कथं तेनाभिभूयते ।
कार्य्येण मनसाऽज्ञानं स्वोपादानं दुरुद्धरम् ॥ ९२ ॥

तदेव दूषयति—इत्यपीति ॥ ९२ ॥

तस्मात्तव मतेऽपीयं कथञ्चिन्नैव सिद्ध्यति ।
प्रतिकर्म्मव्यवस्थेति शङ्कायामभिधीयते ॥ ९३ ॥

पूर्वपक्षमुपसंहरति—तस्मादिति । समाधानं प्रतिजानीते—इति शङ्कायामिति ॥ ९३ ॥

**जीवचैतन्यमन्यत्राऽसङ्गित्वान्नोपरज्यते ।**
**तदन्तःकरणोपाधौ स्वभावादुपरज्यते ॥ ९४ ॥**

प्रतिज्ञातं विवृणोति—जीवेति । जीवचैतन्यमसङ्गितयाऽन्यत्रानुपरज्यमानमप्यन्तःकरणे उपरज्यते, तादृशस्वभावत्वादिति योजना ॥ ९४ ॥

**यथा सर्वगता जातिर्गोत्वाश्वत्वादिरूपिणी ।**
**सास्नादिसंयुतव्यक्तौ स्वभावादुपरज्यते ॥ ९५ ॥**

**न सोपरज्यतेऽन्यत्र तद्वदन्यत्र सर्वगा ।**
**चिन्नोपरज्यते सैव स्वोपाधावुपरज्यते ॥ ९६ ॥**

तत्र दृष्टान्तमाह—यथेति । यथा सर्वगताऽपि गोत्वादिजातिः सास्नादिमद्व्यक्तावुपरज्यते, नाऽन्यत्र, तद्वत् चित् चैतन्यमपि सर्वव्यापि नाऽन्यत्रोपरज्यते, सैव चित् स्वोपाधावन्तःकरणे उपरज्यते इति द्वयोर्योजना ॥ ९५—९६ ॥

**यदि सर्वगता जातिर्व्यक्तिष्वेवाऽवतिष्ठते ।**
**न दृष्टान्तस्तदा दीपप्रभा दृष्टान्त इष्यताम् ॥ ९७ ॥**

**सा हि रूपरसस्पर्शगन्धवाय्वादिदेशगा ।**
**व्यापिन्यपि समा रूपं प्रकाशयति नापरम् ॥ ९८ ॥**

अथ व्यक्तिष्वेव सर्वगता जातिस्तर्हि प्रदीपप्रभा दृष्टान्तोऽस्तु। सा हि रूपरसवायवादिदेशव्यापिन्यपि रूपमेव प्रकाशयति नान्यदित्याह—यदीति द्वाभ्याम् ॥ ९७—९८ ॥

**अतोऽन्तःकरणोपाधिश्चैतन्यस्य विभोरपि।**
**जडोपरागसिद्ध्यर्थो व्यवहारे भविष्यति ॥ ९९ ॥**

तथा चान्तःकरणोपाधिश्चैतन्यस्य विषयोपरागसिद्ध्यर्थो व्यवहारे स भविष्यतीत्याह—अत इति ॥ ९९ ॥

**न चाऽसत्युपरागे चित्प्रकाशो विषयान् क्षमः।**
**अवभासयितुं दीपभावत्संयुक्तभासकः ॥ १०० ॥**

यत्तूक्तं चित्सम्बन्धादेव विषयावभाससिद्धौ उपाधेर्वैयर्थ्यं तद्दूषयति—न चेति। न चासत्युपरागे चित्प्रकाशो विषयानवभासयितुमीष्टे, प्रदीपप्रकाशवत्संयुक्तभासकत्वादिति योजना ॥ १०० ॥

**सर्वोपादानभावेन ब्रह्मौपाधिकमन्तरा।**
**उपरागं जगत्स्वस्मादभिन्नं भासयत्यदः ॥ १०१ ॥**

ब्रह्मणस्ततो विशेषमाह—सर्वेति। ब्रह्म हि सर्वोपादानात्वादौपाधिकमुपरागं विनैव स्वस्वरूपवत्स्वाभिन्नं जगदवभासयतीति योजना ॥ १०१ ॥

**न त्वेवं भासयत्यद्धाऽनुपादानतयाऽज्ञचित्।**
**न चान्येनापि सम्बन्धान्न जीवो भासयेदिति ॥१०२॥**

**तृणाद्यदाहकत्वेऽपि केवलाग्नेस्तथापि सः ।**
**अयःपिण्डं समारुह्य दहत्यग्निस्तथैव सः ॥१०३॥**

जीवस्य तु न तथात्वमित्याह—न त्विति । तु शब्दार्थमाह—अज्ञचिद् अज्ञानि-(जीव)-चैतन्यमनुपादानत्वात् [ न भासयति ] । न च स्वतोऽनवभासकस्य जीवस्य घटादिवदन्यसम्बन्धादप्यवभासकत्वं नेति शङ्क्यम्, केवलवह्नेस्तृणाद्यदाहकत्वेऽप्ययःपिण्डसमारूढस्यैव दाहकत्वदर्शनादिति द्वयोरन्वयः ॥ १०२—१०३ ॥

**तथा चाऽसङ्गिनः साक्षिचैतन्यस्यावृतस्य च ।**
**जीवत्वेऽपि व्यवस्था स्यादन्तःकरणयोगतः ॥१०४॥**

फलितमाह—तथा चेति । तदेवमसङ्गिनः साक्षिचैतन्यस्याविद्यावृतस्य जीवत्वेऽपि स्यादेवान्तःकरणवशाद् व्यवस्थेत्यर्थः ॥ १०४ ॥

**यदन्तःकरणाभासो जीवः स्यात्सुतरां तदा ।**
**परिच्छिन्नतया सिद्ध्येद् व्यवस्था व्यवहारगा॥१०५॥**

अन्तःकरणप्रतिबिम्बो जीव इत्यस्मिन् पक्षे सुतरां व्यवस्थासिद्धिरित्याह—यदेति ॥ १०५ ॥

**ब्रह्मचैतन्यरूपोऽपि विषयानुभवो भवेत् ।**
**जीवोपाधावभिव्यक्ततया तद्रूप एव सः ॥ १०६॥**

विषयानुभवस्य ब्रह्मचैतन्यरूपत्वेऽपि जीवोपाध्यन्तःकरणपरिणामे विषयव्यापिन्यभिव्यक्तत्वाज्जीवचैतन्यरूपत्वमप्यविरुद्धमित्याह—ब्रह्मेति ॥ १०६ ॥

**संसृष्टत्वेऽपि चिद्धातोर्ब्रह्मणो मनसा सदा ।**
**ब्रह्मज्ञानं न जीवस्य तथा धीवृत्त्यभावतः ॥१०७॥**

ननु तर्हि सदा जीवस्य ब्रह्मानुभवः स्यादित्यत आह—संसृष्टत्वेऽपीति । ब्रह्मणोऽन्तःकरणसंसृष्टत्वेऽपि ब्रह्माकारपरिणतान्तःकरणवृत्त्यभावान्न जीवस्य सदा ब्रह्मज्ञानप्रसङ्ग इत्यर्थः ॥ १०७ ॥

**न धीस्वरूपमात्रं स्याद् वस्त्वभिव्यञ्जकं स्वयम् ।**
**किन्त्वस्यास्तत्तदाकारपरिणामो धियस्तथा ॥१०८॥**

**अन्यथा धीगतानां स्याद्धर्मादीनामपि ध्रुवम् ।**
**अभिव्यक्तिप्रसङ्गोऽतस्तत्स्वत्वं न प्रयोजकम् ॥१०९॥**

नन्वन्तःकरणमेव ब्रह्मचैतन्याभिव्यञ्जकं किन्न स्यात् ? इत्यत आह—नेति । नह्यन्तःकरणस्वरूपमात्रं वस्त्वभिव्यञ्जकं किन्तु तत्तदाकारपरिणामः, अन्यथाऽन्तःकरणगतानां धर्म्मादीनामप्यभिव्यक्तिप्रसङ्गः स्यादिति द्वयोरन्वयः ॥ १०८—१०९ ॥

**जीवोऽपि जीवाकाराहंवृत्त्या परिणते हृदि ।**
**अभिव्यज्यत आसुप्तेर्वृत्त्यभावेन जीवधीः ॥ ११० ॥**

ननु तर्हि जीवचैतन्यस्याप्यन्तःकरणेऽभिव्यक्तिर्न स्यादित्यत आह—जीवेति । जीवाकाराहंवृत्तिरूपेण परिणतेऽन्तःकरणे जीवोऽभिव्यज्यते, नान्तःकरणमात्रे; सुषुप्तावहंवृत्त्यभावे जीवाप्रतीतेरित्यर्थः ॥ ११० ॥

**तदित्थमन्तःकरणे प्रतिबिम्बस्य जीवता ।**
**यदि तर्हि व्यवस्थेयं सिद्ध्यत्येवं निराकुला ॥१११॥**

एतत्पक्षे फलितमाह—तदिति ॥ १११ ॥

**अविद्योपाधिको यर्हि जीवः सर्वगतो मतः।**
**तदा वृत्तितिरोधायिधिया सिद्ध्येद् व्यवस्थितिः॥११२**

**कार्य्यस्याप्यस्त्युपादानतिरोधायकता यतः।**
**दृष्टा वृक्षादिकार्य्यस्य स्वोपादानतिरस्कृतिः ॥ ११३॥**

**मृत्स्वरूपं न वृक्षादौ प्रत्यभिज्ञायते क्वचित्।**
**न वा वृश्चिकदेहेऽपि गोमयं ज्ञायते स्फुटम् ॥११४॥**

अविद्योपाधिकः सर्वगतो जीव इत्यस्मिन् पक्षेऽपि व्यवस्थाया नानुपपत्तिरित्याह—अविद्येति। यदा चाविद्योपाधिकः सर्वगतो जीवः, तदाप्यावरणतिरोधायकेनान्तःकरणेन व्यवस्था सिद्ध्येत्। सम्भवति हि कार्य्यस्याप्युपादानतिरोधायकत्वम्, वृश्चिकवृक्षादिकार्य्यस्य गोमयमृदादिकारणस्वभावतिरोधायकत्वदर्शनात्। नहि वृश्चिकशरीरे गोमयं प्रत्यभिज्ञायते, वृक्षादौ वा मृत्स्वरूपमिति त्रयाणां योजना ॥ ११२, ११३, ११४ ॥

**तदेवं सर्वथा वेदमौलिवादिमतेऽञ्जसा।**
**मात्रादिव्यवहारस्य सिद्धिर्नान्यमते नयैः ॥११५॥**

फलितमुपसंहरति—तदेवमिति ॥ ११५ ॥

**पूर्वपूर्वाहमुद्भूतप्रमातृत्वादिगोचरैः।**
**संस्कारैः सविकल्पे चिद्रूपेऽध्यासोऽस्त्यहङ्कृतेः ११६**

नन्वेतत् सर्वमहङ्काराद्यध्यासाधीनं तस्य निर्विकल्पचैतन्येन सम्भव इति पूर्वं शङ्कितं दत्तोत्तरमिति परिहरति—पूर्वेति। पूर्वपूर्वाहङ्कारादिकृतप्रमातृत्वादिसंस्कारेण सविकल्पके चैतन्ये सम्भवत्येव सविकल्पकाहङ्काराद्यध्यास इत्यर्थः ॥ ११६ ॥

**अविद्यावृतचैतन्येऽध्यस्तं देहघटादिकम्।**
**चिद्विवर्त्तः प्रपञ्चोऽतः सर्वप्रत्ययगोचरः ॥ ११७ ॥**

अनाद्यनिर्वाच्याविद्यावृतचैतन्ये न कस्यापि व्यवहारस्याऽसम्भावना कार्य्येत्याह—अविद्येति ॥ ११७ ॥

**एकमेवाऽत्र चैतन्यं देहे कुड्ये घटे वटे।**
**प्रमात्रादिभिदा तस्मिन्नुपाधेरेव न स्वतः ॥ ११८ ॥**

एकमेव चैतन्यमन्तःकरणाद्युपाधिभेदेन भिन्नमिव प्रतीयते, न स्वतस्तत्र भेद इत्याह—एकमिति ॥ ११८ ॥

**न वा चिति विवर्त्तत्वे सर्वस्य विषयस्य च।**
**चितोऽतिरेकतोऽसत्त्वाद्विज्ञानमत आपतेत् ॥११९॥**

विज्ञानमतप्रवेशमाशङ्क्य निराचष्टे—न वेति ॥ ११९ ॥

**किञ्चित्साम्यात् प्रवेशेऽन्यमते स्यात् सर्वसङ्करः।**
**सर्वसाम्यन्तु नास्त्यस्मन्मते विज्ञानवादिना ॥१२०॥**

किं विज्ञानमतप्रवेशो यत्किञ्चित्साम्येन? सर्वसाम्येन वा? इति विकल्प्याद्यमतिप्रसङ्गेन दूषयति—किञ्चिदिति। द्वितीयं निरस्यति—सर्वेति ॥ १२० ॥

**स क्षणिकान्यनेकानि विज्ञानानि च सौगतः ।**
**न तेभ्यो विषया भिन्ना इत्याह भ्रान्तचेतनः ॥१२१॥**

विज्ञानवादिमतं विवेचयति—स इति । इत्थं विज्ञानवादी मनुते—

"सहोपलम्भनियमादभेदो नीलतद्धियोः ।
अन्यच्चेत्संविदो नीलं न तद्भासेत संविदि ॥ १ ॥
भासते चेत्कुतः सर्वं न भासेतैकसंविदि ।
नियामकं न सम्बन्धं पश्यामो नीलतद्धियोः ॥ २॥"
( वि० प्र० सं० क्षणिकत्वनिरासप्र० पृ० ७५ )

इति तन्मतं स्वमताद् विविच्य दर्शयन्नाह—स इति ॥ १२१ ॥

**तत्त्वदर्शी तु विज्ञानं नित्यमद्वैतमक्षरम् ।**
**तत्राऽध्यस्ताश्च विषयाः पृथगर्थक्रियाक्षमाः॥१२२॥**

तन्मतात्स्वमतस्य वैलक्षण्यं दर्शयति—तत्त्वदर्शी त्विति । न ज्ञानं क्षणिकम्, प्रतिक्षणं स्वरूपभेदानवभासात् । अतिसादृश्याद्भेदानवभास इति चेत्, न; विकल्पासहत्वात् । किं संविद्धर्मो ज्ञानान्तरगम्यश्च भेदः ? किं वा संवित्स्वरूपभूतस्तयैव संविदा वेद्यः ? आद्येऽपि धर्मिप्रतियोगिभूतयोः संविदोः संविदन्तराविषयत्वे तयोर्भेदग्रहो न सिद्ध्येत् । विषयत्वे वा धर्म्मिप्रतियोगिभेदाख्यत्रितयमपि भेदसंवेदने कल्पितं तदभिन्नञ्च स्यात् । द्वितीये संवित्स्वरूपभूतो भेदः सादृश्यान्नावभासते इत्युक्ते संविदेव नावभासते इत्युक्तं स्यात् । ततो जगदान्ध्यप्रसङ्गः । अथापि संविदां सादृश्यनिर्वाहाय भेदोऽङ्गीक्रियत इति चेत्, न; सादृश्यस्य मानहीनत्वात्, ऐक्यावभासविरुद्धत्वाच्च, ऐक्यबोधिकायाः प्रत्यभिज्ञायाः प्रामाण्याच्चेति । तस्माद्विज्ञानं नित्यमेकमेवाद्वितीयम् । तत्र विज्ञाने विषयाः शब्दादयोऽध्यस्ता व्यवहारदशायां पृथक् पृथगर्थक्रियासमर्था भवन्तीत्यर्थः॥ १२२ ॥

**व्यवहारदशायां ते स्थायिनः सत्यबाधिताः ।**
**इत्येवं वदति स्वस्थो महदन्तरमस्त्यतः ॥ १२३ ॥**

स्वमते व्यवहारदशायां विषयाणां स्थायित्वमप्याह—व्यवहारेति। व्यवहारदशायां बाधाभावात्तेषां स्थायित्वं तत्त्वदर्शी तु इत्येवं वदति। तत्र हेतुः—स्वस्थ इति। क्षणिकवादी भ्रान्तचेतस्तया वदतु अन्यथा। तत्त्वदर्शी तु स्वस्थचित्ततया यथार्थमेव वदतीत्यर्थः। अतस्तयोर्महदन्तरमस्तीति योजना॥ १२३॥

**सर्वत्र प्रत्यभिज्ञानात् संविदेकाऽद्वितीयका ।**
**विषयोपाधिको भेदावभासस्तत्र न स्वतः ॥१२४॥**

एतदेव विशदयति—सर्वत्रेति। अद्वितीयं हि संवेदनं सर्वत्र प्रत्यभिज्ञानात्। घटसंवित्पटसंविदिति भेदावभासस्तु विषयोपाधिको न स्वाभाविक इत्यर्थः॥ १२४॥

**अद्वितीये मते संविन्नित्या साक्ष्यात्मिका चितिः ।**
**तथात्वं प्रत्यभिज्ञानाद्विशिष्टे संस्कृतिर्मता ॥१२५॥**
**कर्म्मकर्त्तृविरोधोऽपि न शङ्क्यः सर्वसम्मतेः**

संविदो नित्यत्वं साधयति—अद्वितीयेति। नन्वस्तु तस्या एकत्वम्, नित्यत्वन्तु कथम्? इत्यत आह—तथात्वमिति। अद्वितीयमते संविदो नित्यत्वञ्च सोऽहमिति प्रत्यभिज्ञानात्। ननु नित्यस्वयंप्रकाशे विज्ञानात्मनि संस्कारजन्यज्ञानस्यासम्भवात्कथं प्रत्यभिज्ञा स्यात्? इत्याशङ्क्याह—विशिष्ट इति। केवले चिदात्मनि जन्यज्ञानतत्संस्कारयोरसम्भवेऽप्यन्तःकरणविशिष्टे तत्सम्भवात् प्रत्यभिज्ञायाः सिद्धेः। न च विशिष्टस्य प्रत्यभिज्ञाविषयत्वे तस्यैव प्रत्यभिज्ञा-

तृत्वमपीति कर्म्मकर्त्तृविरोधः शङ्क्य इत्याह—कर्म्मकर्त्तृविरोध इति । तत्र हेतुः—सर्वसम्मतेरिति । सर्ववादिनां देहव्यतिरिक्ताद्यनुमानविषयतयाऽऽत्मनि कर्म्मकर्त्तृभावस्य सम्प्रतिपन्नत्वादिति सार्द्धस्यार्थः ॥ १२५ ॥

**न वैषम्यमिहाऽप्यस्त्युपाधिभेदाद् द्वयोर्भिदा ॥१२६॥**

अथ मतम्—नानुमानादौ विषयस्य कर्म्मकारकत्वम्, अतीतादिवस्त्वनुमाने विषयस्याविद्यमानस्य ज्ञानजनकत्वायोगाद् । विषयत्वन्तु अविद्यमानस्यापि कथञ्चित्सम्भविष्यति, ज्ञानस्य तदाकारत्वात् । ततोऽनुमानादौ कर्त्तृत्वमेवात्मनः, प्रत्यक्षे तु विषयस्य ज्ञानजनकतया कर्म्मकारकत्वं ततो विरोधस्तदवस्थ इति तत्राह—न वैषम्यमिति । इह प्रत्यक्षस्थलेऽपि उपाधिभेदाद् द्वयोः कर्म्मकर्त्रोर्भिदाऽस्ति, ततो न वैषम्यमिति योजना । अन्तःकरणविशिष्टतयैवात्मनः प्रत्यभिज्ञातृत्वम्, पूर्वापरकालविशिष्टतया च प्रत्यभिज्ञेयत्वम्, इत्युपाधिभेदेन विरोधाभावाद्युक्तमेवोक्तम्—यत्संविदो नित्यत्वं प्रत्यभिज्ञानादित्यर्थः । तथा च स्वप्रकाशस्याऽद्वितीयस्य नित्यस्य संविद्रूपस्य विज्ञानस्य साक्षिणः स्वीकारान्नास्मन्मतं विज्ञानवादिमतं कटाक्षेणापि वीक्षितुं क्षमते इति भावः ॥ १२६ ॥

**न संविद्विषयौ तत्राऽभिन्नौ वैरूप्यताश्रयौ ।**
**प्रत्यक्त्वादनुवृत्तत्वात् संविन्नित्या चिदद्वया ॥१२७॥**
**पराक्त्वाद् विषया भिन्ना व्यावृत्ताश्चेति तद्विदा ।**

एवं संविदो नित्यत्वं प्रसाध्य विषयसंविदोर्भेदमाह—नेति । वैरूप्यताश्रयावित्युक्तं तद्विवृणोति—प्रत्यक्त्वादिति । अस्मत्प्रत्ययगोचरतया सर्वान्तरत्वेन च विषयविरुद्धस्वभावत्वेन च संविदः प्रत्यक्त्वं तस्मा-

दनुवृत्तत्वाच्च घटसंवित्, पटसंविदित्येकाकारेण परस्परव्यभिचारवत्सु अनुगतत्वात्, नित्यत्वात्, चिद्रूपत्वात्, अद्वितीयत्वाच्च संविद्विषयेभ्यो भिन्नेत्यर्थः। ततो विरुद्धस्वभावत्वं विषयाणामित्याह—पराक्त्वादिति। युष्मत्प्रत्ययगोचरत्वात्, बहिःस्थत्वात्, जडत्वाच्च विषया भिन्नाः संविदः सकाशादिति शेषः। व्यावृत्ताः परस्परानुगतत्वाद् व्यभिचारिण इत्यर्थः। इति तद्भिदा तयोः संविद्विषययोर्भिदा भेदो युक्तिसिद्ध इति सार्द्धस्य योजना ॥ १२७ ॥

**तदेवं चित्यहङ्कारादध्यासेऽपि न मन्यते।**
**मतान्तरस्य साङ्कर्य्यमिति सिद्धमबाधितम् ॥१२८॥**

तथा सति कथं विज्ञानमतप्रवेश इति फलितमुपसंहरति—तदेवमिति। चिति चैतन्येऽहङ्कारादीनां कल्पितत्वेऽपि मन्मते मतान्तरस्य साङ्कर्य्यं नास्तीति सिद्धमिति योजना ॥ १२८ ॥

**तथा चोपाधिभेदेन प्रमात्रादिभिदा चितेः।**
**तेनैव व्यवहारस्य सिद्धिरस्ति न वस्तुतः ॥१२९॥**

परमप्रकृतमुपसंहरति—तथा चेति ॥ १२९ ॥

**घटादिविषयाणां हि प्रत्यक्षमपि चिद्वपुः।**
**जातं नष्टमिति ज्ञानं वृत्तिरेव न तच्चितिः ॥१३०॥**

ननु संविच्छब्देन चिद्रूपं ज्ञानमुच्यते ? उत वृत्तिरूपम् ? नाद्यः, तस्याऽजन्यस्य नित्यत्वान्नित्यमेव घटादिस्फुरणापत्तेः। न द्वितीयः, वृत्तेर्जडत्वाज्ज्ञानत्वानुपपत्तेरित्याशङ्क्याह—घटादीति। घटादिविषयाणां प्रत्यक्षप्रमा चैतन्यमेव, "यत्साक्षादपरोक्षाद् ब्रह्म" ( बृ० ३ ।

४ । १ ) इति श्रुतेः । तर्हि प्रत्यक्षप्रमाणरूपकरणजन्यत्वादनित्यत्वापत्तिरित्यत आह—जातमिति । घटज्ञानं जातं नष्टञ्चेति ज्ञानं वृत्तिरेव, तस्या एव जन्यत्वात् । न तज्ज्ञानं चितिश्चैतन्यम्, तस्या नित्यत्वेनाजन्यत्वादित्यर्थः ॥ १३० ॥

**चितोऽभिव्यञ्जिका वृत्तिः स्वसामग्र्या प्रजायते ।**
**तद्विशिष्टा चिदप्यादिमतीवेति न वस्तुतः ॥१३१॥**

ननु चक्षुरादेः करणत्वं प्रत्यक्षप्रमां प्रत्येव वक्तव्यम्, सा च प्रमा चैतन्यमेव, तस्यानादित्वेनाऽजन्यत्वात्; तथा च चैतन्यरूपप्रमाया नित्यसिद्धतया कथं चक्षुरादेस्तत्करणत्वेन प्रमाणत्वम्? इत्याशङ्क्याह—चित इति । चैतन्यस्याऽनादित्वेऽपि तदभिव्यञ्जकान्तःकरणवृत्तिरिन्द्रियसन्निकर्षादिसामग्र्या प्रजायते, इति तद्विशिष्टा चित् वृत्त्यवच्छिन्नं चैतन्यमपि आदिमदिवोच्यते, न तु वस्तुतस्तस्या आदिमत्त्वम् । तथा च चैतन्याभिव्यञ्जकवृत्तिजनकतया चक्षुरादेस्तत्करणत्वं युज्यते इत्यर्थः ॥ १३१ ॥

**ज्ञानावच्छेदकत्वात्तज्ज्ञानत्वमुपचर्य्यते ।**
**वृत्तौ साक्षान्न सा वृत्तिर्ज्ञानं तस्या जडत्वतः ॥१३२॥**

ननु वृत्तिरेव ज्ञानं किन्न स्यात्? तथा च तस्या एव प्रमात्वम्, कृतं चैतन्यस्य प्रमात्वकल्पनयेत्यत आह—ज्ञानेति । ज्ञानावच्छेदकत्वात्तस्य चिद्रूपस्यात्मनो मुख्यं ज्ञानत्वं वृत्तावुपचर्यते, न साक्षात् सा वृत्तिरवच्छेदकरूपा ज्ञानमित्यर्थः । कुत इत्यत आह—तस्या जडत्वत इति । तथा च चैतन्यमेव मुख्यं ज्ञानं वृत्तौ तदवच्छेदकत्वाद् ज्ञानत्वोपचार इत्यर्थः ॥ १३२ ॥

**वृत्तिज्ञानं मनोधर्म्मस्तथा कामादयः श्रुतेः ।**
**तदैक्याध्यासतश्चिद्गा भान्त्ययो दहतीतिवत् ॥१३३॥**

वृत्तिरूपज्ञानस्य मनोधर्म्मत्वं श्रुतिसिद्धमित्याह—वृत्तीति । 'कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्धीर्भीर्ह्रीरित्येतत्सर्वं मन एव' ( बृ० १ । ५ । ३ ) इति श्रुतेः धीशब्दवाच्यस्य वृत्त्यात्मकज्ञानस्य कामादीनाञ्च मनोधर्म्मत्वम् । ननु कामादीनामहमित्याद्यनुभवेनात्मधर्म्मत्वं किन्न स्यादिति तत्राह—तदैक्याध्यासत इति । तेनान्तःकरणेनैकाध्यासादेवात्मनस्तद्धर्मा अपि कामादयश्चिद्गाश्चैतन्यनिष्ठतयाऽवभासन्ते । तत्र दृष्टान्तमाह—अय इति । अयःपिण्डस्य दग्धृत्वाभावेऽपि दग्धृत्वाश्रयवह्नितादात्म्याध्यासाद् यथा अयो दहतीति व्यवहारः, तथाऽऽत्मचैतन्यस्य सुखाद्याकारपरिणाम्यन्तःकरणैक्याध्यासाद् 'अहं सुखी' इच्छामि, इत्यादिव्यवहारः, न तु वस्तुतः, तस्य निर्धर्म्मकत्वादित्यर्थः ॥ १३३ ॥

**अतो निर्धर्म्मकत्वेऽपि व्यवहारस्थले चितः ।**
**प्रमातृत्वादयो धर्म्मा स्वाविद्याकल्पिता अमी॥१३४**

ननु निर्धर्मकस्यात्मनः कथं प्रमातृत्वादयो धर्माः प्रतीयन्ते ? न च तेऽप्यन्तःकरणस्य स्युरिति वाच्यम्, तस्य जडत्वात्प्रमातृत्वाद्यनुपपत्तेरित्याशङ्क्याह—अत इति । यतश्चैतन्यस्याऽन्तःकरणेनैक्याध्यासात्तद्धर्म्माध्यासः, अतस्तस्य निर्धर्म्मकत्वेऽपि स्वाविद्याकल्पिता अमी सर्वलोकप्रसिद्धाः प्रमातृत्वादयो धर्म्मास्तदन्तःकरणैक्याध्यासादेव व्यवहारस्थले चितश्चैतन्यस्याऽवभासन्ते इत्यर्थः ॥ १३४ ॥

**यावदज्ञानमेते स्युर्व्यवहारे ह्यबाधिताः ।**
**तथाऽध्यक्षादिमानानि तदुक्तं साम्प्रदायिकैः ॥१३५॥**

न चाऽऽविद्यकत्वादेतेषां प्रमातृत्वादीनां शुक्तिरजतादिवत्कथं प्रामाणिकव्यवहारसाधकत्वम् ? नहि मृगतृष्णाम्भसि स्नानादिप्रामाणिकव्यवहारसिद्धिरित्याशङ्क्याह—यावदिति । एते प्रसिद्धाः प्रमातृत्वादयो व्यवहारेऽज्ञानपरिकल्पिते यावदज्ञानमज्ञानपर्य्यन्तमबाधिता अर्थक्रियासमर्थाः सन्ति । हीति लोकप्रसिद्धम् । भ्रान्तकाले भ्रान्तकार्य्यस्यार्थक्रियासमर्थलक्षणमबाधितत्वं स्वप्नादौ दृष्टत्वात् नाऽनुपपन्नमिति भावः । तथैवाऽध्यक्षादिप्रमाणान्यपि अर्थक्रियासमर्थानि भवन्ति । न चैतत्स्वकपोलकल्पितमिति शङ्क्यम् । साम्प्रदायिकत्वादित्याह—तदुक्तमिति । उक्तघटादिज्ञानप्रामाण्यमभियुक्तत्वेन प्रसिद्धैरेतदेव साम्प्रदायिकैरप्युक्तमित्यर्थः ॥ १३५ ॥

**देहात्मप्रत्ययो यद्वत्प्रमाणत्वेन कल्पितः ।**
**लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात् ॥१३६॥**

साम्प्रदायिकवचनमेवोदाहरति—देहात्मेति । यथा देहात्मत्वप्रत्ययः कल्पितो भ्रमोऽपि व्यवहाराङ्गतया प्रमाणत्वेनेष्यते वैदिकैः, तद्वल्लौकिकमध्यक्षादिकमात्मबोधावधिकव्यवहारकाले बाधाभावाद् व्यावहारिकं प्रमाणमिष्यताम् । वेदान्तानान्तु कालत्रयाबाध्यवस्तुबोधित्वात्तत्त्वावेदकप्रामाण्यमिति तु शब्दार्थः । आत्मनिश्चयाद्ब्रह्मसाक्षात्कारपर्य्यन्तमित्यर्थः । लौकिकमिति घटादिज्ञानमित्यर्थः ॥ १३६ ॥

**घटादीनामुपाधीनां भेदेनैव चितो भिदा ।**
**उपाधीनां लये तस्माच्चैतन्यमवशिष्यते ॥१३७॥**

चैतन्यस्यैक्येऽपि विषयाद्युपाधिभेदेनैव भेदो लौकिकव्यवहारविषयो ब्रह्मबोधे उपाधीनां बाधाच्चैतन्यमेवावशिष्यते इत्याह—घटादीनामिति ॥ १३७ ॥

**अतः औपाधिको भेदो यत्र याति लयं चितः ।**
**तत्राऽपरोक्षविज्ञानं जायते लौकिके स्फुटम् ॥१३८॥**

यत उपाधिकृतभेदविलये चैतन्यावशेषस्तस्माल्लौकिकघटादिज्ञानमपि तद्भेदविलये एव सिद्ध्यतीत्याह—अत इति । यत्र घटादिविषये चितश्चैतन्यस्यौपाधिको भेदो विलयं प्राप्नोति, तत्र घटादिविषयेऽपरोक्षज्ञानं लौकिके लोकव्यवहारेऽत एव जायते इति योजना ॥ १३८ ॥

**उपाध्योरेकदिक्स्थत्वे योग्यत्वे सति चेष्यते ।**
**तथैककालिकत्वस्योपहिताऽभेदहेतुता ॥१३९॥**

ननूपाधीनां विद्यमानदशायां कथं तदुपहितस्य चैतन्यस्याभेदः ? तत्राह—उपाध्योरिति । विभाजकयोरप्यन्तःकरणवृत्तिघटादिविषययोरेकदेशस्थत्वे सति, योग्यत्वे च सति, एककालिकत्वस्योपहिताभेदे हेतुत्वमिति योजना । पूर्वानुभूतसुखादिस्मृतावतिव्याप्तिवारणायैककालिकत्वमिति विशेषणम् । धर्मादावतिव्याप्तिवारणाय योग्यत्वे इत्युक्तम् । तथा च तत्तदिन्द्रिययोग्यवर्त्तमानविषयावच्छिन्नचैतन्याभिन्नत्वं तत्तदाकारवृत्त्यवच्छिन्नज्ञानस्य तत्तदंशे प्रत्यक्षत्वम् । एवञ्चोपहिताभेद एव सिद्धः सन् सर्वत्र ज्ञानज्ञेयादिव्यवहारहेतुरिति भावः ॥ १३९ ॥

**ज्ञानस्येन्द्रियजन्यत्वं न साक्षात्त्वे प्रयोजकम् ।**
**ईशज्ञानस्य साक्षात्त्वानापत्तेरजनेरपि ॥ १४० ॥**

अत इन्द्रियजन्यत्वं न ज्ञानस्य साक्षात्त्वे प्रयोजकमित्याह—ज्ञानस्येति । अजनेरिन्द्रियाद्यजन्यस्य नित्यस्येत्यर्थः ॥ १४० ॥

**घटोऽयमिति चाऽध्यक्षे प्रमाणचित इष्यते ।**
**घटावच्छिन्नचैतन्याभेद एव प्रयोजकम् ॥ १४१ ॥**

तर्हि ज्ञानगतस्य प्रत्यक्षत्वस्य किं प्रयोजकमित्याकाङ्क्षायामाह—घट इति । प्रमाणचैतन्यस्य घटावच्छिन्नचैतन्याभेद एव घटोऽयमिति प्रत्यक्षे प्रयोजकमिष्यते इति योजना । योग्यविषयावच्छिन्नचैतन्याभिन्नत्वं प्रमाणचैतन्यस्य ज्ञानगतप्रत्यक्षत्वस्य प्रयोजकमित्यर्थः ॥ १४१ ॥

**अतः प्रमात्रभिन्नत्वं प्रत्यक्षत्वं घटादिषु ।**
**मातृसत्ताऽतिरिक्ता नो सत्ताऽध्यस्तघटादिषु॥ १४२॥**

विषयगतस्य प्रत्यक्षत्वस्य प्रयोजकमाह—अत इति । यतश्चैतन्याभेद एव सर्वत्र ज्ञानादिव्यवहारे प्रयोजकम्, अतः प्रमातृचैतन्याभिन्नत्वं घटादिषु प्रत्यक्षत्वम् । ननु कथं घटादेरन्तःकरणावच्छिन्नचैतन्याभेदः ? 'अहमिमं पश्यामि' इति भेदानुभवविरोधादिति तत्राह—मातृसत्तेति । प्रमात्रभेदो नाम न तावदैक्यं किन्तु प्रमातृसत्तातिरिक्तसत्ताकत्वाभावः । तथा च अध्यस्तघटादिषु प्रमातृसत्तातिरिक्तसत्तैव नास्तीत्यर्थः ॥ १४२ ॥

**स्वावच्छिन्नचिदध्यस्ततया कुम्भादिवस्तुनः ।**
**न ततो भिन्नसत्ताऽस्ति तथाऽनङ्गीकृतेरपि ॥ १४३॥**

एतदेव विवृणोति—स्वावच्छिन्नेति । घटाद्यवच्छिन्नचैतन्येऽध्यस्तत्वेन कुम्भादिवस्तुनस्ततः स्वावच्छिन्नचैतन्याद्भिन्ना सत्ता नास्ति । कुत इत्यत आह—तथाऽनङ्गीकृतेरिति । अध्यस्तस्याऽधिष्ठानातिरिक्तत्वानङ्गीकारादित्यर्थः ॥ १४३ ॥

**न वा विषयचैतन्यं प्रमातुर्भिद्यते चितः।**
**उपाध्योरेकदिक्स्थत्वे को भेदं तत्र कल्पयेत्॥१४४॥**

**अतो घटाद्यधिष्ठानतया सत्तात्मनश्चितः।**
**घटादिसत्ता नान्येति सिद्धा तदपरोक्षता ॥ १४५ ॥**

ननु घटाद्यवच्छिन्नब्रह्मचैतन्ये घटादेरध्यासात्तेन तस्याऽभेदोऽस्तु, न तु प्रमातृचैतन्येन तस्यान्तःकरणावच्छिन्नतया ततो भेदादित्याशङ्क्याह—न वेति। विषयचैतन्यं पूर्वोक्तप्रकारेण न प्रमातृचैतन्याद्विलक्षणम्, किन्तु प्रमातृचैतन्यमेव। उपाध्योर्विभाजकयोरन्तःकरणघटयोरेकदेशस्थत्वे तत्रोपहितचैतन्ययोर्विषयप्रमातृचैतन्ययोर्भेदं कः कल्पयेत्? इति प्रमातृचैतन्यस्यैव घटाद्यधिष्ठानतया प्रमातृसत्तैव घटादिसत्ता नान्या, अधिष्ठानसत्तातिरिक्ताया आरोपितसत्ताया अनङ्गीकारादिति सिद्धं घटादेरपरोक्षत्वमिति द्वयोरन्वयः ॥ १४४—१४५ ॥

**वृत्तेर्निर्गमनाभावादनुमित्यादिकस्थले।**
**भेदकोपाधिसद्भावान्न तथात्वमपीरितम् ॥ १४६ ॥**

ननु "पर्वतो वह्निमान्" इत्यादावपि वह्न्यादेः प्रमातृसत्तातिरिक्तसत्ताकत्वाभावरूपलक्षणस्य सत्त्वात् प्रत्यक्षत्वापत्तिरित्याशङ्क्य तत्रान्तःकरणस्य वह्न्यादिदेशनिर्गमाभावेन वह्न्यवच्छिन्नचैतन्यस्य प्रमातृचैतन्यस्यानात्मकतया वह्न्यादिसत्ता प्रमातृसत्तातो भिन्नेति नाऽतिव्याप्तिरित्याह—वृत्तेरिति ॥ १४६ ॥

**वृत्तौ वृत्त्यन्तराभावेऽप्यस्ति लक्षणमक्षतम्।**
**प्रमातृचितिसत्तातोऽभिन्नसत्ताकतात्मकम् ॥१४७॥**

ननु वृत्तिविषयवृत्त्यन्तरानङ्गीकारेण तत्र स्वाकारवृत्त्युपहितत्वाभावादव्याप्तिरित्याशङ्क्याह—वृत्ताविति। अनवस्थाभिया वृत्तिगोचरवृत्त्यन्तरानङ्गीकारेऽपि वृत्तेः स्वविषयत्वाभ्युपगमेन स्वविषयवृत्त्युपहितप्रमातृचैतन्याभिन्नसत्ताकत्वस्य तत्रापि भावान्नाऽव्याप्तिरित्यर्थः ।।१४७।।

**तथान्तःकरणस्यापि तद्धर्म्माणाञ्च लक्ष्यता ।**
**तत्तदाकारवृत्तेः स्वीकारादेव भवेत्तया ॥ १४८ ॥**

एवञ्चोक्तलक्षणस्य सर्वत्र सत्त्वान्नाऽव्याप्तिरित्याह—तथेति । अन्तःकरणस्य धर्म्मिणस्तस्य धर्म्मा ये कामादयस्तेषाञ्चास्मिन् लक्षणे लक्ष्यत्वमस्त्येव, कुतः ? इत्यत आह—तत्तदिति । सुगममन्यत् ।। १४८ ।।

**नहि वृत्तिं विना साक्षिविषयत्वं मतञ्च नः ।**
**साक्षिमात्रैकवेद्यत्वं किन्त्वस्त्यन्यानपेक्षितम्॥१४९॥**

**यदिन्द्रियानुमानादिमानव्यापारमन्तरा ।**
**साक्षिमात्रैकवेद्यत्वं साक्षिगोचरताऽस्ति सा ॥१५०॥**

नन्वन्तःकरणतद्धर्म्मादीनां वृत्तिविषयत्वाभ्युपगमे केवलसाक्षिविषयत्वाभ्युपगमविरोधः स्यादिति तत्राह—नहीति । किन्त्विन्द्रियानुमानादिप्रमाणव्यापारमन्तरेण साक्षिविषयत्वं केवलसाक्षिवेद्यत्वमिति द्वयोर्योजना ।। १४९—१५० ।।

**अतोऽहङ्कारटीकायामाचार्य्यैरहमाकृतिः ।**
**अन्तःकरणवृत्तिः स्वीकृता साक्ष्यवभासने ॥ १५१ ॥**

नेदं स्वकपोलकल्पितमिति पञ्चपाद्याः सम्मतिमाह--अत इति। यतोऽन्तःकरणादिवृत्तिविषयत्वाङ्गीकारेऽभ्युपगमाविरोधः, अतोऽहङ्कारटीकायामहंवृत्त्यवच्छिन्नमेवान्तःकरणं चैतन्यस्य विषयभावमापद्यते इत्यहङ्कारटीकाविवरणे इत्यर्थः। आचार्य्यैर्विवरणाचार्य्यैरहमाकारान्तःकरणवृत्तिः स्वीकृता साक्षिवेद्यत्वविषये इत्यर्थः ॥१५१॥

**अत एव मृषारूप्यस्थलेऽस्मत्साम्प्रदायिकैः।**
**स्वीकृता रजताकाराऽविद्यावृत्तिर्मृषात्मिका॥१५२॥**

यथोक्तसाक्षिवेद्यत्वे साम्प्रदायिकत्वं दर्शयति—अत एवेति। प्रमाणव्यापारानपेक्षसाक्षिविषयत्वादेव प्रातिभासिकरजतस्थले रजताकाराऽविद्यावृत्तिरनिर्वाच्या साम्प्रदायिकैरङ्गीकृता। तदङ्गीकारस्तु स्वगोचरवृत्त्युपहितचैतन्यभिन्नसत्ताकत्वाभावस्य विषयापरोक्षत्वसिद्धये। न च वृत्तिद्वयाङ्गीकारे गुरुमतप्रवेशः, वृत्तिद्वयप्रतिबिम्बितचैतन्यस्यैकस्य सत्यमिथ्यातादात्म्यावगाहित्वेन भ्रमत्वस्वीकारादिति तात्पर्य्यार्थः ॥ १५२ ॥

**तस्मात्स्वाध्यस्तमेवेदं विश्वं चितिरखण्डिता।**
**मातृमानादिरूपेण साऽवभासयति स्वयम् ॥१५३॥**

ततः किमित्यत आह—तस्मादिति। यतो व्यावहारिके प्रातिभासिके च स्थलेऽवभासकत्वं चैतन्यस्यैव, तस्मात्स्वस्मिंश्चैतन्येऽध्यस्तं विश्वं कार्य्यकारणरूपमिदं प्रत्यक्षादिगोचरं साक्षिगोचरञ्च सा स्वप्रकाशतया श्रुतिस्मृतिविद्वदनुभवप्रसिद्धाऽखण्डिता चितिरखण्डचैतन्यब्रह्माभिधा संविद् मातृमानादिरूपेणावभासयति। स्वयं त्वतदुपहितत्वेन भासमानापि निरपेक्षतया प्रकाशयतीत्यर्थः ॥ १५३ ॥

**ज्ञानावच्छेदिका वृत्तिस्तदभिव्यञ्जिका मता ।**
**तज्जनौ सन्निकर्षाणां योग्यानां विनियोगतः ॥१५४॥**

न चान्तःकरणवृत्तीनां विषयप्रकाशकत्वम्, जडत्वात्; किन्तु तदवच्छेदकत्वात् तदभिव्यञ्जकमात्रेण तत्र ज्ञानत्वव्यवहार इत्याह—ज्ञानेति। तज्जनौ ज्ञानावच्छेदकवृत्त्युत्पत्तौ योग्यानां यथोचितानां सन्निकर्षाणां विनियोगतः "सार्वविभक्तिकस्तसिः" उपयोग इत्यर्थः ॥ १५४ ॥

**तेऽपि संयोगसंयुक्ततादात्म्यप्रमुखा मताः ।**
**चितोऽभिव्यञ्जकोत्पत्तौ विनियुक्ता यथायथम् ॥१५५॥**

नन्विन्द्रियस्य तत्सन्निकर्षस्य च भवन्मते वैयर्थ्यं चैतन्यरूपस्य घटादिज्ञानस्येन्द्रियसन्निकर्षाजन्यत्वादित्याशङ्क्य तयोर्वृत्तिजनने विनियोगान्न वैयर्थ्यमित्युक्तमपि पुनस्तत्स्वरूपकथनेन द्रढयति—तेऽपीति । एवं घटादेः प्रत्यक्षत्वे संयोगसंयुक्ततादात्म्यसंयुक्ताभिन्नतादात्म्यानामिन्द्रियस्य च घटतद्गतरूपतद्धर्मरूपत्वाद्यवच्छिन्नचैतन्याभिव्यञ्जकवृत्तिजनने यथायोग्यं विनियोग इत्यर्थः ॥ १५५ ॥

**सा च वृत्तिश्चतुर्धा स्यात् संशयादिविभेदतः ।**
**मनोबुद्ध्यादिभेदेन वृत्तिमच्चतुर्विधम् ॥ १५६ ॥**

नन्वेवमपि चैतन्यस्यैव ज्ञानत्वात्तत्सन्निकर्षस्य तत्रानुपयोगस्तदवस्थ इत्याशङ्क्य यथैकमप्यन्तःकरणं चतुर्विधवृत्त्यवच्छिन्नं चतुर्विधमित्युच्यते, एवमजन्यमपि चैतन्यमिन्द्रियसन्निकर्षजन्यवृत्त्यवच्छिन्नं तज्जन्यमित्याशयेनाह—सा चेति । यद्यपि वृत्तिविशिष्टचैतन्यमादिमदित्यत्र विशिष्टचैतन्यस्येन्द्रियसन्निकर्षजन्यत्वमुक्तमेव, तथापि तस्यैव दृष्टान्तमुखेनात्रोपादानान्न पौनरुक्त्यम्; अन्यथा यथाश्रुते

प्रत्यक्षनिरूपणप्रस्तावेऽन्तःकरणचातुर्विध्यनिरूपणमसङ्गतं स्यादिति तात्पर्य्यं द्रष्टव्यम् ॥ १५६ ॥

**मनोबुद्धिरहङ्कारश्चित्तं करणमान्तरम् ।**
**संशयो निश्चयो गर्वः स्मरणं विषया इमे ॥ १५७ ॥**

उक्तेऽर्थेऽभियुक्तवचनं दर्शयति—मन इति ॥ १५७ ॥

**तच्चाऽध्यक्षं द्विधा तत्र सविकल्पादिभेदतः ।**
**सविकल्पन्तु वैशिष्ट्यावगाहि ज्ञानमुच्यते ॥१५८॥**

एवं विषयप्रत्यक्षत्वे प्रयोजकान्तरनिरूपणात् तद्व्यावृत्तमपि ज्ञानस्य प्रत्यक्षत्वप्रयोजकं निर्दुष्टमित्युक्तम्, इदानीं तद्विभजते—तच्चेति । सकलवादिसम्मतत्वेन सर्वव्यवहारहेतुत्वेन प्रथमोद्दिष्टं सविकल्पकं प्रथमं निरूपयति—तत्र सविकल्पन्त्विवति । तयोर्मध्ये वैशिष्ट्यावगाहीति न तु विशेषणज्ञानजन्यत्वमित्यर्थः । तज्जन्यत्वस्य प्रमाणाभावेनानभ्युपगमात् । वैशिष्ट्यावगाहित्वमिच्छादावप्यत आह—ज्ञानमिति । ज्ञानत्वञ्च निर्विकल्पकेऽप्यस्तीत्यत उक्तम्—वैशिष्ट्यावगाहीति ॥ १५८ ॥

**निर्विकल्पं हि संसर्गानवगाहि तदुच्यते ।**
**घटं वेद्मीति तत्राद्यं सोऽयमित्यादि चान्तिमम्॥१५९॥**

**एवं तत्त्वमसीत्यादिवाक्यजन्यं भ्रमापहम् ।**
**स्यान्निर्विकल्पकं ज्ञानं जीवब्रह्मैक्यगोचरम् ॥१६०॥**

निर्विकल्पकं लक्षयति—संसर्गाऽनवगाहीति । निर्विकल्पकलक्षणे उदाहरणाभावमाशङ्क्य लोकवेदयोः प्रत्यक्षसिद्धं तदित्याह—सोऽयमिति । ननु सोऽयं देवदत्त इत्यैक्यप्रत्यभिज्ञयैव वाक्यप्रयोगाद्देशकालोपलक्षितदेवदत्तलक्षणाभेदविषयमिन्द्रियजन्यमप्यस्ति प्रत्यक्षम्, कथं शाब्दमेवोदाहृतम् ? इति चेत्, सत्यम्; अभेदविषयज्ञानमिन्द्रियजन्यमिति, तथापि न तन्निर्विकल्पकम्, सन्निकर्षवशादुपलक्षणदेशकालादेरपि भानसम्भवात् । शाब्दे ज्ञाने तु तात्पर्य्यविषयस्यैव भाननियमादभेदमात्रविषयत्वमित्यतो निर्विकल्पकमिति भावः । आदिपदात् प्रकृष्टप्रकाशश्चन्द्र इति वाक्यजन्यज्ञानं ग्राह्यम् । अखण्डार्थविषयकं ज्ञानं निर्विकल्पकमित्याह—एवमिति । यथा सोऽयं देवदत्त इति वाक्यजन्यज्ञानस्य सन्निकृष्टविषयतया वहिर्निःसृतान्तःकरणवृत्त्यभ्युपगमेन देवदत्तावच्छिन्नचैतन्यस्य प्रमातृवृत्त्यवच्छिन्नचैतन्यस्य चाऽभिन्नतया प्रत्यक्षत्वम्, एवं तत्त्वमसीति वाक्यजन्यज्ञानस्यापि; तत्र प्रमातुर्विषयतया तदुभयाभेदस्य सत्त्वादिति द्वयोस्तात्पर्य्यार्थः ॥ १५९—१६० ॥

**तत्र प्रमातुरेवास्य विषयत्वेन साक्षिणः ।**
**उभयोरप्यभेदस्य सत्त्वादैक्यप्रमा भवेत् ॥ १६१ ॥**

**न तन्त्रं वाक्यजज्ञानविषयत्वे पदार्थगः ।**
**संसर्गः किन्तु तात्पर्य्यविषयत्वं प्रयोजकम् ॥ १६२ ॥**

ननु वाक्यजन्यज्ञानस्य पदार्थसंसर्गावगाहितया कथं निर्विकल्पकत्वम् ? इत्याशङ्क्याह—नेति । वाक्यजन्यज्ञानविषयत्वे हि न पदार्थसंसर्गत्वं तन्त्रम्, अनभिमतसंसर्गस्यापि वाक्यजन्यज्ञानविषयत्वापत्तेः । तथा हि—भोजनप्रकरणे 'सैन्धवमानय' इत्यत्राऽनभिमतस्याऽश्वादिसंसर्गस्य, 'यष्टीः प्रवेशय' इत्यत्र दण्डसंसर्गस्य च

शक्यजन्यज्ञानविषयत्वापत्तिः स्यादिति, किन्तु तात्पर्य्यविषयत्वं प्रयोजकमित्यर्थः ॥ १६१—१६२ ॥

**प्रकृते च सदेवेत्याद्युपक्रम्योपसंहृतम् ।**
**तत्सत्यमिति वेदान्ते लिङ्गं तात्पर्य्यनिर्णये ॥१६३॥**

**उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम् ।**
**अर्थवादोपपत्ती च लिङ्गं तात्पर्य्यनिर्णये ॥१६४॥**

अद्वितीयब्रह्मण एव तात्पर्य्यविषयत्वम्, वेदस्यापौरुषेयत्वेऽपि तात्पर्य्यनिर्णायकषड्विधलिङ्गसत्त्वादित्याह—प्रकृते चेति द्वाभ्याम् । अद्वितीयं ब्रह्म वाक्यार्थः "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" ( छा० ६ । २ । २ ) इत्युपक्रान्तस्य "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" ( छा० ६ । ७ । ४ ) इति तेनैकरूपेणोपसंहृत्य "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि" ( छा० ६ । ८, ९, १०, ११, १२, १३, १४, १५, १६ ) इति नवकृत्वोऽभ्यस्तस्य प्रमाणान्तरानवगतस्य "येनाश्रुतं श्रुतं भवति" ( छा० ६ । १ । ३ ) इत्यादिवाक्यात्प्ररोचितस्य मृल्लोहतप्तपरशुग्रहणादिदृष्टान्तैरद्वितीयत्वेनोपपादितस्य ब्रह्मणो ज्ञानाद् "आचार्य्यवान्पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्ये" ( छा० ६ । १४ । २ ) इत्याचार्य्योपदेशजनितान्निर्विचिकित्साद् निरतिशयानन्दलक्षणमोक्षफलस्यावगतेस्तस्यैव तात्पर्य्यविषयत्वादिति तात्पर्य्यार्थः । तस्मादुपक्रमादेस्तात्पर्य्यग्राहकत्वाभ्युपगमात् सिद्धं सत्याद्यवान्तरवाक्यजन्यस्य "तत्त्वमसि" ( छा० ६ । ८ । ७ ) "अयमात्मा ब्रह्म" ( बृ० २ । ५ । १९ ) "अहं ब्रह्मास्मि" ( बृ० १ । ४ । १० ) इत्यादि महावाक्यजन्यस्य च ज्ञानस्य निर्विकल्पकत्वमिति भावः ॥ १६३—१६४ ॥

**तत्त्वमस्यादिवाक्यानामखण्डार्थत्वमित्यदः ।**
**संसर्गासङ्गिसम्यग्धीजनकत्वं यदेव तत् ॥ १६५ ॥**

इदानीमखण्डार्थत्वप्रसिद्धिरपि निर्विकल्पकहेतुत्वेन प्रमाणमित्याह—तत्त्वमिति । यत्पदार्थसंसर्गानवगाहियथार्थज्ञानजनकत्वमिदमेव तत्त्वमस्यादिवाक्यानामखण्डार्थत्वम् । न तु निर्भेदवस्तुपरत्वम्, तस्य भेदाभावविशिष्टवस्तुपरत्वस्य निर्घटभूतलमित्यादिवाक्यसाधारण्यात्; प्रकृते तदभावाच्च । नचाऽन्यदखण्डार्थत्वम्, तस्याऽनिर्वचनादिति भावः । राजपुरुष इत्यादौ संसर्गपरे वाक्येऽतिव्याप्तिवारणायोक्तम्—संसर्गानवगाहीति । तत्रैवाऽभेदतात्पर्य्यभ्रमात् पदार्थसंसर्गानवगाहितदभेदभ्रमजनके तत्प्रसङ्गवारणाय यथार्थेति द्रष्टव्यम् ॥ १६५ ॥

**संसर्गासङ्गिसम्यग्धीहेतुता या गिरामियम् ।**
**उक्ताऽखण्डार्थता यद्वा तत्प्रातिपदिकार्थता ॥१६६॥**

उक्तेऽर्थे चित्सुखाचार्य्यसम्मतिमाह—संसर्गेति । या संसर्गासङ्गिसम्यग्धीहेतुता, इयमखण्डार्थता उक्तेति सम्बन्धः । लक्ष्यं निर्दिशति—गिरामिति । कार्य्यकारणभावरहितद्रव्यविषयसमानाधिकरणापर्यायशब्दानामित्यर्थः । प्रातिपदिकार्थमात्रपरत्वमखण्डार्थत्वं वेत्यर्थः । यस्य वाक्यस्य यत्प्रातिपदिकार्थमात्रपरत्वं तस्य तत्राऽखण्डार्थत्वम्, अतो नान्यत्र तत्प्रसङ्गः । तत्पदघटितलक्षणाभिप्रायं तद्ग्रहणमिति द्रष्टव्यम् ॥ १६६ ॥

**जीवसाक्षीशसाक्ष्येतत्प्रत्यक्षं द्विविधं पुनः ।**
**जीवश्चिद् बुद्ध्यवच्छिन्ना तत्साक्ष्युपहिताऽमुया १६७**

एवं सविकल्पकनिर्विकल्पकभेदाद् द्वैविध्येन निरूपितस्य प्रत्यक्षज्ञानस्य प्रकारान्तरेण द्वैविध्यमाह—जीवसाक्षीति। साक्षिपदं तज्जन्यपरम्। तथा च जीवसाक्षिजन्यमीश्वरसाक्षिजन्यमिति द्विविधमित्यर्थः। अत एव "साक्षिद्वैविध्यतः प्रोक्तं प्रत्यक्षं द्विविधं यतः" इत्युत्तरग्रन्थोऽपि सङ्गच्छते। न च सविकल्पकादिभेदेन, प्रत्यक्षज्ञाननिरूपणानन्तरं साक्षिज्ञानद्वैविध्यनिरूपणाधीनत्वादिति तन्निरूपयति—जीव इति। यद्यपि जीवस्वरूपं षष्ठे निरूपयिष्यते इति नेह तन्निरूपणं युक्तम्, तथापि जीवतत्साक्षिणोर्भेदं निरूपयितुं जीवस्वरूपकथनमित्यवधेयम्। तत्र जीवो नामाऽन्तःकरणावच्छिन्नं चैतन्यम्, तत्साक्षी तु अमुनाऽन्तःकरणेनोपहितं चैतन्यमित्यर्थः ॥ १६७ ॥

**विशेषणत्वोपाधित्वरूपेणाऽस्त्यनयोर्भिदा।**
**जीवतत्साक्षिणोरन्तःकरणस्य द्वयोरपि ॥ १६८ ॥**

व्यावर्त्तकान्तःकरणस्यैकत्वाज्जीवतत्साक्षिणोर्भेदः किन्निबन्धनः? इत्याशङ्क्याह—विशेषणत्वेति। विशेषणं कार्यान्वयि, अवच्छेद्यं यदन्वयि तदन्वयीति यावत्। तथा च कार्यान्वयित्वे सति व्यावर्त्तकत्वं विशेषणत्वं पर्यवस्यति। तेन घटपटौ पश्यति देवदत्त इत्यत्र घटपटयोरेकदर्शनक्रियान्वयित्वेऽप्यव्यावर्त्तकत्वाद् न परस्परविशेषणत्वापत्तिरिति भावः। उपाधिश्च कार्य्यानन्वयी, व्यावर्त्तको वर्त्तमानश्च। यथा कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रमित्यत्र कर्णशष्कुली उपाधिरित्यर्थः। रूपविशिष्टो घटो नित्य इत्यत्र रूपं विशेषणम्। तथा चान्तःकरणस्य विशेषणत्वरूपेण चैतन्यविषये प्रवेशो जीवत्वमुपाधित्वरूपेण तत्साक्षित्वमित्यनयोर्द्वयोर्भेद इत्यर्थः ॥ १६८ ॥

**जडान्तःकरणस्यावभासकत्वाद्ययोगतः।**
**जडभासकचैतन्योपाधित्वं स्वीकृतं ततः ॥ १६९ ॥**

नन्वन्तःकरणस्यैव विषयावभासकत्वं किन्न स्यात् ? इत्याशङ्क्यान्तःकरणस्य जडतया विषयावभासकत्वायोगेन विषयावभासकचैतन्योपाधित्वमित्याह —जडेति । स्पष्टम् ॥ १६९ ॥

**अन्तःकरणभेदेन जीवसाक्षी विभिद्यते ।**
**चैत्रेणाऽवगतं मैत्रो न वेत्तीति व्यवस्थया ॥ १७० ॥**

ननु जीवसाक्षिणो ब्रह्माभेदेन स्वप्रकाशत्वे तद्वदेव सर्वविषयानुसन्धातृत्वापत्तौ चैत्रावगते मैत्रस्याप्यनुसन्धातृत्वप्रसङ्ग इति चेत्, न; किं चैत्रसाक्षिणो मैत्रावगतविषयानुसन्धातृत्वं स्वप्रकाशचैतन्याभेदादापाद्यते ? सर्वगत्वादिविशिष्टचैतन्याभेदाद्वा ? मैत्रोपहितचैतन्याभेदाद्वा ? न तावदाद्यः, तस्य निर्विकारत्वेन तदभेदस्य सर्वविषयानुसन्धानानापादकत्वात् । न द्वितीयः, अन्तःकरणोपहितस्य जीवसाक्षिणः परमेश्वरेण मायाविशिष्टेन तदुपहितेन वाऽत्यन्ताभेदानभ्युपगमात् । न तृतीय इत्याह—अन्तःकरणेति । चैत्रमैत्रान्तःकरणयोर्भिन्नदेशस्थत्वेन तदुपहितचैतन्ययोरभेदशङ्कानवकाशादित्यर्थः ॥ १७० ॥

**अविद्योपाधिको जीवसाक्ष्येक इति निर्णयः ।**
**कृतः पूर्वत्र सन्दर्भे तत्त्वैक्यप्रतिपत्तये ॥ १७१ ॥**

ननु प्रथमप्रकरणे महता प्रयत्नेन साक्ष्यैक्यं प्रसाध्येदानीं तन्नानात्ववर्णने पूर्वापरविरोधः स्यादित्याशङ्क्याह—अविद्येति । अविद्योपाधेरेकत्वात् तदुपहितो जीवसाक्षी एक एवेति निर्णयस्तत्त्वैक्यावबोधसिद्धये पूर्वत्र सन्दर्भे प्रथमप्रकरणे कृतः । तथा च तत्त्वज्ञानं यथा यथाऽधिकारिणामुत्पद्यते, तथा तथा प्रक्रियां निर्माय तत्त्वविद्भिर्यत्यते, न तु कस्याञ्चित् प्रक्रियायामाग्रहस्तत्त्वविदाम् । तदुक्तम्—

"यया यया भवेत् पुंसां व्युत्पत्तिः प्रत्यगात्मनि।
सा सैव प्रक्रिया ज्ञेया साध्वीत्याचार्य्यभाषितम् ॥" (वा०) इति।

अतो न तत्त्वे विगानम्, अपि तु तद्बोधनप्रकारभेदो बोध्यपुरुषचित्तवैषम्यानुसारेणैव तत्र तत्र विद्वद्भिर्निर्णीयते। मुख्यं श्रुतिमतन्तु तत्त्वमद्वयं ब्रह्मैवेति भावः ॥ १७१ ॥

**व्यवहारभिदामत्र बुद्ध्युपाधिकृताञ्चितः।**
**स्वीकृत्य साक्षिभेदोक्तिर्न विरोधो मनागतः ॥१७२॥**

व्यवहारप्रयोजनकभेदमत्र प्रतिकर्म्मव्यवस्थास्थले चैतन्यस्य बुद्ध्युपाधिकृतमभ्युपगम्य साक्षिभेदोक्तिः, न तु वस्तुतः कश्चिदपि भेदलवो युक्तिपथमवतरतीति न पूर्वोत्तरविरोधो मनागपीत्यर्थः ॥ १७२ ॥

**मायोपहितचैतन्यमीशसाक्षीति कथ्यते।**
**एकत्वात्तदुपाधेश्च साक्षिणोऽप्यैक्यमेव हि ॥१७३॥**

सर्वविश्वोपादानभूतमायाया अपि विशेषणत्वोपाधित्वाभ्यामीशतत्साक्षिणोर्भेदहेतुत्वमस्तीत्याह—मायेति। तदुपाधेरेकत्वान्न तत्साक्षिनानात्वमित्याह—एकत्वादिति। ईशसाक्षिण ऐक्यमेव। हीति श्रुतिस्मृतिन्यायप्रसिद्धिद्योतनार्थः ॥ १७३ ॥

**मायान्तु प्रकृतिं विद्याद् मायिनन्तु महेश्वरम्।**
**अजामेकामिति श्रौतवाक्येष्वेका विनिश्चिता ॥१७४॥**

ननु "इन्द्रो मायाभिः पुरुरूप ईयते" ( बृ० २। ५। १९ ) इति श्रुतेर्मायाया अप्यनेकत्वं श्रूयते, अतः कथमुक्तं मायाया एकत्वम्? इत्याशङ्क्य मायागतशक्तिभेदविषयतया बहुवचनोपपत्तेर्न विरोधो

मायैकत्वश्रुतिस्मृतीनामनेकत्वेन तद्विरोधाच्च साऽन्यपरेत्यभिप्रेत्याह—मायामिति ॥ १७४ ॥

**तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते ।**
**योगीमायाममेयाय तस्मै विद्यात्मने नमः ॥ १७५ ॥**

स्मृतिवचनमाह—तरतीति । निवृत्तिरेवाऽत्र तरणम्, 'तरति ब्रह्महत्याम्' इत्यादौ निवृत्तौ तच्छब्दप्रयोगान्नद्यादेरिव लङ्घनस्याभावात्, तथा च मायामविद्यां तरतीति सामानाधिकरण्येन ज्ञाननिवर्त्त्यत्वनिर्देशान्मायाविद्ययोर्भेदाभावस्तदेकत्वञ्च निश्चीयत इति भावः ॥१७५॥

**इत्येकवचनादेव लाघवानुगृहीततः ।**
**निश्चीयते तदेकत्वं साक्ष्येकत्वमतो मतम् ॥ १७६ ॥**

ननु श्रुतिस्मृत्यनेकत्वमात्राद् न मायैकत्वसिद्धिरेकेनापि बलवता बहूनां बाधदर्शनादित्याशङ्क्य लाघवानुग्रहादेकत्वश्रुतीनामेव प्राबल्यमित्याह—इत्येकेति । ततश्चोपाधिभूतमायाया एकत्वादीशसाक्ष्येकत्वं सिद्धमित्यर्थः ॥ १७६ ॥

**मायावच्छिन्नचैतन्यं परमेश्वर ईरितः ।**
**तस्या विशेषणत्वेन परमेश्वरतोच्यते ॥ १७७ ॥**

**साक्षित्वं तदुपाधित्वे तत्र भेदस्तु धर्म्मयोः ।**
**विभेदो वस्तुतो नैव धर्मिणोरीशसाक्षिणोः ॥१७८॥**

ईश्वरसाक्षिणः परमेश्वराद्भेदं दर्शयितुं तत्स्वरूपमाह—मायेति । तस्या मायाया विशेषणत्वेन प्रवेशे परमेश्वरत्वमुच्यते, तस्या उपाधित्वे

तत्साक्षित्वमिति । तत्र धर्म्मयोरीश्वरत्वसाक्षित्वयोरेव भेदो धर्मिणोरीशसाक्षिणोर्नैव भेदो वस्तुतः स्वरूपादिति द्वयोर्योजना ॥१७७--१७८॥

**साक्षिद्वैविध्यतः प्रोक्तं प्रत्यक्षं द्विविधं यतः ।**
**सामान्यलक्षणं चित्त्वं प्रत्यक्षस्य ततः स्मृतम् ॥१७९॥**

एवं साक्षिद्वैविध्यनिरूपणाज्जीवेश्वरसाक्षिजन्यभेदेन प्रत्यक्षज्ञानस्य द्वैविध्यं सिद्धमित्याह—साक्षीति । नन्वेवमपि शुक्तिरूप्यादिभ्रमे प्रत्यक्षलक्षणस्यातिव्याप्तिरिति चेत्, न । न तावद्विषयप्रत्यक्षलक्षणस्य तद्विषयेऽतिव्याप्तिः, तस्य केवलसाक्षिवेद्यत्वाभ्युपगमात् । नाऽपि ज्ञप्तिगतप्रत्यक्षलक्षणस्य तत्रातिप्रसङ्गः, भ्रमस्यापि स्वांशे प्रत्यक्षप्रमाणतया सामान्यलक्षणे लक्ष्यत्वादित्यभिप्रेत्याह—सामान्येति । ज्ञप्तिगतप्रत्यक्षस्य सामान्यलक्षणं चित्त्वमेव यतो हेतोस्तस्मात्तस्य च भ्रान्तिरूपप्रत्यक्षे नाऽतिव्याप्तिः, भ्रमप्रमासाधारणप्रत्यक्षत्वसामान्यनिर्वचने तस्याऽपि लक्ष्यत्वादित्यर्थः ॥ १७९ ॥

**अबाधितत्वाधिक्यं स्यात्प्रमायां व्यवहारतः ।**
**सा प्रत्यक्षादिभेदेन षोढा वेदान्त इष्यते ॥१८०॥**

यदा तु प्रत्यक्षप्रमाया एव लक्षणं वक्तव्यम्, तदा पूर्वोक्तलक्षणे बाधितत्वं विषयविशेषणं देयम्, शुक्तिरूप्यादिभ्रमस्य संसारकालीनबाधविषयप्रातिभासिकरजतादिविषयकत्वादित्याशयेनाह — अबाधितत्वेति । प्रत्यक्षप्रमाणनिरूपणाय तत्प्रमाया एव लक्षणीयत्वादिति भावः । नन्वबाधितत्वं पारमार्थिकत्वमेव वाच्यं तस्य घटादावप्यभावेन तद्घटितलक्षणस्य तत्प्रमायामव्याप्तिरित्याशङ्क्य संसारकालीनबाधविषयत्वस्य व्यावहारिकसत्त्वस्याऽबाधितपदेन विवक्षितत्वाद् नैवमित्याह—व्यवहारत इति । सा प्रमा प्रत्यक्षानुमित्युपमिति-

शाब्दार्थापत्त्यभावभेदेन षोढा पट्प्रकारिका वेदान्तशास्त्रे इष्यते विद्वद्भिरित्यर्थः ॥ १८० ॥

**एतन्निरूपितं सम्यक् प्राचीनैर्बहुविस्तरात् ।**
**प्रसङ्गागतमत्रोक्तमित्यतो ह्युपरम्यते ॥ १८१ ॥**

तर्हि विस्तरेण निरूपणीया सेत्यत आह—एतदिति । प्राचीनैराचार्य्यैर्धर्म्मराजदीक्षितादिभिः परिभाषादिग्रन्थेषु बहुविस्तरादेतत्सम्यङ्निरूपितमिति सम्बन्धः । ननु तर्हि तैरुक्तत्वात् किमर्थं त्वया संक्षेपेणाप्युक्तमिति तत्राह—प्रसङ्गागतमिति । प्रतिकर्म्मव्यवस्थाप्रसङ्गागततया अत्र संक्षेपेणोक्तमिति । हि यतः अत उपरम्यते अलं विस्तरेणेत्यर्थः ॥ १८१ ॥

**तस्माद्वेदान्तशास्त्रेऽस्मिन् युक्तिभिः श्रुतिभिस्तथा ।**
**प्रतिकर्म्मव्यवस्थापि निरवद्यैव सिद्ध्यति ॥ १८२ ॥**

परमप्रकृतमुपसंहरति—तस्मादिति । निरवद्यैव सर्वदोषविवर्जितत्वान्निष्प्रत्यूहा प्रतिकर्म्मव्यवस्था सिद्ध्यतीति सम्बन्धः ॥ १८२ ॥

**नान्यस्मिन् वादिपक्षे सा व्यवस्था सम्भवेदतः ।**
**अनादृत्याऽन्यवाद्युक्तीराश्रयेद् वैदिकं मतम् ॥ १८३ ॥**

मुमुक्षून्प्रमाणकुशलान् शिक्षयन्नन्यवादिमतेष्वनादरणीयतामाह—नेति ॥ १८३ ॥

**एवमाध्यासिकं भेदं समाश्रित्य चितोऽखिलः ।**
**मातृमानप्रमेयादिव्यवहारो भवेदयम् ॥ १८४ ॥**

आविद्यकाध्यासकृत एव प्रमाणप्रमेयादिव्यवहार इति सिद्ध-मित्याह—एवमिति। तथा च तत्त्वज्ञानैकनिवर्त्यतयाऽऽध्यासिक-प्रमात्राद्यनर्थस्य निवृत्तेस्तत्त्वज्ञानमन्तरेण नान्यः कश्चिदुपायोऽस्तीति भावः ॥ १८४ ॥

**आध्यासिकी व्यवहृतिः सकला प्रतीचि**
**ब्रह्मात्मनीति विदितं मतमागमान्तैः।**
**अज्ञानहेतुकमनात्मचिदात्मनोस्त-**
**मध्यासमद्वयधिया विनिहत्य तिष्ठेत् ॥१८५॥**

एतदेवोपपादयन्मुमुक्षुकर्त्तव्यमुपदिशति—आध्यासिकीति। प्रतीचि प्रत्यगभिन्नब्रह्मात्मतत्त्वे सकला लौकिकी वैदिकी स्वाभाविकी व्यवहृति-र्व्यवहार आध्यासिकी आविद्यकप्रमातृत्वाद्यध्यासजन्या, न तु वस्तुत इति मतं गुरूपदिष्टैर्वेदान्तैर्विदितं विद्वत्सु प्रथितम्। अतोऽज्ञान-हेतुकं चिदात्मानात्मनोरध्यासं तं पूर्वोक्तलक्षणमद्वयधियाऽखण्डतत्त्वसा-क्षात्कारेण विनिहत्य समूलमपबाध्य तिष्ठेत् कृतकृत्यतयेति शेषः॥१८५॥

**संसारमाकरमशेषभयाधिदुःख-**
**दोषश्रमस्य परमात्मसुखप्रमादात्।**
**प्रोद्भूतमात्मधिषणामपहाय नान्य-**
**च्छेत्तुं ह्युपाय इति निश्चितधीर्मुमुक्षुः॥१८६॥**

सकलानर्थागारसंसारदोषोपशमने तत्त्वज्ञानं विना न कोऽप्युपायोऽ-स्तीति दर्शयन्, वैराग्यदार्ढ्याय संसाररूपञ्च कीर्तयन्, मुमुक्षुं लक्ष-यति—संसारमिति। संसारं छेत्तुं मूलबाधेन बाधितुमात्मधिषणा-मात्मतत्त्वावबोधमपहाय तमन्तरेणान्य उपायो नास्ति। "तमेव

विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" (श्वे० ६। १५) इत्यादिश्रुतिप्रसिद्धिद्योतको हिशब्दः इत्येवं निश्चिता धीर्यस्य स मुमुक्षुर्भवतीत्यन्वयः। मास्तु संसारोच्छेदः, किं तेनाऽनिष्टमिति हेलनावारणाय संसारं विशिनष्टि—अशेषेति। अशेषाणि भयानि तद्धेतूनि मृत्युप्रमुखाणि, आधयो मानसदुःखानि कामादीनि, दुःखानि शारीरकाणि ज्वरादीनि, दोषा दोषकारणानि पञ्चिताद्रीनि कर्म्माणि बीभत्सितशरीरदायीनि कफवातपित्तानि च अशेषभयाधिदुःखदोषा एव श्रमस्तत्प्रयुक्तो वा श्रमः। यद्वा, अनेकधाप्रवृत्तिजनितश्रमस्तस्याऽऽकरं खनिं तदुद्भवस्थानमिति यावत्। तथा चाऽत्यन्तानिष्टस्वरूपतया महता प्रयत्नेनाऽस्योच्छेदो विधेयो मुमुक्षुभिरिति भावः। ननु तत्त्वज्ञानेनाऽज्ञानमात्रं विरोधितया निवर्त्यम्? तत्कथं संसारमुच्छेत्तुं क्षमं स्यात्? इत्यत आह—परमात्मसुखप्रमादादिति। अपरिच्छिन्नपरमात्मसुखाज्ञानादावरणादिशक्तिमतोऽविद्यादिशब्दवाच्यादेव समुत्पन्नमिति। तथा च तत्त्वज्ञानेनाऽज्ञाने बाधिते तत्कार्य्यस्य संसारस्याशेषतो विनिवृत्तिरर्थसिद्धा, उपादाननाशे कार्य्यस्थित्ययोगादित्यर्थः॥ १८६॥

**तत्राऽऽत्मबोधजनिरात्मविचारतः स्यात्**
**सोऽप्यस्ति वेदवचसां श्रवणादिभिश्च।**
**तत्त्वंपदार्थपरिशोधनमिष्टमादौ**
**वाक्यार्थधीसमुदयस्तत एव सिद्ध्येत्॥१८७॥**

एवं निश्चयवता मुमुक्षुणा यत्कर्त्तव्यं तदाह—तत्रेति। तत्त्वज्ञानेनाऽज्ञानबाधद्वारा संसारानर्थेऽज्ञानहेतुके उच्छेत्तव्ये आत्मबोधजनिरात्मविचारात्, सोऽप्यात्मविचारो वेदान्तवचसां तन्निर्णायकसूत्रभाष्यादिग्रन्थानाञ्च गुरुमुखाच्छ्रवणमननादिभिरेव भवति। तत्र वेदान्तेषु तत्त्वंपदार्थशोधनं विना विचारस्वरूपमेव दुर्घटम्। तस्मादादौ

तत्त्वंपदार्थयोः परिशोधनं तत्तदुपाधिनिरासेन शुद्धतत्त्वावधारणरूप-विचारसिद्धये इष्टमत्यन्तेप्सितं भवति। कुतः ? यतस्तस्मात्पदार्थ-ज्ञानादेव वाक्यार्थधीसमुदयोऽखण्डवाक्यार्थबोधोदयः सिद्ध्येत्, पदार्थ-ज्ञानाधीनत्वाद् वाक्यार्थज्ञानस्येत्यर्थः ॥ १८७ ॥

**तस्मात्सुधीः श्रुतिनयानुभवेषु दक्षं**
**धीरं श्रयेद् गुरुमुदारगुणं मुमुक्षुः।**
**तत्सेवनादिगुणसंयुत आत्मबोधं**
**प्राप्याशु मुच्यत इतो भवपाशजालात्॥१८८॥**

प्रकरणार्थमुपसंहरति—तस्मादिति। यस्मादाध्यासिक्येव प्रत्य-गभिन्ने ब्रह्मणि सकला व्यवहृतिः, अध्यासश्चाज्ञानहेतुकः, तन्निवृत्तिर्न तत्त्वज्ञानमन्तरेण, तस्मात्तत्त्वज्ञानसिद्धये श्रुतियुक्त्यनुभवेषु दक्षं पूर्वोत्तर-मीमांसापारगामितया स्वानुभवारूढं तत्त्वं शिष्यबुद्ध्यारूढं कर्त्तुमत्यन्त-कुशलम्, उदाराः शान्तिदान्त्यादिगुणा यस्मिंस्तम्, धीरं विषयैरक्षोभ्यम्, गुरुमाचार्य्यमाश्रयेत्। तस्य गुरोः सेवनप्रणिपातादिगुणविशिष्टः सन्मु-मुक्षुस्तत्प्रसादाल्लब्धोपदेशेनात्मबोधं प्राप्याशु तत्प्राप्तिसमसमये इतोऽ-नर्थजालत्वेनाऽनुभूयमानाद्भवपाशजालान्मुच्यते। अज्ञानतत्कार्य्य-विनिर्मुक्ततया कृतकृत्यो भवतीत्यर्थः॥ १८८ ॥

**श्रुतिशिखरविचाराद् ब्रह्म सत्यं विशुद्धं**
**भ्रमतिमिरमशेषं नाशयित्वाऽऽशु वेत्ति।**
**विरतिशमदमाढ्यो यत्पदाम्भोजरागी**
**तमहममरवन्द्यं संश्रये श्रीमुकुन्दम् ॥१८९॥**

इति प्रत्यक्तत्त्वचिन्तामणौ पञ्चमं प्रकरणं सम्पूर्णम् ॥ ५ ॥

प्रकरणान्ते मङ्गलरूपं भगवन्तमनुसन्धत्ते—श्रुतीति। यत्पदाम्भोजानुरागवान् वैराग्यशमदमादिसम्पन्नः सन् वेदान्तविचारात्तज्जनिततत्त्वज्ञानादाशु अशेषं भ्रमतिमिरमज्ञानं सकार्य्यं नाशयित्वा, सत्यं विशुद्धं ब्रह्म प्रत्यगभिन्नं वेत्ति—तत्स्वरूप एव भवति, तं ब्रह्मादिभिरशेषदेवैर्वन्दनीयं श्रीमन्मुकुन्दं संश्रये शरणं प्रपद्ये इति योजना॥ १८९॥

यत्पादपद्मयुगले मतिचञ्चरीकी
लग्ना न वेत्ति भवमृत्युभयाम्बुराशेः।
दुःखादिचक्रमतिदुःसहमान्ध्यमूलं
भक्त्या प्रणौमि तमहं व्रजराजसूनुम्॥ १॥

इति श्रीमन्मुकुन्दपदारविन्दमकरन्दाभिलापिसदानन्दविद्वत्कृतायां प्रत्यक्तत्त्वचिन्तामणिव्याख्यायां स्वप्रभाभिधायां प्रतिकर्म्मव्यवस्थामयूखाभिधं पञ्चमं प्रकरणं समाप्तिमगमत्॥ ५॥



## अथ षष्ठं प्रकरणम्

यच्चिद्विलासपरिभावितमेतदाशु
प्रोद्भूतिमद् व्यवहृतौ क्षमतेऽनृतं सत् ।
तं सच्चिदद्वयसुखात्मकमादिदेवं
श्रीमन्मुकुन्दमनिशं शरणं व्रजामि ॥ १॥

आध्यात्मिकादिमलविभ्रमशान्तिहेतु-
मज्ञानबाधचतुरैककटाक्षपातम् ।
शान्तं समस्तगुणसारकलानिषेव्यं
वन्दे मुकुन्दमहमान्तरभक्तिसिद्ध्यै ॥ १ ॥

व्योमादिविश्वमखिलं रचयत्यकर्त्ता
स्वानन्दलेशकलयाऽवति नैति सङ्गम् ।
योऽन्ते हरत्यपि न लिप्यत एतदंशै-
स्तं नौम्यहं यदुकुलाब्धिहिमांशुमीशम् ॥ २ ॥

पञ्चमप्रकरणे "तत्राऽऽत्मबोधजनिरात्मविचारतः स्यात्सोऽप्यस्ति वेदवचसां श्रवणादिभिश्च । तत्त्वंपदार्थपरिशोधनमिष्टमादौ वाक्यार्थधीसमुदयस्तत एव सिद्ध्येत्" इत्युक्तम् । तत्र तत्त्वंपदार्थज्ञानाधीनत्वाद्वाक्यार्थज्ञानस्य तदर्थं तत्त्वंपदार्थपरिशोधनमावश्यकं तद्विचारप्रकरणमारभमाणस्तन्निर्विघ्नसमाप्त्यादिसिद्धये भगवन्तं स्वरूपतटस्थलक्षणाभ्यामनुसन्धत्ते—यदिति । तं श्रीमन्मुकुन्दमादिदेवमनिशं शरणं व्रजामीत्यन्वयः । सच्चिदद्वयसुखात्मकमिति स्वरूपलक्षणम्, यच्चिद्विलासेत्यादि तटस्थलक्षणम्, यस्य चिद्विलासश्चिच्चमत्कारो

मायायां स्वप्रतिबिम्बदानेन तत्सामर्थ्यसम्पादनलक्षणस्तेन परिभावित-मेतत्प्रत्यक्षादिगोचरं जगदनिर्वाच्यं सृष्टिकाले परिभावितं "तदैक्षत बहु स्याम्" ( छा० ६ । २ । ३ ) इतीक्षणमात्रेणोत्पादितम्, अथ तु ईक्षणसमसमयेऽनूभूतम्, [illegible] व्यवहृतौ स्थितिसमये व्यवहारदशायां प्रोद्भूतिमत् प्रकर्षेणोत्पत्तिमदिव जगत्—अर्थक्रियासमर्थं भवति तमिति सम्बन्धः ॥ १ ॥

> यं द्वैतशून्यमपि सर्वमयं वदन्ति
> श्रौत्यो गिरो निरभिधं सकलाभिधञ्च ।
> मायातिगं सकलशक्तियुतं तमन्तः-
> स्वानन्दमेव कलये सततं मुकुन्दम् ॥ २ ॥

एवं तत्पदार्थं स्वरूपतटस्थलक्षणाभ्यामनुसन्धायेदानीमखण्ड-वाक्यार्थं ब्रह्मैक्यम् "अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते" इति न्यायेन साक्षाद्वक्तुमशक्यतया सर्वव्यवहारानास्पदमपि मायाद्य-धिष्ठानत्वेन सर्वव्यवहारास्पदं सर्वाविरुद्धस्वरूपं भगवन्तमनुसन्धत्ते—यमिति । तं मुकुन्दं तत्पदलक्ष्यम्, स्वानन्दं त्वंपदलक्ष्यम्, सततं नैरन्त-र्येणान्तरेव स्वस्वरूपमेव प्रत्यगभिन्नमखण्डं ब्रह्मैव कलये इत्यन्वयः । तं कमित्याकाङ्क्षायामाह—यमिति । स्वयंज्योतिष्ट्वेन प्रसिद्धं यं द्वैतशून्यमपि सन्तं श्रौत्यो गिरः "सर्वं खल्विदं ब्रह्म" ( छा० ३ । १४ । १ ) इत्याद्याः "सर्वमयं सर्वाकारम्" "यतो वाचो निवर्त्तन्ते" ( तै० २ । ४ ) इति श्रुत्या निरभिधं शब्दातीतत्वेनावाच्यमपि सन्तं सकलाभिधं सर्वशब्दवाच्यं वदन्ति मायातीतमपि सन्तं यं सकल-शक्तियुतम्, "एष वशी" ( कठ० ५ । १२ ) "एष सर्वस्येशानः" (बृ० ५।६।१)इत्याद्या वदन्ति तं कलय इति सम्बन्धः । तथा च परमार्थतो नामरूपकलातीते सर्वव्यवहारानास्पदे ब्रह्मणि मायिकदृष्ट्या नाम-

रूपकलाद्यारोप्य ब्रह्मैक्यतत्त्वबोधाय श्रुतयस्तदेवाद्वितीयं ब्रह्मतत्त्वं प्रतिपादयन्तीति भावः ॥ २ ॥

**तत्त्वंपदार्थधिषणोत्थपरैक्यबोधः**
**स्वाज्ञानबाधकरणं श्रुतिजन्यभावात् ।**
**आदौ तयोः श्रुतिभिरीडितलक्षणाभ्यां**
**निर्णीयते द्वयसुखैकवपुस्तदर्थः ॥ ३ ॥**

एवं शास्त्रार्थं सङ्क्षेपेण प्रदर्श्य विस्तरेण इममेवार्थं वक्तुकामः कर्त्तव्यं प्रतिजानीते—तत्त्वमिति । तत्त्वंपदार्थविषयिणी या धिषणा ज्ञानं तदुत्थस्तदधीनसिद्धिकः परैक्यस्य ब्रह्मात्मैक्यस्य बोधः श्रुतिप्रमाणजन्यत्वात् स्वात्माज्ञानस्य यो बाध उपमर्दस्तस्य करणं साक्षाद्धेतुर्भवति । अत आदौ तयोस्तत्त्वंपदार्थयोर्मध्येऽभ्यर्हितत्वात्तत्पदार्थः अद्वयानन्दस्वरूपो वेदान्तवाक्यैस्तदुक्तलक्षणाभ्यां निर्णीयते जगज्जन्मादिहेतुत्वेन सच्चिदानन्दस्वरूपत्वेन विविच्यत इत्यर्थः ॥ ३ ॥

**तत्र स्वरूपमपि लक्षणमुच्यतेऽस्य**
**सत्यादिभिः श्रुतिपदैरभिगीतमेव ।**
**धर्म्यादिभाव इह कल्पित इष्यतेऽतः**
**स्वस्यापि लक्षणमिदं स्वयमात्मतत्त्वम् ॥४॥**

तत्राभ्यर्हितत्वाच्छास्त्रतात्पर्य्यविषयत्वाच्च "सत्यं ज्ञानमनन्तं ब्रह्म" ( तै० २ । १ । १ ) इति श्रुतिसिद्धं स्वरूपलक्षणं दर्शयति—तत्रेति । तटस्थस्वरूपलक्षणयोर्मध्येऽस्य तत्पदार्थस्य स्वरूपलक्षणं सत्यादिभिः सत्यज्ञानानन्तरूपैः श्रुतिपदैः श्रुतेः "सत्यं ज्ञानमनन्तं ब्रह्म" ( तै० २ । १ । १ ) इत्यस्याः पदैरभिगीतमेवोच्यते इत्यन्वयः । ननु

स्वस्य स्ववृत्तित्वाभावात्कथं स्वरूपमेव लक्षणं स्यात् ? इति तत्राह— धर्म्यादिभाव इति । इहोपदेशसमये स्वस्यैव स्वापेक्षया धर्मधर्मिभाव-कल्पनया लक्षणत्वसम्भवादत इदं नित्यापरोक्षरूपमात्मतत्त्वं स्वयमेव स्वस्य लक्षणं भवतीत्यर्थः । तत्र सत्यं बाध्यविलक्षणं ज्ञानं जडविल-क्षणमनन्तं त्रिविधपरिच्छेदशून्यं स्वरूपलक्षणं स एव तत्पदलक्ष्यार्थ इति दर्शितम् । न च स्वरूपे धर्मधर्मिभावकल्पनाऽसाम्प्रदायिकीति शङ्क्यम् । यत उक्तञ्चास्मत्साम्प्रदायिकैः पद्मपादाचार्यैः— "आनन्दो विषयानुभवो नित्यत्वञ्चेति सन्ति धर्मा अपृथक्त्वेऽपि चैतन्यात् पृथगिवाऽवभासन्ते" इति ॥ ४ ॥

**व्यावर्त्तकं यद्व्यनवस्थितत्वे**
**सत्यस्ति यावन्निजलक्ष्यकालम् ।**
**तल्लक्षणं नाम तटस्थमाहु-**
**र्यथा पृथिव्याः खलु गन्धवत्त्वम् ॥ ५ ॥**

एवं स्वरूपलक्षणमुक्त्वा तटस्थलक्षणमाह—व्यावर्त्तकमिति । यावन्निजलक्ष्यकालमनवस्थितत्वे सति यद् व्यावर्त्तकमस्ति, तल्लक्षणं तटस्थं नामेति सम्बन्धः । यथा गन्धवत्त्वं पृथिव्याः लक्षणमाहुः खलु नैयायिकादय इति योजना ॥ ५ ॥

**यथा न गन्धः प्रलयेऽणुषु स्या-**
**दुत्पत्तिकाले न घटादिनिष्ठः ।**
**तथा जगज्जन्मलयस्थितीनां**
**हेतुत्वमद्वैतचिदात्मनोऽपि ॥ ६ ॥**

एतदेवोक्तं दृष्टान्तेन द्रढयति—यथेति । महाप्रलये परमाणुषु उत्पत्तिकाले घटादिषु च गन्धाभावात् तथा प्रकृतेऽपि जगज्जन्मस्थिति-

लयानामद्वैतचिदात्मनोऽपि हेतुत्वं यावल्लयकालं नास्तीत्यर्थः। "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति" ( तै० ३। १। १ ) इति श्रुतेः, "जन्माद्यस्य यतः" ( ब्र० सू० १। १। २ ) इति न्यायाच्च तटस्थलक्षणं तत्पदार्थस्य सिद्धं स एव तत्पदवाच्यार्थ इत्यर्थः ॥ ६ ॥

**यः सर्वविन्निखिलकारणमीश्वरोऽस्माद्**
**विश्वं समुद्भवति नाम विकाररूपम्।**
**सच्चित्सुखाद्वयवपुर्जगदेकहेतु-**
**मायाश्रयोऽप्यविकृतिः सकलस्य हेतुः ॥७॥**

एतदेव विवृणोति—य इति। "यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः। तस्मादेतद् ब्रह्म नाम रूपमन्नञ्च जायते" ( मु० १। १। ९ ) इत्यादिश्रुतिसिद्धनिखिलकारणत्वेनेश्वरो "मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्" ( श्वे० ४। १० ) इति श्रुतिसिद्धमहेश्वरपदवाच्यो यः सर्वविद् भवति, अस्मान्मायाशबलाद् ब्रह्मणोऽभिन्ननिमित्तोपादानाद् विश्वं कृत्स्नं स्थूलसूक्ष्ममूर्त्तामूर्त्तरूपं हिरण्यगर्भादिचतुर्विधभूतग्रामान्तं जगत्सर्गकाले व्योम्नो गन्धर्वनगरमिवात्यन्तासम्भावितमपि समुद्भवति नाम हिरण्यगर्भादिविकाररूपञ्चतुर्मुखादि स एव परमेश्वरः सच्चिदानन्दाद्वैतवपुरेव सन् जगदाकारेण परिणममानमायाधिष्ठानत्वेन सकलस्य हेतुर्भवति। अत एवाविकृतिः परिणामादिविकारशून्यतया नित्यकूटस्थ इत्यर्थः ॥ ७ ॥

**अध्यस्तमद्वयसुखात्मनि चित्स्वरूपे**
**विश्वं ततस्त्रिविधरूपतया विभाति।**

**अस्ति प्रियं स्फुरति सर्वमिति प्रतीचोऽ-**
**धिष्ठानतोऽपृथगिदं विकृतञ्च नाम ॥ ८ ॥**

एतादृशमेवोपादानत्वमभिप्रेत्य "इदं सर्वं यदयमात्मा" ( बृ० २ । ४ । ६ ) "सच्च त्यच्चाभवद्" "बहु स्यां प्रजायेय" ( छा० ६ । २ । ३ ) इत्यादिषु श्रुतिषु ब्रह्मप्रपञ्चयोस्तादात्म्यव्यपदेश इत्याशयेनाह—अध्यस्तेति । अद्वयानन्दात्मनि चैतन्ये यतो विश्वमध्यस्तं ततोऽधिष्ठानानतिरिक्तत्वात् त्रिविधरूपतया विभाति, अस्ति भाति प्रियमिति सर्वमपि प्रत्यगभिन्नब्रह्मणोऽधिष्ठानतः सकाशाद् यत इदमपृथङ्नामरूपात्मकं जगत्तस्मात् सच्चिदानन्दरूपब्रह्मैक्याध्यासाद् घटः सन्, घटो भाति, घट इष्ट इत्यादिलौकिकव्यपदेशोऽपि सङ्गच्छते इत्यर्थः । जगति नामरूपद्वयव्यवहारस्तु अविद्यापरिणामात्मकनामरूपसम्बन्धात् । तदुक्तम्—

"अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् ।
आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् ॥"

इति द्रष्टव्यम् ॥ ८ ॥

**मायामयं विविधनामविकारजातं**
**सत्यं सुखाद्वयपदं सकलावधित्वात् ।**
**नाध्यस्तमण्वपि पृथग्भजते स्वसत्तां**
**ब्रह्माद्वयादिति च बोधयितुं प्रपञ्चः ॥ ९ ॥**

ननु ब्रह्मणो जगदुपादानत्ववर्णनेन तस्य सप्रपञ्चत्वं स्यात्, तस्य चानिष्टत्वात्; तथावर्णनमनुचितमित्याशङ्क्याह—मायामयमिति । विविधनामविकारजातं मायामयं मिथ्यैव भवति, रज्जुसर्पादिवत् कल्पितत्वात् । सुखमद्वैतं ब्रह्मैव सत्यं भवति, सकलकार्य्यकारण-

प्रपञ्चस्यावधित्वात्—अधिष्ठानत्वात्। तस्माद् ब्रह्माद्वयात् स्वाधिष्ठानभूतादिदं जगदध्यस्तमण्वपि ईषदपि पृथक् स्वसत्तां न भजते, कालत्रयेऽप्यत्यन्ताभावप्रतियोगित्वादिति बोधयितुं सम्यग् ज्ञापयितुं प्रपञ्चः, तथावर्णनं सङ्गच्छते। न ह्यध्यस्तप्रपञ्चाधिष्ठानत्वमात्रेण ब्रह्मणः सप्रपञ्चत्वं शङ्कितुमपि शक्यम्, न ह्यध्यस्तजलेन मरुस्थलं पङ्कीक्रियते, न वा नीलिम्ना व्योम रूपवद्भवतीति भावः ॥ ९ ॥

**निरवधिपदमेकं सत्यमेवाद्वितीयं**
**श्रुतिशिखरवचोभिः प्रोक्तमेतज्जनेः प्राक्।**
**अघटितघटनायां दक्षिणामात्ममाया-**
**मुपगतमभवत्तद् ब्रह्म सर्वेश्वरं सत् ॥ १० ॥**

जगज्जन्मादिकारणत्वं ब्रह्मणस्तटस्थं लक्षणमुक्तम्, तत्कथं ततो जगज्जन्मादि स्यात्? इत्याकाङ्क्षायां सप्रकारं जगज्जन्मादि ब्रह्मणः सकाशादुपपादयिष्यन्नादौ तत्स्वरूपकीर्त्तनपुरःसरं सप्रमाणकं तद्वक्तुमुपक्रमते—निरवधीति। "सदेव सौम्येदमग्र आसीत्" (छा० ६।२।१) "एकमेवाद्वितीयम्" (छा० ६।२।१) "आत्मैवेदमग्र आसीत्" (बृ०१।४।१) "ब्रह्म वेदमग्र आसीत्" (बृ० १।४।१०) इत्यादिवेदान्तवाक्यैरेतस्य जगतो व्याकृतस्य नामरूपात्मकस्य जनेः सृष्टेः पूर्वं सत्यमबाध्यम्, निरवधिपदमपरिच्छिन्नस्वरूपम्, एकं सजातीयभेदशून्यमेवं स्वगतभेदशून्यम्, अद्वितीयं विजातीयभेदशून्यं ब्रह्मैवासीदिति प्रोक्तम्, तद् ब्रह्म अघटितस्यात्यन्तासम्भावितस्य घटना रचना तस्यां दक्षिणामत्यन्तचतुरां मायां प्रकृत्यादिशब्दवाच्यामुपगतं चित्प्रतिबिम्बरूपगर्भाधानद्वारा पुमान् योषितमिवात्यन्तसन्निधिं प्राप्तं सत् सर्वेश्वरमभवदिति योजना ॥ १० ॥

**शबलमपि तदेवाद्वैतमच्छं स्वशक्त्या**
**विविधरसविचित्रां सृष्टिमाधातुमैच्छत्।**

**तदनु सकलकर्म्मज्ञानकामानुरोधात्**
**बहुभवनवतीच्छा स्यामहञ्चेत्युदेति ॥ ११ ॥**

एतदेव विवृणोति—सकलमिति । तद्ब्रह्मेताऽच्छं स्वच्छमद्वैतमेव स्वशक्त्या मायादेव्या सकलमपि विविधा नानाप्रकारका येऽविद्याकामकर्म्मादिपरिपाकरूपस्तैर्विचित्रामनन्तभेदवतीं सृष्टिं रचनामाधातुं सम्यक् कर्त्तुमिच्छन् । तदनु जीवादृष्टरूपाणि कर्म्माणि धर्म्माधर्मात्मकानि, ज्ञानानि तत्तदुपासनात्मकानि, कामा इच्छाभेदः तत्संस्काराश्च तेषामनुरोधाद् बहुभवनवती या इच्छा "बहु स्यां प्रजायेय" ( छा० ६ । २ । ३ ) इति चोदेति तस्मिन्नेव ब्रह्मणीति योजना । एतदुक्तं भवति—सर्गाद्यकाले परमेश्वरः सृज्यमानप्रपञ्चवैचित्र्यहेतुप्राणिकर्म्मादिसहकृतापरिमितानिरूपितशक्तिविशेषमायासहितः सन् नामरूपात्मकनिखिलप्रपञ्चं बुद्धाकलय्येदं करिष्यामीति सङ्कल्पयति "तदैक्षत बहु स्यां प्रजायेय" (छा० ६ । २ । ३) इति "सोऽकामयत बहु स्यां प्रजायेय" ( तै० २ । ६ ) इत्यादिश्रुतेरिति । तत आकाशादीन्यपञ्चीकृतानि पञ्चमहाभूतानि तन्मात्रपदप्रतिपाद्यान्युत्पद्यन्ते इति ॥ ११ ॥

**गगनपवनतेजोवार्भुवश्चिद्विवर्त्ता-**
**स्तदपि निगमवाक्यैरुच्यते बोधसिद्ध्यै ।**
**कथमिति तदिदानीं वर्ण्यतेऽध्यस्तविश्वं**
**क्रमश इतरवादध्वान्तविध्वंसनाय ॥ १२ ॥**

आकाशादीनां ब्रह्मविवर्त्तत्वमितरवादिमतान्धकारनिरासफलकं प्रदर्शयन्नत्यन्तासम्भावितप्रपञ्चरचनाया मायावादमन्तरेण न कथञ्चिदसम्भव इति श्रुतिसिद्धान्तविवर्त्तवाद एव श्रेयानित्याह—गग-

नेति। गगनादीनां चिद्विवर्त्तत्वं यत् तदपि निगमवाक्यैः "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः। आकाशाद्वायुः वायोरग्निः अग्नेरापः, अद्भ्यः पृथिवी" (तै० २।१।१) इत्यादिश्रुतिवचनैर्बोधोऽद्वैततत्त्वावबोधस्तत्सिद्धये उच्यते। कथं निश्छिद्राद्ब्रह्मणः छिद्ररूपाकाशोत्पत्तिः? आकाशादस्पर्शाचलरूपाद्वायोरुत्पत्तिः, वायोर्नीरूपादप्रकाशाऽनुष्णादिस्वभावात्तद्विरुद्धस्वभावस्य अग्नेः, अग्नेरशीताद्रवारसादिस्वभावात्तद्विरुद्धस्वभावस्य जलस्य, जलादगन्धाकठिनादिस्वभावात्तद्विरुद्धस्वभावायाः पृथिव्या उत्पत्तिः इति कथं सम्भावनापथमवतरेत्? अखण्डैकरसस्वभावाद्ब्रह्मणः कथमित्थं विचित्रभूतोत्पत्तिः? इत्याकाङ्क्षायामाह—अध्यस्तविश्वमिति। यस्य यत्रात्यन्तासम्भवः, तस्य तत्र भानमध्यासः। नीरूपेऽपि गगने रूपविशेषनीलिमाद्यध्यासः, रज्जौ सर्पादेः, स्वप्नद्रष्टरि सर्वासम्भावितस्वशिरश्छेदादिविरुद्धकल्पनाद्यध्यासो दृष्टचरः; अतो मायाशबले ब्रह्मणि वस्तुतो निश्छिद्रादिस्वभावेऽपि सर्वव्यवहारानास्पदे कार्य्यकारणभावविनिर्मुक्तेऽपि सर्वमत्यन्तासम्भावितमपि मायैव दर्शयति। न ह्यघटितघटनापटीयसीं मायां स्वीकुर्वतामिदं दूषणं यद्युक्त्यसहत्वम्, किन्तु भूषणमेव; इतरेषां वादिनामेवेदं दूषणं युक्तिमात्रैकशरणानाम्, "नैषा तर्केण मतिरापनेया" (क० २।९) इति श्रुतेः; "तर्काप्रतिष्ठानात्" (ब्र० सू० २।१।११) इति न्यायात्, "अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत्" इति महाभारतवचनाच्च; "नाऽप्रतिष्ठिततर्केण गम्भीरार्थस्य निश्चयः" इति पुराणान्तराच्च। सर्वतार्किकाणां विरुद्धमिति तदिदमध्यस्तं क्रमेण वर्ण्यते श्रुत्या किमर्थमित्यत्राह—इतरेति। इतरेषां तार्किकादीनां श्रुतिविरुद्धाकाशादिनित्यत्वादिवाद एव ध्वान्तं तमः श्रुत्यर्थज्ञानप्रतिबन्धकसाम्यात् तद्विध्वंसनाय तद्वादविध्वंसने सति श्रुतिशिखरसिद्धान्ते सुखेन मुमुक्षूणां प्रवेशः स्यात्। तद्वादान्धकारनिरासप्रकारस्तु सम्यगद्वैततत्त्वस्य

जगज्जन्माद्यभिन्ननिमित्तोपादानत्वप्रतिपादनपरे नवमे प्रकरणे वक्ष्यते इति भावः॥ १२॥

**विभुरपि परमात्मा माययाऽधिष्ठितोऽसौ**
**सृजति गगनमादौ शब्दतन्मात्ररूपम्।**
**द्विविधमपि ख इष्टं रूपमैशं सदान्ध्यं**
**ह्यनृतमिति गिरां स्याद्धेतुराधार आद्यः॥१३॥**

प्रतिज्ञातमाकाशादिजन्मक्रमं दर्शयति। तत्र "आत्मन आकाशः सम्भूतः" (तै० २।१।१) इति श्रुतेरंशस्यार्थमाह—विभुरिति। परिपूर्णतया निजमहिम्नि स्थितोऽपि परमात्मा परमेश्वरोऽसौ मायया स्वाधीनशक्त्याधिष्ठितोऽधिष्ठानत्वेन स्वीकृतः सन् तस्यां मायायां स्वप्रतिविम्बदानेनादौ गगनं सूक्ष्मत्वाल्लिप्तत्वादिधर्म्मैरुपलक्षितं प्रथमं कार्य्यं शब्दतन्मात्ररूपं सृजति—स्वसत्तास्फूर्तिभ्यामाविर्भावयति। तस्मिन्गगने रूपद्वैविध्यं दर्शयति—द्विविधमिति। खे आकाशे रूपं द्विविधमिष्टं भवति। तदेवाह—सदिति। आकाशोऽस्ति, तस्मिन् सत्तारूपमैशमीशसम्बन्धि आन्ध्यमज्ञानकृतमनृतमिति। सत्तातः पृथक्कृते आकाशो नास्तीत्याकाशस्यानिर्वाच्यं रूपं मायिकम्, एवं सर्वत्र वाय्वादावपि द्रष्टव्यम्। आकाशकार्य्यमाह—गिरामिति। शब्दगुणत्वादाकाश एव सर्वेषां शब्दानां कारणमाधारश्च सर्वभूतभौतिकानामवकाशदानेन आद्यः वाच्याद्यपेक्षया प्रथमो विकार ईदृशगुणविशिष्टमाकाशं परमेश्वरः सृजतीति सम्बन्धः॥ १३॥

**गगनयुतपरेशः स्पर्शमात्रं समीरं**
**सृजति गतिमुखानां हेतुमाकाशवासम्।**
**गगनपवनयुक्तो रूपमात्रञ्च तेजः**
**सृजति विविधरूपोद्भूतिहेतुम्प्रकाशम्॥१४॥**

"आकाशाद्वायुः" इत्यंशस्यार्थमाह—गगनेति। गगनभाव-मापन्नः परेशो मायावी शब्देन संयुतं स्पर्शतन्मात्ररूपं समीरं सृजति। आकाशे वासो यस्य तं तत्कार्य्यमाह—गतिमुखानामिति। गति-श्चलनं तदादीनां सर्वेषां वायुधर्म्माणां हेतुम्। वायोरग्निरित्यस्यार्थ-माह—गगनेति। एवं शब्दस्पर्शगुणद्वयात्मकं वायुं सृष्ट्वा गगनपवन-भावमापन्नः परेशस्तद्गुणशब्दस्पर्शविशिष्टं रूपमात्रञ्च तेजोऽग्निं सृजति; तत्कार्य्यमाह—विविधेति। विविधरूपाणामुद्भूतिरुत्पत्तिस्तस्या हेतुः कारणं प्रकाशं प्रकाशस्वरूपमित्यर्थः॥ १४॥

**तदनु रसगुणाम्भः सृज्यमीशः ससर्ज**
**क्षितिमखिलभवस्याधारभूतां ससर्ज।**
**सकलगुणकलाढ्यां शक्तिमाश्रित्य मायां**
**सृजति हरिरशेषं विश्वमध्यस्तमाशु॥ १५॥**

अग्नेराप इत्यस्यार्थमाह—तदिति। तदनु शब्दस्पर्शरूपगुण-विशिष्टं तेजः सृष्ट्वा शब्दस्पर्शरूपरसगुणमम्भः सृज्यं प्राणिनामाप्या-यनकरत्वादत्यन्तं स्रष्टुं योग्यम्; यद्वा, तत्स्वरूपकीर्तनमीशः ससर्ज। तत्कार्य्यमप्यत्राप्यायनक्लेदनादिरूपं बोध्यम्। अद्भ्यः पृथिवीत्यस्या-र्थमाह—क्षितिमिति। पूर्वोक्तचतुर्गुणविशिष्टां गन्धगुणां पृथिवीं ससर्ज; तत्कार्य्यमाह—अखिलस्य भवस्याधारभूतामिति। एवं पञ्च-भूतसृष्टिमुक्त्वा भौतिकसृष्टिं वदन् तत्रासम्भावनां वारयन्नाह—सकल-मिति। हरिर्मायां शक्तिं सकला गुणाः सत्त्वाद्याः कला नियम-नाद्याः शक्तयस्तदाढ्यामाश्रित्याशेषं विश्वं ब्रह्माण्डं तदन्तर्वर्त्ति सर्वं भौतिकं जगदाशु सत्यसङ्कल्पत्वात् सृजतीति न क्वाप्यसम्भावना का-र्य्येति भावः॥ १५॥

**सत्त्वं रजस्तम इति प्रकृतेः स्वरूपं**
**तत्कार्य्यभूतखमरुत्प्रभृतीनि तद्वत्।**
**तेभ्यः समुद्भवति सूक्ष्मशरीरजातं**
**सूक्ष्मेभ्य आलयमिदं व्यवहारहेतुः ॥ १६ ॥**

एवं सङ्क्षेपेण भूतभौतिकसृष्टिमभिधायेदानीं भौतिकसृष्टिं विस्तरेण वक्तुकामो मायायास्त्रिगुणात्मकत्वात् तत्कार्याण्याकाशादीन्यपि त्रिगुणात्मकानीति वदन् तेभ्यः सूक्ष्मशरीरोत्पत्तिमाह—सत्त्वमिति। सत्त्वं रजस्तम इति प्रकृतेर्मायाया स्वरूपम्, न तु गुणगुणिभावो विवक्षितः। अत एव तत्कार्याणि भूतानि आकाशमरुत्प्रभृतीनि तद्वत् सत्त्वरजस्तमोगुणात्मकानि तेभ्य एतेभ्यः सूक्ष्मभूतेभ्योऽपञ्चीकृतेभ्यः सूक्ष्मशरीरजातं सप्तदशावयवात्मकं समुद्भवति। इदं सूक्ष्मशरीरमालयं मोक्षपर्य्यन्तं व्यवहारहेतुः, इहलोकपरलोकयात्रानिर्वाहकत्वात्तत्त्वज्ञानमन्तरेणानुच्छेद्यत्वात् सुषुप्तौ प्रलये च संस्काररूपेणावस्थितत्वाच्च सर्वसंसारव्यवहारकारणमिदमेवास्तीत्यर्थः। १६॥

**व्योमादिसात्त्विकलवेभ्य उदेति बुद्धि-**
**स्तद्वन्मनोऽपि मिलितेभ्य इतः पृथक्त्वात्।**
**ज्ञानेन्द्रियाण्यपि भवन्ति ततो रजोंऽशैः**
**कर्म्मेन्द्रियाण्यसव आमिलितैः रजोंऽशैः॥१७॥**

तदुत्पत्तिप्रकारमेव दर्शयति—व्योमादीति। आकाशादिसात्त्विकांशेभ्यो मिलितेभ्यो बुद्धिर्निश्चयात्मिकाऽन्तःकरणवृत्तिस्तद्वदेव मनः सङ्कल्पविकल्पात्मिकाऽन्तःकरणवृत्तिरुदेति। इतः पृथक्त्वात् एतेभ्य आकाशादिसात्त्विकांशेभ्यो व्यस्तेभ्यो ज्ञानेन्द्रियाण्यपि श्रोत्रादीनि भवन्त्युत्पद्यन्ते। तथाहि—आकाशसात्त्विकांशाच्छ्रोत्रमुत्पद्यते, वायोः

सात्त्विकांशात्त्वगिन्द्रियम्, तेजसः सात्त्विकांशाच्चक्षुः, अपां सात्त्विकांशाद्रसनम्, पृथिवीसात्त्विकांशाद् घ्राणमिति, "श्रोत्रमाकाशः" इत्यादिश्रुतेः। ततस्तेभ्य एव आकाशादिभ्यो रजोंऽशैः कर्म्मेन्द्रियाणि वागादीन्युत्पद्यन्ते तत्क्रमस्तु—आकाशराजसांशाद्वागिन्द्रियमुत्पद्यते, वायो राजसांशाद् हस्तौ, तेजसो राजसांशात्पादौ, अपां राजसांशादुपस्थः, पृथिवीराजसांशात् पायुरिति, "तेषां क्रमेण" इत्यादि श्रुतेः। आमिलितै रजोंऽशैस्तेभ्य आकाशादिराजसांशेभ्य आसमन्तान्मिलितेभ्योऽसवः प्राणा उत्पद्यन्ते। एकोऽपि प्राणो वृत्तिभेदेन पञ्चविधः। तथा हि—प्राग्गमनवान् नासास्थानवर्त्ती प्राणः, अवाग्गमनवान् पाय्वादिस्थानवर्त्ती अपानः, विष्वग्गमनवान् सर्वशरीरवर्त्ती व्यानः, उद्ध्र्वगमनवान् कण्ठस्थानवर्त्ती उदानः, अशितपीतान्नपानादिसमीकरणकरोऽखिलशरीरवर्त्ती समान इति ॥ १७ ॥

**दिग्वातसूर्य्यवरुणाश्विचतुर्मुखेन्दु-**
**वह्नीन्द्रविष्णुमृतिका इति देवताः स्युः।**
**श्रोत्रत्वगक्षिरसनाक्षितिधीमनोवाग्-**
**हस्ताङ्घ्रिपायुजननेन्द्रियवर्गनिष्ठाः॥ १८॥**

एवं सप्तदशावयवात्मकलिङ्गशरीरसृष्टिप्रकारमुक्त्वाऽधुना इन्द्रियाणां बुद्धिमनसोश्चाधिष्ठातृदेवता दर्शयति—दिगिति। अत्र यत्क्रमेणेन्द्रियायुक्तिः उत्तरार्द्धे, पूर्वार्द्धे तत्क्रमेणाधिष्ठातृदेवतोक्तिरिति बोध्यम्। क्षितिशब्देन तत्कार्य्यत्वात् तद्गुणगन्धग्राहकं घ्राणेन्द्रियमुच्यते, कारणवाचकशब्दस्य कार्ये बहुधा प्रयोगोपलम्भात्। "गोभिः श्रोणीत मत्सरम्" इतिवद् "धान्यमसि"इतिवच्च द्रष्टव्यम्। क इति प्रजापतिरित्यर्थः। उभयत्रेतरेतरद्वन्द्वः॥ १८॥

तत्राद्यकारणशरीरसमष्टिरीशो-
पाधिर्नृणां पृथगुपाधिरथैकदेशः ।
प्राज्ञेशभेदक इतः पृथगस्ति सूक्ष्मो-
पाधिश्च सप्तदशभिः करणैर्द्विधैव ॥ १९ ॥

इदानीं समष्टिव्यष्टिभेदेन कारणादिशरीरत्रिकस्य तदभिमानित्रिकस्य च द्वैविध्यमुपपादयितुमादौ कारणशरीरं तदभिमानिद्वैविध्यं दर्शयति—तत्रेति । सूक्ष्मशरीरोपपादनप्रसङ्गेन स्मृते कारणोपाधौ आद्यं कारणशरीरं रजस्तमोभ्यामनभिभूतसत्त्वं मायाशक्तिरूपं सर्वोपादानतया समष्टिरित्युच्यते । ईशोपाधिस्तदुपहितचैतन्यमीश्वरः । स च ज्ञानशक्त्युपहितस्वरूपेण जगत्कर्ता, विक्षेपादिशक्तिमदज्ञानोपहितस्वरूपेण जगदुपादानमपि द्रष्टव्यम् । नृणां जीवानां पृथगुपाधिर्व्यष्टिरूपः रजस्तमोभ्यामनभिभूतसत्त्वमविद्याख्यम् । अथवा एकदेशोऽन्तःकरणं तदुपाधिः "कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः" इति वचनात्, अविद्योपाधिरन्तःकरणोपाधिर्वा जीवः प्राज्ञ इत्युच्यते । शुद्धसत्त्वप्रधानमायोपाधिरीश्वर इति विभागहेतुः । कारणकार्यरूपेण समष्टिव्यष्टिरूपेण वा एकैव मूलप्रकृतिरिति द्रष्टव्यम् । एवं कारणशरीरद्वैविध्यमभिधाय सूक्ष्मशरीरद्वैविध्यमाह—इत इति । इतः कारणशरीरात् तत्त्वज्ञानैकनिवर्त्यात् पृथक् सूक्ष्मोपाधिर्लिङ्गशरीरं सप्तदशभिः करणैर्जीवमोक्षपर्यन्तं भोगसाधनैरवयवैः समष्टिव्यष्टिभेदेन द्विप्रकारकमित्यर्थः ॥ १९ ॥

सूत्रात्मतैजसभिदाप्यमुतः समष्टि-
व्यष्ट्युद्भवा व्यवहृतौ परजीवयोः स्यात् ।
ज्ञानक्रियाकरणशक्तियुतं हि सूक्ष्म-
कोशत्रयात्मकमिदं जनिमृत्युहेतुः ॥ २० ॥

एतदेव विवृणोति—सूत्रेति। अमुतोऽप्यमुख्यलिङ्गशरीरसमष्टिव्यष्ट्युद्भवा सूत्रात्मतैजसभिदा परमात्मजीवयोर्व्यवहारे स्यादिति योजना अयमर्थः—अपञ्चीकृतपञ्चमहाभूततत्कार्य्यसप्तदशलिङ्गं समष्टिरित्युच्यते। एतदुपहितं चैतन्यं सर्वानुस्यूतत्वात् सूत्रात्मा, ज्ञानशक्तिमदन्तःकरणोपहितत्वाद्धिरण्यगर्भः, क्रियाशक्तिमदधिदैवतप्राणरूपत्वात्प्राण इति चोच्यते। केचित्तु—पूर्वोक्तापञ्चीकृतेभ्यो भूतेभ्यः सर्वव्यापकं लिङ्गशरीरं पृथगेवोत्पन्नं तदेव समष्टिरित्युच्यते। समष्टित्वन्नाम जात्यादिवत्सर्वव्यष्टिष्वनुस्यूतत्वम्। तदुक्तं—

"तेभ्यः समभवत् सूत्रं लिङ्गं सर्वात्मकं महत्"—इत्याहुः। अपरे वनवल्लिङ्गशरीरसमुदायः समष्टिः, प्रत्येकं लिङ्गशरीरं व्यष्टिरिति वदन्ति। व्यष्टित्वं नाम व्यक्तिवद्व्यावृत्तत्वम्। एतदुपहितं चैतन्यं तैजस इत्युच्यते, तेजोमयान्तःकरणोपहितत्वात्। सामान्यविशेषयोरिव जातिव्यक्तयोरिव च समष्टिव्यष्ट्योस्तादात्म्याभ्युपगमात्तदुपहितयोस्तैजससूत्रात्मनोरपि तादात्म्यमिति। उक्तस्य सूक्ष्मशरीरस्य सूक्ष्मकोशत्रयात्मकत्वमपीत्याह—ज्ञानेति। इदं सूक्ष्मकोशत्रयात्मकं ज्ञानक्रियाकरणशक्तित्रययुतं भवति। क्रियाशक्तिमान् कर्म्मेन्द्रियैः सहितः प्राणः प्राणमयः कोशः, करणशक्तिमान् कर्म्मेन्द्रियैः सहितं मनो मनोमयः कोशः, ज्ञानशक्तिमान् ज्ञानेन्द्रियैः सहिता बुद्धिर्विज्ञानमयः कोश इति कोशत्रयात्मकं लिङ्गमविद्याकामकर्म्मविशिष्टं जन्ममृत्युप्रवाहसंसारहेतुः, तत्त्वज्ञानमन्तरेणानुच्छेद्यत्वादित्यर्थः ॥ २० ॥

**एतैरपञ्चीकृतभूतवर्गै-**
**स्तमोगुणाढ्यैः प्रकृतेर्विकारैः।**
**पञ्चीकृतानीशकटाक्षतः स्यु-**
**स्तेभ्योऽण्डमुत्पद्यत ईशसृज्यम् ॥ २१ ॥**

एवं सूक्ष्मशरीरोत्पत्तिं सपरिकरां निरूप्य स्थूलशरीरोत्पत्तिं सप्रकारमाह—एतैरिति । एतैः पूर्वोक्तैरपञ्चीकृतैर्भूतवर्गैस्तमोगुणसम्पन्नैर्मायाविकारैरीशकर्तृकात् तत्सृष्टिक्षणमात्रेण पञ्चीकृतानि स्थूलभूतानि स्युरुत्पद्यन्ते—इति योजना । पञ्चीकरणन्तु पूर्वोक्तानामाकाशादीनां मध्ये एकैकं द्विधा समं विभज्य, तत्रैकं चतुर्धा विभज्य, स्वांशं परित्यज्य इतरांशेषु योजनम् । "त्रिवृतं त्रिवृतमेकैकां करवाणि" (छा० ६ । ३ । ३) इति त्रिवृत्करणश्रुतेः पञ्चीकरणस्याप्युपलक्षणत्वात् पञ्चीकरणं प्रामाणिकमेव । "वैशेष्यात्तद्वादस्तद्वादः" इति न्यायेन स्वांशाधिक्यात् तद्विशेषव्यपदेशोऽपि सम्भवतीत्यर्थः । तेभ्यः पञ्चीकृतेभ्योऽण्डं ब्रह्माण्डमीशसृज्यमीशकर्तृकमुत्पद्यत इत्यर्थः ॥ २१ ॥

**शक्त्याऽजया सृजति सर्वविदीश एष**
**भूम्यन्तरिक्षसुरलोकमहर्जनादीन् ।**
**लोकांश्चतुर्दश तदन्तरनेकदेहान्**
**देवासुरोरगमनुष्यमुखाभिधानान् ॥ २२ ॥**

एवं पञ्चीकृतस्थूलभूतोत्पत्तिं तेभ्यो ब्रह्माण्डोत्पत्तिमभिधाय, अधुना तदन्तश्चतुर्दशभुवनोत्पत्तिं तदन्तरनेकदेवादिदेहोत्पत्तिञ्च दर्शयति—शक्त्येति । भूर्भुवःस्वर्महर्जनस्तपःसत्यमित्यूर्ध्वं सप्तलोकान्, अतलवितलसुतलतलातलमहातलपातालरसातलाभिधानानधः सप्तलोकान्, तदन्तश्चतुर्दशविधान् देवादिनामधेयान् देहान्, एष सर्ववित् तत्पदार्थो महेश्वरोऽजया मायया शक्त्या सृजत्याविर्भावयतीत्यर्थः ॥ २२ ॥

**एतत्समष्टिरपि सर्वगतेश्वरस्य**
**व्यष्टिर्नरस्य वपुरल्पगता पृथक्त्वात् ।**
**विश्वो विराडपि समानविशेषभावा-**
**दैक्यं तयोरभिमतं वनवृक्षवच्च ॥ २३ ॥**

स्थूलशरीरद्वैविध्यं दर्शयति—एतदिति। एतत्पञ्चीकृतपञ्च-महाभूततत्कार्य्यं ब्रह्माण्डं तदन्तवर्त्तिसर्वकार्य्यजातं समष्टिरित्युच्यते। अथवा व्यक्तिषु गोत्वादिवत्सर्वव्यष्टिष्वनुस्यूतं पञ्चीकृतभूतकार्य्यं ब्रह्माण्डात्मकं व्यापकं समष्टिः, वनवत् सकलशरीरसमुदायो वा समष्टिरित्युच्यते। ईश्वरस्योपाधिः सर्वगतेत्यर्थः। एतदुपहितं चैतन्यं विविधं राजमानत्वाद् विराडिति, सर्वनराभिमानत्वाद् वैश्वानर इति चोच्यते। व्यष्टिर्वपुः शरीरं प्रत्येकं पृथक्त्वाद् व्यक्तिवद् भिन्नत्वादल्पगता वृक्षवत् स्वल्पदेशगता। परिच्छिन्नमिति यावत्। नरस्य जीवस्योपाधिरित्यर्थः। तथा प्रत्येकं स्थूलशरीरं गवादिव्यक्तिवद् व्यावृत्तं व्यष्टिरित्युच्यते, तदुपहितं चैतन्यं विश्व इत्युच्यते। सूक्ष्ममपरित्यज्य स्थूलशरीरं प्रविष्टत्वाद् अनयोः समष्टिव्यष्ट्योः सामान्यविशेषयोरिव तादात्म्याभ्युपगमादेतदुपहितयोरपि विश्ववैश्वानरयोरैक्यं तादात्म्यं वनवृक्षयोस्तदवच्छिन्नाकाशयोरिवेत्यर्थः॥ २३॥

**जीवात्मना प्रविशतीश्वर एष सर्व-**
**देहेषु नात इतरा चिदियं महेशात्।**
**सर्वं जगच्च परमेश्वर एव तस्माद्**
**वेदान्तवाग्भिरिति धीरपवर्गहेतुः॥ २४॥**

एवं भूतभौतिकसृष्टिमभिधाय, अधुना "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" (छा० ६। ३। २) इति श्रुतेरीश्वरस्यैव सर्वजीवात्मना प्रवेशश्रवणात्तयोर्भेदगन्धोऽपि नास्तीति दर्शयति—जीवात्मनेति। एष स्वयंप्रकाशतया स्वतो नित्यसिद्ध ईश्वरः स्वसृष्टेषु सर्वदेवनरतिर्यगादिषु जीवात्मना जीवरूपेण प्रविशति। ततः किमित्यत्राह—नेति। अतो हेतोरियं चिदपरोक्षं जीवचैतन्यं महेशाज्जगदाकारपरिणममानमायाधिष्ठानाद् ब्रह्मण इतरा न भवति, भेदानिरू-

पश्चात्ततोऽपि किं तत्राह—तस्मादिति । यस्माद् ब्रह्मैव जीवरूपेणापि देहेषु प्रविष्टं तस्माद्वेदान्तवाग्भिः "तत्त्वमसि" (छा० ६।८।७) "अयमात्मा ब्रह्म" (बृ० २।५।१९) "सर्वं खल्विदं ब्रह्म" (छा० ३।१४।१) "पुरुष एवेदं सर्वम्" "नारायण एवेदं सर्वम्" "आत्मैवेदं सर्वम्" (छा० ७।२५।२) इत्यादिरूपाभिः सर्वं जगत्कार्य्यमात्रं जडत्वेन भासमानमपि चात्कारणमप्यज्ञानादिशब्दवाच्यं परमेश्वर एवेति धीस्तत्त्वज्ञानमपवर्गहेतुः, सर्वं कार्यकारणबाधोपलक्षितनिरतिशयानन्दाविर्भावलक्षणो मोक्षस्तस्य हेतुरित्यर्थः । तथा च दृश्यात्यन्ताभावोपलक्षितप्रत्यगभिन्नब्रह्मात्मतत्त्वबोधे मुमुक्षुभिर्यतितव्यमिति भावः ॥ २४ ॥

**स्वानन्दलेशत इदं जगदीश्वरोऽसौ**
**पाति स्थितौ विविधशक्तिरखण्डबोधः ।**
**साक्षीशजीववपुषा स्थिरजङ्गमेषु**
**तिष्ठन्न चेषदपि लिप्यत आत्मतन्त्रः ॥ २५ ॥**

एवं तत्पदार्थस्य जगज्जन्महेतुत्वं प्रदर्श्य स्थितिहेतुत्वमपि दर्शयति—स्वानन्देति । असावीश्वर इदं जगद् ब्रह्मादिस्थावरान्तं स्थितिसमये स्वानन्दलेशेन पालयति, "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" (बृ० ४।३।१३) इति श्रुतेः; "फलमत उपपत्तेः" (ब्र० सू० ३।२।३८) इति न्यायाच्च। सर्वस्यापि जगतो युगपद्विरुद्धानेकफलदातृत्वे हेतुगर्भं विशेषणं—विविधशक्तिरिति । अनन्तशक्तित्वादचिन्त्यमाहात्म्याच्च सर्वं सङ्गच्छते इत्यर्थः । तस्य सार्वात्म्यमाह—साक्षीति । साक्षी कूटस्थचैतन्यम्, ईशोऽन्तर्यामिचैतन्यम्, जीवोऽन्तःकरणप्रतिबिम्बितचैतन्यम्, एतत्त्रितयवपुषा सर्वात्मरूपेण स्थिरजङ्गमात्मकेषु देहेषु तिष्ठन्निवसन्न चेष-

दपि मनागपि न लिप्यते तच्छरीरविकारैरसंस्पृष्टतया नित्यकूटस्थ इत्यर्थः "असङ्गो ह्ययं पुरुषः ( बृ० ४ । ३ । १५ ) असङ्गो नहि सज्जते" ( बृ० ४ । ४ । २२ ) इति श्रुतेः। तत्र हेतुगर्भं विशेषणम्—आत्मतन्त्र इति। सदा स्वानन्दतृप्तत्वेन नित्यस्वतन्त्र इत्यर्थः। नहि स्वतन्त्रस्यान्यसंसर्गरूपपारतन्त्र्यमस्तीति भावः। तत्रापि हेतुः—अखण्डबोध इति। देशादित्रिविधपरिच्छेदशून्यत्वादखण्डबोधस्वरूप इत्यर्थः। "सत्यं ज्ञानमनन्तं ब्रह्म" ( तै० २ । १ । १ ) इति। नहि अखण्डबोधस्य कदापि स्वातन्त्र्यव्याहतिरिति भावः ॥ २५ ॥

**सुप्तौ लयं व्रजति विश्वमिदं स्वहेतौ**
**संस्काररूपत इतः पुनरप्युदेति।**
**स्वाविद्यया न तु समूलमुपैति नाशं**
**तस्मान्नृणां स्मरणमुख्यमपीक्ष्यतेऽत्र ॥ २६ ॥**

एवं स्थितिहेतुत्वमभिधायेदानीं प्रलयहेतुत्वं तस्य प्रदर्शयितुं चतुर्विधप्रलयं निरूपयिष्यन्नादौ नित्यप्रलयं सुषुप्तिरूपं सप्रकारं निरूपयति—सुप्ताविति। सुषुप्तिर्नित्यप्रलयः, तत्रेदं सकलं विश्वं कार्यं लयं व्रजति। ननु तर्हि तत्कार्य्यमात्रविलये धर्माधर्मादिविलयात् सुप्तोत्थितस्य सुखदुःखाद्यनुपपत्तिरित्याशङ्क्य धर्माधर्म्मयोः पूर्वसंस्काराणाञ्च तदा सुषुप्तौ कारणात्मनाऽवस्थानान्नैवमित्याह—स्वहेताविति। तथा च कारणसद्भावात् सुप्तोत्थितस्य न सुखदुःखाद्यनुपपत्तिरित्यर्थः। तदेव विवृणोति—इत इति। इतो धर्माधर्मादेः संस्कारात्मनाऽवस्थानात् स्वाविद्यया इदं विश्वं पुनरपि जागरादावाविर्भवतीत्यर्थः। यतो न तु समूलं नाशमुपैति, तस्मान्नृणां जीवानामत्र जागरे स्मरणादिरपीक्ष्यते इत्यर्थः ॥ २६ ॥

शक्तिद्वयं मनस इष्यत आविमोक्षं
ज्ञानात्मिका लयमुपैति सुषुप्तिकाले ।
शिष्टा क्रिया तत इदं हि शरीरभानं
यद्वान्यदृष्टित इदं भ्रमजं विभाति ॥ २७ ॥

ननु सुप्तावन्तःकरणस्यापि विलयं तदधीनप्राणादिक्रियाया अनुपपत्तिरित्याशङ्क्याह—शक्तिद्वयमिति मनसोऽन्तःकरणस्य द्वे शक्ती—ज्ञानशक्तिः, क्रियाशक्तिश्चेति आविमोक्षं मोक्षपर्यन्तं संसारान्यथानुपपत्त्या इष्यते इत्यर्थः । तत्र ज्ञानशक्तिविशिष्टान्तःकरणं सुषुप्तिकाले लयमुपैति । क्रियाशक्तिविशिष्टान्तःकरणं तत्र शिष्यते । तत एवेदं हि लोकप्रसिद्धं प्राणाद्यवस्थानपूर्वकं शरीरभानं सङ्गच्छते । प्रकारान्तरेण समाधानमाह—यद्वेति । वस्तुतः सुप्तपुंसः स्वदृष्ट्या श्वासाद्यभावेऽप्यन्यदृष्टितस्तदिदं भ्रमजं प्राणादिक्रियासहितं शरीरादि विभाति । तथा च तदुपलब्धेः पुरुषान्तरविभ्रममात्रत्वात् सुषुप्तशरीरोपलम्भवन्न तेनानुपपत्तिः शङ्क्येति भावः ॥ २७ ॥

सुप्तो न कञ्चन यदा परिपश्यतीति
श्रौतं वचो भवति मानमतः सुषुप्तौ ।
साम्यं गतोऽपि परमात्मपदेन जीवः
स्वाज्ञानशेषत उपैति पुनर्भ्रमाब्धिम् ॥ २८ ॥

नित्यप्रलयः सुषुप्तिरित्यत्राऽप्रमाणशङ्काव्युदासाय "यत्रैतत्पुरुषः सुप्तः स्वप्नं न कञ्चन पश्यत्यथास्मिन् प्राण एवैकधा भवति तदैनं वाक् सर्वैर्नामभिः सहाप्येति" ( कौ० ३ । ३ ) "सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति" ( छा० ६ । ८ । १ ) इत्यादिश्रुतिं सुषुप्तौ प्रमाणत्वेनार्थतः पठति—सुप्त इति । सुषुप्तिं प्राप्तः पुरुषो

जाग्रत्स्वप्नवृत्तिद्वयविनिर्मुक्तो भवति। सर्वं स्थूलसूक्ष्मशरीरद्वयं तत्र न पश्यति। सर्वव्यापारोपरमे परमात्मपदेन श्रुतौ सच्छब्दितेन जीवोऽयं साम्यं गतो भवति। अविद्याकामकर्म्मवासनावशेषसद्भावात् पुनर्जाग्रत्स्वप्नरूपप्रपञ्चभ्रमावर्त्ते दुःखसमुद्रमुपैतीति तात्पर्यार्थः ॥ २८ ॥

**सुप्तौ यतः सकलमेति लयं जगत्तद्**
**जाग्रत्युदेति पुनरात्मपदाप्रबोधात्।**
**नित्योऽयमस्ति विलयः श्रुतिवाक्यसिद्धः**
**प्राज्ञत्वमेति खलु यत्र स विश्वसंज्ञः ॥ २९ ॥**

नित्यं प्रलयं सप्रमाणकमुपसंहरति—सुप्ताविति। "सुषुप्तिकाले सकले विलीने तमोभिभूतः सुखरूपमेति" (कै० १।१३) "आनन्द भुक् प्राज्ञः" इत्यादिश्रुतिसिद्धसुषुप्तिरूपनित्यप्रलये सकलसंसारविलयः प्रामाणिकोऽस्तीति पुनरप्यज्ञानवशात् सकलं भूतभौतिकप्रपञ्चं जाग्रदादौ प्रातिभासिकमेव व्यावहारिक्यां दशायां सत्यवदनुभवतीत्यर्थः ॥ २९ ॥

**कार्य्यब्रह्मविनाशहेतुक इति प्रोक्तो लयः प्राकृतो**
**भूतानीह तदुत्थभौतिकगणा ब्रह्माण्डमेतद् गृहम्।**
**सर्वं तत्प्रकृतौ प्रयाति विलयं मायाभिधायां यत-**
**स्तत्त्वज्ञानमृते लयो न परमे ब्रह्माद्वये सम्भवेत्॥ ३०॥**

द्वितीयं प्राकृताख्यं प्रलयं निरूपयति—कार्य्यब्रह्मेति। द्विपरार्द्धान्ते कार्यब्रह्मणो यो विनाशस्तन्निमित्तकः सकलकार्य्यविनाशः प्राकृतो लयः प्रोक्त इति सम्बन्धः। यदा तु प्रागेवोत्पन्नब्रह्मसाक्षात्कारस्य

कार्य्यब्रह्मणः "सहसिद्धं चतुष्टयम्" इति शास्त्राद् ब्रह्माण्डाधिकारलक्षण-प्रारब्धकर्म्मसमाप्तौ विदेहकैवल्यात्मिका परममुक्तिस्तदा तल्लोकवासिनामप्युत्पन्नब्रह्मसाक्षात्काराणां ब्रह्मणा सह विदेहकैवल्यम्,

"ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरं ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ।"

इति श्रुतेः । एवं स्वलोकवासिभिः सह इह कार्य्यब्रह्मणि मुच्यमाने भूतानि वियदादीनि तेभ्यो भूतेभ्य उत्तिष्ठन्तीति तदुत्था भौतिकगणाः स्थावरजङ्गमात्मका देहास्तदाधाराश्चतुर्दश लोका एतेषां सर्वेषां तदधिष्ठातुश्च ब्रह्मणो गृहं ब्रह्माण्डम्, एतत्सर्वं प्रकृतौ मायाविद्यादिशब्दवाच्यायां विलयं प्रयाति, न तु ब्रह्मणि, यतस्तत्त्वज्ञानं विना परमे ब्रह्माद्वये लयो न सम्भवेत्, बाधरूपविनाशस्यैव ब्रह्मनिष्ठत्वात् । अतोऽयं लयः प्राकृत इत्युच्यते इत्यर्थः । तदुक्तं पुराणे—

"द्विपरार्द्धे त्वतिक्रान्ते ब्रह्मणः परमेष्ठिनः ।
तदा प्रकृतयः सप्त कल्प्यन्ते प्रलयाय हि ॥
एष प्राकृतिको राजन् ! प्रलयो यत्र लीयते ।" इति ॥ ३० ॥

**कार्य्यब्रह्मदिनावसानविलयः प्रोक्तः स नैमित्तिको**
**ब्रह्माहस्तु सहस्रमत्र मुनिभिः प्रोक्तं युगानां खलु ।**
**तावत्येव हिरण्यगर्भरजनी यावत्प्रमाणं दिनं**
**यत्रोत्पद्य विलीयते त्रिभुवनं सोऽयं लयोऽवान्तरः।३१।**

नैमित्तिकप्रलयं तृतीयं दर्शयति—कार्येति । कार्य्यब्रह्मणो दिवसावसाननिमित्तकत्रैलोक्यमात्रप्रलयो नैमित्तिकप्रलयः । ब्रह्मदिवसश्चतुर्युगसहस्रपरिमितकालः । "चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यते ।" इत्येवं मुनिभिः प्रोक्तम् । प्रलयकालोऽपि दिवस-

कालपरिमितः, रात्रिकालस्य दिवसकालतुल्यत्वादित्याह—ताव-तीति। एषोऽयमवान्तरो नैमित्तिक इति। तदुक्तम्—

"एष नैमित्तिकः प्रोक्तः प्रलयो यत्र विश्वसृक्।
शेतेऽनन्तासने नित्यमात्मसात्कृत्य चात्मभूः॥" इति॥ ३१॥

**ब्रह्मज्ञाननिमित्तकः प्रविलयोऽस्त्यात्यन्तिकस्तुर्यको**
**नानाजीवमते क्रमेण स भवेन्मोक्षः स्वरूपस्थितिः।**
**एकाज्ञानिमते भवेत्स युगपन्मोक्षोऽप्यविद्याक्षये**
**तत्रैवं प्रलया महेश्वरकृताः कर्मोपरामादिभिः॥ ३२॥**

क्रमप्राप्तं तुरीयं प्रलयमाह—ब्रह्मज्ञानेति। तुरीयप्रलयो ब्रह्म-साक्षात्कारनिमित्त आत्यन्तिकः। स च मोक्षस्वरूपो नानाजीवादेः क्रमेण भवति, "सर्वे एकीभवन्ति" इत्यादिश्रुतेः। एकाज्ञानिमते एकजीववादे सर्वमोक्षो युगपदेवाविद्याया बाधे तत्कार्य्यबाधादन्यानव-शेषादिति। तत्र आद्यास्त्रयोऽपि प्रलयाः कर्मोपरमनिमित्ताः। तुरीयस्तु ज्ञानोदयनिमित्तो लयो ज्ञानेन सहैवेति शेषः॥ ३२॥

**सृष्टिक्रमात्प्रविलयोऽविपरीत इष्टो**
**हेतुक्षये स्थितिमिदं लभते न कार्य्यम्।**
**स्वादृष्टनाशत उपैति लयं स्वहेतौ**
**सर्वक्षये परमकारणतां प्रयाति॥ ३३॥**

एवं चतुर्विधप्रलयं निरूप्य तस्येदानीं क्रमं निरूपयति—सृष्टीति। भूतानां भौतिकानाञ्च कारणलयक्रमेण लयोऽयुक्तः, कारणलयसमये कार्याणामाश्रयान्तराभावेनावस्थानानुपपत्तेः। किन्तु सृष्टिक्रमाद्विपरीत-क्रमेण प्रविलय इष्टोऽस्ति। स्वादृष्टनाशतः कार्य्यं स्वहेतौ लयमुपैति।

तथा च तत्तत्कार्य्यनाशे तत्तज्जनकादृष्टनाशस्यैव प्रयोजकतया उपादाननाशस्याप्रयोजकत्वात् । अन्यथा न्यायमतेऽपि महाप्रलये पृथिवीपरमाणुगतरूपरसादेरविनाशापत्तेरिति भावः । अतः सर्वत्तये सति कार्यमात्रं कारणतां कारणस्वरूपेणावस्थानं प्रयातीत्यर्थः ॥ ३३ ॥

**पृथ्व्यप्सु तेजसि जलं लयमेति वायौ**
**तेजो मरुत्तु गगने खमहङ्कृतौ च ।**
**साऽहङ्कृतिर्महति याति लयं महांश्च**
**मायामयः स्वप्रकृतौ विलयं प्रयाति ॥३४॥**

विपरीतक्रमं दर्शयति—पृथिवी अप्सु, आपस्तेजसि, तेजो वायौ, वायुर्गगने, गगनमहङ्कृतौ, साऽहङ्कृतिरहङ्कारो महति महत्तत्त्वे, हिरण्यगर्भाहङ्कारेण महत्तत्त्वञ्च मायाविकारत्वात् स्वप्रकृतौ मायायां विलयं प्रयातीति योजना । तदुक्तं—

"जगत्प्रतिष्ठा देवर्षे ! पृथिव्यप्सु प्रलीयते ।
तेजस्यापः प्रलीयन्ते तेजो वायौ प्रलीयते ॥
वायुश्च लीयते व्योम्नि तच्चाव्यक्ते प्रलीयते ।
अव्यक्तं पुरुषे ब्रह्मन् ! निष्कले सम्प्रलीयते ॥" इति ॥ ३४ ॥

**विश्वोद्भवस्थितिलयैककरत्वमेव**
**स्याल्लक्षणं भगवतोऽस्य तटस्थमेतत् ।**
**अध्यस्तमेव परमात्मनि कार्य्यजातं**
**तस्मिन्निषिद्धमिदमद्वयमेव सिद्धम् ॥ ३५ ॥**

एवं जगज्जन्मस्थितिप्रलयहेतुत्वं ब्रह्मणस्तटस्थलक्षणं सिद्धमित्याह—विश्वोद्भवेति । तटस्थलक्षणनिरूपणेन यत्फलितं तदाह—अध्यस्तमिति ॥ ३५ ॥

**सृष्ट्यादिवाक्यमपि तत्परमद्वितीये**
**ह्यारोप्य तत्र सकलं प्रतिषिध्यतेऽदः ।**
**तेनापि सच्चिदमितात्मपदं विशुद्धं**
**सिद्ध्येदखण्डमिति वेदशिरो मतं सत् ॥३६॥**

ननु वेदान्तैर्ब्रह्मणि जगत्कारणत्वेन प्रतिपाद्यमाने सति ब्रह्म सप्रपञ्चं स्यात्। अन्यथा सृष्टिवाक्यानामप्रामाण्यापत्तेरित्याशङ्क्य नहि सृष्टिवाक्यानां सृष्टौ तात्पर्य्यम्, किन्तु अद्वितीये ब्रह्मण्येव, तत्प्रतिपत्तौ कथं सृष्टेरुपयोगः? इत्थं यदि सृष्टिमनुपन्यस्य निषेधो ब्रह्मणि प्रतिपाद्येत, तदा ब्रह्मणि प्रतिषिद्धस्य प्रपञ्चस्य वायौ प्रतिषिद्धस्य रूपस्येव ब्रह्मणोऽन्यत्रावस्थानशङ्कया न निर्विचिकित्समद्वितीयत्वं प्रतिपादितं स्यात्। ततः सृष्टिवाक्याद् ब्रह्मोपादेयत्वज्ञाने सति उपादानं विना कार्यस्यान्यत्र सद्भावशङ्कायां निरस्तायां "नेति नेति" ( बृ० २।६।६ ) इत्यादिनापि ब्रह्मण्यपि तस्यासत्त्वोपपादने प्रपञ्चस्य तुच्छत्वावगमे निरस्तनिखिलद्वैतविभ्रममखण्डं सच्चिदानन्दैकरसं ब्रह्म सिद्ध्यतीति परम्परया सृष्टिवाक्यानामप्यद्वितीये ब्रह्मण्येव तात्पर्य्यमित्याशयेन समाधत्ते—सृष्ट्यादिवाक्यमिति ॥ ३६ ॥

**एवं तटस्थनिजरूपसुलक्षणाभ्यां**
**संलक्षितं भवति तत्पदवाच्यमच्छम् ।**
**चैतन्यमीश्वरपदास्पदमात्मशक्ति-**
**मायाश्रितं निजमहिम्नि सदा स्थितं तत् ॥३७॥**

तदेवं स्वरूपतटस्थलक्षणलक्षितं तत्पदार्थनिरूपणमुपसंहरति—एवमिति। तत्पदवाच्यं चैतन्यमीश्वरपदास्पदं मायाशक्त्याश्रितं तट-

स्थलक्षणलक्षितं निजमहिम्नि स्थितं तदेवाच्छं तत्पदलक्ष्यं स्वरूपलक्षण-लक्षितमिति विवेकः ॥ ३७ ॥

केचित्तु मायाप्रतिबिम्बमीश्वरं
वदन्ति तेषामयमाशयो भवेत् ।
जीवेशसाधारणचिद्घनं पदं
बिम्बं विशुद्धात्मतया पृथक्स्थितम् ॥३८॥

एवं वेदान्तवेद्यं ब्रह्मैकमेवाद्वितीयमिति प्रसाध्य, तदैक्यबोध-सिद्धये तत्त्वंपदार्थोपदेशसरणयो नानाविधास्तत्त्वविद्भिर्निरूपिताः, तेषु पक्षेषु काँश्चित्पक्षानिह दर्शयति—केचित्त्विति । तत्पदवाच्यमीश्वर-चैतन्यं मायायां प्रतिबिम्बरूपं वदन्ति । तेषामयमाशयो भवति जीवपरमेश्वरसाधारणं चैतन्यमात्रं बिम्बं विशुद्धात्मतया पृथक्स्थितम् भवतीत्यर्थः ॥ ३८ ॥

मायाशक्तौ प्रतिफलमिदं ह्यीशचैतन्यमिष्टं
कार्योपाधौ मनसि फलजाज्जीवचैतन्यमेतत् ।
एतत्पक्षे प्रतिफलचितोर्बुद्ध्यविद्यास्थयोः स्या-
दैक्यं पाथोनिधिघटजलस्यार्कवत्सम्मतञ्च ॥ ३९ ॥

एतदेव विवृणोति—मायेति । ब्रह्मचैतन्यबिम्बभूतस्य मायाशक्तौ प्रतिफलं प्रतिबिम्बमीश्वरचैतन्यमिष्टं भवति । कार्योपाधावन्तःकरणे प्रतिबिम्बनाच्चैतन्यं जीवचैतन्यं भवति, "कार्योपाधिरयं जीवः कारणो-पाधिरीश्वरः" इति वचनात् । एतन्मते जलाशयगतघटशरावादिजल-गतसूर्य्यप्रतिबिम्बयोरिव जीवपरमेश्वरयोर्बुद्ध्यविद्यास्थयोः कार्य्यकार-णोपाधिप्रतिबिम्बचैतन्ययोरैक्यं सम्मतं स्यादित्यर्थः ॥ ३९ ॥

**स्याद्‌ व्यापकोपाधितयेश्वरस्याऽ-**
**पि व्यापकत्वं प्रकृतेश्च हेतोः ।**
**बुद्धेः परिच्छिन्नतयाऽल्पकत्वं**
**जीवस्य लोके तदुपाधिकस्य ॥ ४० ॥**

तयोर्व्यापकत्वपरिच्छिन्नत्वभेदोऽपि तत्तदुपाधिकृत इत्याह—स्यादिति । प्रकृतेरुपादानस्य हेतोर्निमित्तस्य जगज्जन्मादेरभिन्ननिमित्तोपादानरूपस्येश्वरस्य व्यापकत्वं व्यापकोऽपरिच्छिन्नो मायाख्य उपाधिर्यस्य तस्य भावस्तत्ता तया बुद्धेः परिच्छिन्नतया तदुपाधिकस्य जीवस्यापि लोके व्यवहारदशायामल्पकत्वं परिच्छिन्नमिति योजना ॥ ४० ॥

**एतन्मते जीव इवेश्वरेऽप्य-**
**विद्याकृता दोषगुणा भवेयुः ।**
**उपाधिधर्म्मः प्रतिबिम्बगः स्या-**
**दितोऽस्ति बिम्बः परमेश्वरोऽसौ ॥ ४१ ॥**

एतस्मिन्पक्षे बहुविरोध इत्याह—एतन्मत इति । अविद्याकृता दोषा जीवे इव परमेश्वरेऽपि स्युरुपाधेः प्रतिबिम्बपक्षपातित्वादित्यस्वरसाद्बिम्बचैतन्यमेवासौ परमेश्वर इति योजना ॥ ४१ ॥

**बिम्बत्वाक्रान्तमेकं निरवधि-**
**वपुषाऽस्तीशचैतन्यमच्छं**
**छायात्वाक्रान्तमेतन्निजपद-**
**विमुखं जीवचैतन्यमिष्टम् ।**

बिम्बाद्याभासहेतुः प्रकृति-
रियमिहोपाधिरेकात्मवादे
नानाजीवात्मवादे मन इति
कथितो बिम्बनादा उपाधिः ॥ ४२ ॥

इमं पक्षं विवृणोति—बिम्बत्वाक्रान्तमिति । एकमेव चैतन्यं बिम्बत्वाक्रान्तमीश्वरचैतन्यमपरिच्छिन्नस्वरूपेणाऽत्यन्तनिर्मलं प्रतिबिम्बत्वाक्रान्तञ्च जीवचैतन्यं स्वस्वरूपावरणेन संसाराभिमुखत्वमेव स्वस्माद्वैमुख्यं तस्येत्यर्थः। बिम्बप्रतिबिम्बकल्पनोपाधिश्च एकजीववादे अविद्या प्रकृतिशब्दवाच्या, अनेकजीववादे मन इति—अन्तःकरणान्येव। अविद्यान्तःकरणोपाधिप्रयुक्तो जीवपरभेद इत्यर्थः ॥ ४२ ॥

स्वाधीनीकृत्य मायां परम-
सुखवपुः सर्ववित्सर्वशक्ति
ब्रह्माऽद्वैतं विशुद्धं व्यवहृति-
विषये सर्वकर्त्रीशभावम् ।
प्राप्तं चैतन्यमन्तःकरणगत-
मगाज्जीवभावं स्वशक्त्या
भेदस्त्वौपाधिकोऽस्त्यद्वय-
सुखवपुषोः प्रत्यगात्मेशयोर्हि ॥ ४३ ॥

अयं पक्षो युक्तियुक्त इति प्रदर्शयितुं तद्व्यवस्थामाह—स्वाधीनीकृत्येति। ब्रह्मचैतन्यं परमसुखवपुरद्वयानन्दस्वरूपं मायां स्वाधीनीकृत्येशभावं प्राप्तम्, अत एव व्यवहारदशायां सर्वकर्त्रपि विशुद्धमद्वैतमेव, सर्ववित्त्वात्सर्वशक्तित्वादीश्वरत्वं तस्य। तदेव चैतन्यमन्तः-

करणगतं जीवभावमगात् प्राप्तम् । स्वशक्त्या मायया कार्य्यकारणरूपया भेदोऽद्वयसुखस्वरूपयोः प्रत्यगात्मपरमेश्वरयोर्हि श्रुतिस्मृतिविद्वज्जनप्रसिद्ध औपाधिकोऽस्तीत्यर्थः ॥ ४३ ॥

**औपाधिको दोषगणोऽस्ति जीवे**
**भ्रान्त्येह बुद्धिप्रतिबिम्ब एव ।**
**न बिम्बभूते परमेश्वरे स्या-**
**दुपाधिपक्षः प्रतिबिम्ब एव ॥ ४४ ॥**

पुनरस्य पक्षस्य निर्दुष्टत्वं द्रढयति—औपाधिक इति । उपाधेः प्रतिबिम्बपक्षपातित्वाज्जीवे एवौपाधिको दोषगणो न बिम्बभूते परमेश्वरे तेषां प्रवेश इत्यर्थः ॥ ४४ ॥

**एतन्मते व्योमगभास्करस्य**
**जलस्थभानोरिव चास्त्यभेदः ।**
**प्रत्यक्चिदद्वैतसुखात्मनोर्हि**
**औतोऽप्यखण्डैकरसस्वभावात् ॥ ४५ ॥**

एतन्मते जीवपरयोरैक्यप्रकारमाह—एतन्मते इति । एतदुक्तं भवति विभेदजनके ज्ञाने नाशमात्यन्तिकं गते आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यतीति स्मृत्या एकस्यैवाज्ञानस्य जीवेश्वरविभागोपाधित्वप्रतिपादनाद्बिम्बप्रतिबिम्बभावेन जीवेश्वरयोर्विभागः नोभयोरपि प्रतिबिम्बभावेन उपाधिद्वयमन्तरेणोभयोः प्रतिबिम्बत्वायोगात् । तत्रापि प्रतिबिम्बो जीवः, बिम्बस्थानीय ईश्वरः, तथा सत्येव लौकिकबिम्बप्रतिबिम्बदृष्टान्तेन स्वातन्त्र्यमीश्वरस्य तत्पारतन्त्र्यं जीवस्य च युज्यते "प्रतिबिम्बगताः पश्यन्नृजुवक्रादिविक्रियाः । पुमान् क्रीडेद्यथा

ब्रह्म तथा जीवस्थविक्रिया:'' इति कल्पतरूक्तरीत्या ''लोकवत्तु लीलाकैवल्यम्'' ( ब्र० सू० २ । १ । ३३ ) इति सूत्रमपि सङ्गच्छते इति । तथा चाज्ञानप्रतिबिम्बितस्य जीवस्यान्तःकरणरूपोऽज्ञानपरिणामभेदो विशेषाभिव्यक्तिस्थानं सर्वतः प्रसृतस्य सवितृप्रकाशस्य दर्पण इव, अतस्तस्य तदुपाधिकत्वव्याहारोऽपि, न तावताऽज्ञानोपाधिपरित्यागः, अन्तःकरणोपाधिपरिच्छिन्नस्यैव चैतन्यस्य जीवत्वे योगिनः कायव्यूहाधिष्ठानत्वानुपपत्तेः । न च योगप्रभावाद्योगिनोऽन्तःकरणं कायव्यूहाभिव्यक्तियोग्यं वैपुल्यं प्राप्नोतीति तदवच्छिन्नस्य कायव्यूहाधिष्ठानत्वं युज्यत इति वाच्यम्। ''प्रदीपवदावेशस्तथाहि दर्शयति'' ( ब्र० ४।४।१५ ) इति शास्त्रोपान्त्याधिकरणभाष्यादिषु कायव्यूहे प्रतिदेहमन्तःकरणस्य चक्षुरादिवच्छिन्नभिन्नस्यैव योगप्रभावात् सृष्टेरुपवर्णनात् । प्रतिबिम्बे बिम्बाद्भेदमात्रस्याध्यस्तत्वेन स्वरूपेण तस्य सत्यत्वान्न प्रतिबिम्बरूपजीवस्य मुक्त्यन्वयासम्भव इति न तदतिरेकेण मुक्त्यन्वयावच्छिन्नरूपं जीवान्तरं वा प्रतिबिम्बजीवातिरिक्तं जीवेश्वरविलक्षणं कूटस्थशब्दितं चैतन्यान्तरं वा कल्पनीयम् । ''अविनाशी वा अरेऽयमात्मा'' (बृ० ४ । ५ । १४) इति श्रवणं जीवस्य तदुपाधिनिवृत्तौ प्रतिबिम्बभावापगमेऽपि स्वरूपं न विनश्यतीत्येतत्परम्, न तदतिरिक्तं कूटस्थं नाम चैतन्यान्तरमितिपरम्, जीवोपाधिनान्तःकरणादिनावच्छिन्नं चैतन्यं बिम्बभूत ईश्वर एव। ''यो विज्ञाने तिष्ठन्'' ( बृ० ३ । ७ । २२ ) इत्यादिश्रुत्या ईश्वरस्यैव जीवसन्निधानेन तदन्तर्यामिभावेन विकारान्तरवस्थानश्रवणादिति समस्तप्रघट्टकतात्पर्य्यार्थः ॥ ४५ ॥

**व्योम्नोऽप्यरूपस्य जलाद्युपाधौ**
**प्रत्यक्षदृष्टः प्रतिबिम्बभावः ।**
**तथाऽस्वरूपस्य चिदद्वयस्य**
**मायाद्युपाधौ प्रतिबिम्बभावः ॥ ४६ ॥**

ननु न नीरूपस्य ब्रह्मणः प्रतिबिम्बभावः प्रमाणपथमवतरति, यतो रूपवत एव तथात्वं दृश्यते, इत्याशङ्क्याह—व्योम्नोऽपीति। "यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा" (उ० नि०) "आभास एव च" (ब्र० सू० २।३।५०) "अत एव चोपमा सूर्य्यकादिवत्" (ब्र० सू० ३।२।१८) इति श्रुतिसूत्राभ्यां ब्रह्मणः प्रतिबिम्बभावः प्रामाणिकः। नीरूपस्याप्याकाशस्य जलादौ प्रतिबिम्बो दृष्टः, अन्यथा जानुदघ्नजलेऽत्यगाधत्वप्रतीतिर्न स्यादिति तात्पर्यार्थः ॥ ४६ ॥

**शुद्धं स्वतो ब्रह्म निजप्रमादा-**
**ज्जीवत्वमासाद्य भवं प्रयाति।**
**यथा हि कुन्तीसुत एव कर्णो**
**राधेय इत्थं प्रथितिं प्रयातः ॥ ४७ ॥**

केचित्—कौन्तेयस्यैव राधेयत्ववदविकृतस्यैव ब्रह्मण एवाविद्यया जीवभावो व्याधकुलसंवर्द्धितराजकुमारदृष्टान्तेन "ब्रह्मैव स्वाविद्यया संसरति स्वविद्यया विमुच्यते", इति बृहदारण्यकभाष्ये प्रतिपादनाद् राजसूनोः स्मृतिप्राप्तौ व्याधभावो निवर्त्तते, "यथैवमात्मनोऽज्ञस्य तत्त्वमस्यादिवाक्यतः"—इति वार्त्तिकोक्तेश्च। एवञ्च स्वाविद्यया जीवभावमापन्नस्यैव ब्रह्मणः सर्वप्रपञ्चकल्पकत्वादीश्वरोऽपि सह सर्वज्ञत्वादिकारणत्वादिधर्म्मैः स्वप्नोपलब्धदेवतावज्जीवकल्पितः—इत्याहुः, इत्यभिप्रेत्य पक्षान्तरं दर्शयति—शुद्धमिति ॥ ४७ ॥

**स चाप्यवस्थात्रयवांश्च जाग्रत्**
**स्वप्नः सुषुप्तिस्त्विति ता अवस्थाः।**

तत्रेन्द्रियद्वारत एव बोधा-
वस्था भवेज्जाग्रदविद्ययोत्था ॥ ४८ ॥

एवं जीवेश्वरस्वरूपनिरूपणपरान् कांश्चित्पद्यान् प्रदर्श्येदानीं त्वं-पदार्थं सपरिकरं निरूपयति—स चेति। स जीवोऽवस्थात्रयवान् भवति। ता अवस्थास्तु जाग्रत्स्वप्नसुषुप्तिरूपाः। तत्र जाग्रल्लक्षणमाह—इन्द्रियेति। इन्द्रियजन्यज्ञानावस्था जाग्रदिति। साऽवस्था स्वाज्ञा-नोत्था जीवस्येति स्वरूपकीर्त्तनमित्यर्थः ॥ ४८ ॥

स्वप्नाद्यवस्थान्तर इन्द्रियाणा-
मभावतो लक्षणमस्त्यदुष्टम् ।
ज्ञानं भवेदिन्द्रियजन्यमत्र
वृत्त्यात्मकोऽन्तःकरणस्य भागः ॥ ४९ ॥

तत्रातिव्याप्तिशङ्कां परिहरति—स्वप्नादिति। अवस्थान्तरे स्वप्न-सुषुप्त्योरिन्द्रियाभावान्नातिव्याप्तिरित्यर्थः। इन्द्रियजन्यज्ञानञ्चाऽन्तः-करणवृत्तिः स्वरूपज्ञानस्यानादित्वेनाजन्यत्वादित्यर्थः ॥ ४९ ॥

अनिन्द्रियोत्था विषयास्पदा धियोऽ-
परोक्षवृत्तिः प्रतिभासरूपिणी ।
स्वप्नाभिधा सा न सुषुप्तिजाग्रतो-
रतिप्रसङ्गो निजलक्षणस्य वा ॥ ५० ॥

जाग्रद्भोगप्रदकर्म्मोपरमे सति जाग्रदनुभवजन्यसंस्कारोद्भूतविषय-तज्ज्ञानावस्थारूपां स्वप्नावस्थां लक्षयति—अनिन्द्रियोत्थेति। इन्द्रिया-जन्यविषयगोचराऽपरोक्षान्तःकरणवृत्त्यवस्था स्वप्नावस्थेति लक्षणस-

मुदितार्थः । जाग्रदवस्थाऽव्याप्त्यर्थम्—इन्द्रियाजन्येति । अविद्यावृत्ति-मत्यां सुषुप्तावतिव्याप्तिवारणाय—अन्तःकरणवृत्तीति हृदि निधायाह—नेति ॥ ५० ॥

**सुप्तिस्त्वविद्याविषयाऽतिसूक्ष्माऽ-**
**विद्यात्मिका वृत्तिरितीष्यतेऽतः ।**
**जाग्रत्यविद्याकृतिवृत्तिरन्या**
**स्वप्ने तथान्तःकरणस्य वृत्तिः ॥ ५१ ॥**

जाग्रत्स्वप्नोभयभोगप्रदकर्म्मोपरमे सति विशेषविज्ञानोपरमात्मिकां कारणात्मनावस्थितिरूपां सुषुप्तिं लक्षयति—सुप्तिरिति । सुषुप्तिर्नाम अविद्यागोचराऽविद्यावृत्त्यवस्थेति । जाग्रत्स्वप्नयोरविद्याकारावृत्तेरन्तः-करणवृत्तित्वान्न तत्रातिव्याप्तिरित्यर्थः ॥ ५१ ॥

**अत्रैव केचिन्मृतिमूर्च्छयोर्द्वयो-**
**राहुर्ह्यवस्थान्तरतां विपश्चितः ।**
**सुप्तौ तथान्तर्गततामपीतरे**
**न तद्विचारे फलमत्र किञ्चन ॥ ५२ ॥**

मुद्गरप्रहारादिजनितविषादेन विशेषज्ञानोपरमावस्था मूर्च्छावस्था । तदुक्तम्—"मुग्धेऽर्द्धसम्पत्तिः परिशेषात्" (ब्र० ३ । २ । १० ) इति । एतच्छरीरभोगप्रापककर्म्मोपरमेण संपिण्डितकरणग्रामावस्था भावि-शरीरप्राप्तिपर्यन्तावस्था मरणावस्थेति लक्षणमभिप्रेत्याह—अत्रैवेति । अत्र जीवावस्थाविचारे केचिच्छास्त्रविदो मृतिमूर्च्छयोर्द्वयोरवास्थन्तर-तामाहुः कथयन्ति । हि लोकप्रसिद्ध्येति । इतरे सुषुप्तावेवान्तर्भाव-माहुः । तत्र तयोरवस्थात्रयान्तर्भावबहिर्भावयोरत्र त्वंपदार्थे निरूपणे उपयोगाभावान्न प्रयत्यते इति तात्पर्य्यार्थः ॥ ५२ ॥

**भ्रमत्यवस्थात्रयसंयुतो भवे**
**स्वाविद्यया<ऽ>नात्मनि तत्त्वधीर्जनः ।**
**अनाद्यविद्यैव चिदद्वयात्मनि**
**प्रपञ्चभानस्य हि कारणं मतम् ॥ ५३ ॥**

एवमवस्थात्रयं सप्रकारं निरूप्येदानीमविद्याकार्य्यावस्थात्रयाध्यासवशेन जीवः संसरति । तत्र चाविद्यैव सर्वसंसारानर्थभावस्य कारणमित्याह—भ्रमतीति ॥ ५३ ॥

**यद्यप्युपादानतया<ऽ>खिलस्या-**
**विद्या मता या परमात्मनिष्ठा ।**
**साक्षात्प्रवक्तुं न च शक्यते सा**
**तथापि कार्यात्मतयोच्यते<ऽ>त्र ॥ ५४ ॥**

अविद्यैव सर्वानर्थनिदानमित्युक्ते कासावविद्येत्यपेक्षायां साक्षान्निर्देष्टुमशक्यतया कार्याकारेण परिणता सा निर्दिश्यते इत्याह—यद्यपीति । अत्र वेदान्तशास्त्रे इत्यर्थः ॥ ५४ ॥

**सत्यं सुखं चिद्घनमद्वयं परं**
**सन्तं यया<ऽऽ>त्मानमयं प्रपद्यते ।**
**संसार्यहं जीव इति प्रतीतितः**
**साऽनर्थधामास्ति विकल्पदायिनी ॥ ५५ ॥**

असङ्गोदासीनस्वभावे प्रत्यगभिन्ने ब्रह्मणि संसारसम्बन्धप्रतीत्यन्यथानुपपत्त्या<ऽ>त्यन्तासम्भावितप्रदर्शिनी तत्त्वज्ञानमात्रैकनिवर्त्त्या मायादिशब्दवाच्या<ऽ>विद्या कल्प्यते इत्यभिप्रेत्याह—सत्यमिति । सच्चिदान-

न्तानन्दाद्वयमात्मानं सन्तमयं पुरुषो यया सर्वानर्थनिदानभूतया व्यामोहकशक्त्या वृतः सन् संसारी जीवोऽहमिति मिथ्याज्ञानात् प्रपद्यते, सा साक्षिगम्या अविद्यास्तीति योजना ॥ ५५ ॥

**अध्यासतो ब्रह्मणि चिद्घने परे**
**जीवत्वमाभाति भवाब्धिमज्जनम् ।**
**जाग्रन्मुखा भ्रान्तिकृता दशा इमाः**
**कूटस्थ आत्मन्यभिमन्यते मृषा ॥ ५६ ॥**

अविद्याप्रयुक्ताध्यासादेव ब्रह्मस्वरूपे प्रत्यगात्मनि जीवत्वं जाग्रदाद्या दशाश्चावभासन्ते इत्याह—अध्यासत इति । भवाब्धौ मज्जनं यस्मात्तज्जीवत्वमध्यासतः प्रत्यगभिन्ने ब्रह्मणि आभातीत्यन्वयः । भ्रान्तिकृता मिथ्याज्ञानप्रयुक्ता इमा जाग्रदाद्या दशाः कूटस्थे तुरीये आत्मनि मृषैवाभिमन्यते इति योजना ॥ ५६ ॥

**तत्राभिमानेन निविष्टबुद्धिर्वि-**
**स्मृत्य तत्त्वं परमेश्वरं स्वम् ।**
**स्रगादिभोगेषु निबद्धतृष्णः**
**संसारजाले पततीतरः सन् ॥ ५७ ॥**

एवं स्वस्वरूपाज्ञानेन प्रत्यगात्मनो जीवभावं प्रदर्श्येदानीं तत्प्रयुक्तबाह्यविषयाभिलाषनिगडबद्धस्य संसारसिन्धुपातोऽवश्यम्भावीत्याह—तत्रेति । जाग्रदाद्यवस्थावति लिङ्गदेहे तदालये स्थूलशरीरे चाभिमानेन जीवः अहं कर्त्ता, भोक्ता, मनुष्यो, ब्राह्मणोऽहम्, इत्याद्यात्मकेन निविष्टा नितरां प्रविष्टा बुद्धिर्निश्चयात्मिका चेतोवृत्तिर्यस्य सः, स्वं स्वात्मतत्त्वं परमेश्वराभिन्नं विस्मृत्य तद्विस्मरणेन स्रगादिभोगेषु निबद्धा तृष्णा

यस्य स संसारजाले सूत्रकृते जाले मत्स्य इव इतरो वस्तुतस्तद्विलक्षण-त्वात् संसारसम्बन्धशून्योऽपि पततीति योजना ॥ ५७ ॥

**यस्तत्पदार्थः परमेश्वरो हि तद्**
**भक्त्या विशुद्ध्या मतिरस्य शुद्ध्यति ।**
**न तां विना तत्त्वधियः समुद्भवो**
**न तां विना मोक्षमुपैति कश्चन ॥ ५८ ॥**

एवमध्यासकृतानर्थप्राप्तिं प्रदर्श्येदानीं तन्निवृत्तये परमपुरुषार्थसा-धनभूमिः भगवद्भक्तिरेव मुमुक्षुभिरादर्त्तव्येत्याह—य इति । यः जगज्जन्मादिहेतुरपि सत्यज्ञानानन्दानन्तस्वरूपस्तत्पदार्थो भगवान् वासुदेवः परमेश्वरशब्दवाच्यो ब्रह्माद्यैर्जगदीश्वरैः पूज्यपादाम्भोजः । हीति श्रुतिस्मृतिपुराणेतिहासादिप्रसिद्धिद्योतकः । तस्य भक्तिर्भजनं तत्परत्वलक्षणं तया विशुद्ध्या फलाभिलाषादिकलङ्कशून्यया अस्य मुमुक्षोर्मतिः शुद्ध्यति । शुद्धिजनितविवेकादिसम्पन्नतया शुद्धवस्तुप्रवे-शयोग्या भवतीत्यर्थः । एतदेव व्यतिरेकमुखेन द्रढयति—न तामिति । तादृशशुद्धिहेतुभगवद्भक्तिं विना तत्त्वज्ञानजन्म नास्ति, न तत्त्वज्ञान-मन्तरेण कश्चनापि मोक्षमुपैति । "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" ( श्वे० ६।१५ ) इति श्रुतेरित्यर्थः ॥ ५८ ॥

**त्रेधास्त्यशुद्धिस्त्वम आत्ममोहिनी**
**स्वाज्ञानविक्षेपमलाख्यभेदतः ।**
**तत्रान्तिमा शुद्धिरघाभिधा धियो**
**यज्ञादिभिर्नश्यति वेदचोदितैः ॥ ५९ ॥**

एवं भगवद्भक्तिरेव सकलाशुद्धिविध्वंसनपूर्वकतत्त्वज्ञानहेतुरित्यु-क्तम् । तत्र त्वंपदार्थस्याशुद्धिस्त्रिविधा । सा त्रेधा भक्त्या विनश्य-

तीत्युपपादयितुं काण्डत्रयात्मकं शास्त्रं त्रिविधाशुद्धिनिरासहेतु-भगवद्भक्त्यवबोधनद्वारा भगवद्वासुदेवे एव पर्यवसन्नमिति सूचयन्नादौ त्वंपदार्थस्याशुद्धेस्त्रैविध्यं तन्निरासोपायञ्च दर्शयति—त्रेधेत्यादिपद्य-चतुष्टयेन । त्वमस्त्वंपदार्थस्य आत्ममोहिनी स्वस्वरूपव्यामोहकर्त्री अशुद्धिस्त्रेधाऽस्तीति सम्बन्धः । तत्त्रैविध्यमेवाह—स्वाज्ञानेत्यादिना । स्वाज्ञानं स्वस्वरूपानवबोध एकाऽशुद्धिः, सकलाशुद्धिनिदानत्वात् प्रथमोपात्ता सा चतुर्विधा । अनित्ये ब्रह्मलोकादिसंसारफले नित्यत्व-बुद्धिरेकाऽविद्या द्रष्टव्या । अशुचिषु स्वशरीरपुत्रभार्य्यादिशरीरेषु शुचित्वबुद्धिरपरा, दुःखेषु दुःखसाधनेषु च सुखतत्साधनबुद्धिरन्या, अनात्मनि देहादावहमित्यात्मबुद्धिरितरा चेति । तदुक्तम्—"अनि-त्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या"। इति तद्धेतुका द्वितीया विक्षेपात्मिका । सा अनेकविधा, रागद्वेषाभिनिवेशाद्यनन्तभेद-वत्त्वात् । तद्धेतुका तृतीया मलं पापाद्यपरपर्यायं तद्रूपा निषिद्धा-चरणजन्या अनन्तजन्मसञ्चिता तत्त्वज्ञानप्रतिबन्धिका । एवमशु-द्धित्रयं प्रदर्श्य तन्निरासोपायं वदन्नादौ साक्षादनर्थरूपपापाख्याशुद्धे-र्निरासोपायं दर्शयति—तत्रेत्यादिसार्द्धेन । तत्र तिसृषु मध्येऽन्तिमाऽ-शुद्धिरघाभिधा पापनाम्नी धियस्तदुपाधिकस्य जीवस्य वेदचोदितैः श्रुतिस्मृतिबोधितैः "तमेतं ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेन" (बृ० ४।४।२२) इत्यादिश्रुतिवाक्यैः "कषाये कर्म्मभिः पक्वे ततो ज्ञानं प्रवर्त्तते" इत्यादिस्मृतिवाक्यैर्विहितैर्यज्ञादिभिर्विन-श्यतीत्यर्थः ॥ ५९ ॥

**यज्ञस्तपोदानमहङ्कृतिं विना**
**गोविन्दपादाब्जसमर्पितं कृतम् ।**
**अनेकजन्मार्जितपापसञ्चयं**
**निहन्ति भक्तिं जनयत्यधोक्षजे ॥ ६० ॥**

एतदेव विवृणोति—यज्ञ इति। यज्ञो देवतोद्देशेन द्रव्यत्यागात्मकः, तपः शास्त्रानुरोधेन शरीरेन्द्रियादेः शोषणम्, शारीरादिकं भगवदुक्तं त्रिविधं वा, दानं न्यायार्जितस्य वित्तस्य स्वस्वत्वत्यागपूर्वकपरस्वत्वापादनम्, तच्च पात्रेषु; एतत्त्रयोपादानं वेदानुवचनदेवार्चनादेरप्युपलक्षणम्। तत्सर्वमहङ्करोमीत्यहङ्कृतिं विना गोविन्दपादाब्जसमर्पितं यथा स्यात्तथा कृतं सत्, अनेकजन्मार्जितं पापसञ्चयं भगवद्भक्तितत्त्वज्ञानप्रतिबन्धकं भगवत्समर्पणबलेन झटित्येव निहन्त्युच्छिनत्तीत्यर्थः। सकलप्रतिबन्धकपापोच्छेदः सिद्ध इति कथं ज्ञायेतेत्याद्यपेक्षायामाह—भक्तिमिति। भगवति समग्रैश्वर्य्यादिसम्पन्नेऽधोक्षेषु प्रत्याहृतेष्विन्द्रियेषु सत्सु जायते हृदये प्रादुर्भवतीत्यधोक्षजः श्रीकृष्णस्तस्मिन् भक्तिमनुरागलक्षणां जनयत्युत्पादयति। तथा च भगवद्भक्तिप्रादुर्भावेनैव पापोच्छेदसिद्धिर्लक्षणीया, नहि सकलप्रतिबन्धकपापोच्छेदिपुण्यपुञ्जमन्तरेण भगवति भक्तिरुत्पद्यते इति भावः ॥ ६० ॥

**विक्षेपहानिर्भगवत्पदाम्बुज-**
**ध्यानेन सिद्ध्यत्यचलेन सर्वदा ।**
**शान्तिः स्थिरा लभ्यत ईश्वरे ततो**
**विहाय कामानखिलान् सदास्थितिः ॥६१॥**

एवं भगवदर्चनलक्षणयज्ञदानाद्यनुष्ठानेन पापाख्याशुद्धिनिरासं तत्फलं भगवद्भक्तिञ्चाभिधाय,विक्षेपाख्याशुद्धिनिरासोपायं भगवद्ध्यानं तत्फलञ्च दर्शयति—विक्षेपहानिरिति। सर्वदा निरन्तरमित्युपलक्षणं दीर्घकालादरादेरपि। भगवत्पदाम्बुजध्यानेनाचलेन विघ्नैरनभिभाव्यतया स्थिरेण विक्षेपस्य रागद्वेषादिदोषजालहेतुभूतचित्तचाञ्चल्यस्य हानिर्निवृत्तिर्भवति। ततः शान्तिः रागादिनिवृत्त्युपलक्षिता चित्तविश्रान्तिः स्थिरा दीर्घकालानुवर्त्तिनी लभ्यते। ततः किमिति तत्राह—

ईश्वरे इति । ततश्चित्तविश्रान्तिरूपशान्त्युदयानन्तरं ईश्वरे भगवत्तत्त्वेऽखिलान् कामानिच्छाभेदान्विहाय परित्यज्याऽनायासेन सदास्थितिनैरन्तर्येण पर्यवसानं लभ्यते इत्यर्थः ॥ ६१ ॥

**मुकुन्दपादाम्बुजभक्तिवैभव-**
**प्रोद्भूतवेदान्तविचारणा दृढा ।**
**तदुत्थबोधेन निहन्त्यशेषतोऽ-**
**प्यशुद्धिमज्ञानमयीं विविक्तधीः ॥ ६२ ॥**

एवं विक्षेपनिवृत्तिमभिधायाज्ञानाख्याशुद्धिनिरासोपायं दर्शयति—मुकुन्देति । "मुक्तिमिच्छेज्जनार्दनात्" इत्यादौ मुक्तिदातृत्वेन प्रसिद्धस्य श्रीमन्मुकुन्दस्य पादावेव सौन्दर्यमाधुर्य्यसौष्ठवमार्दवादिगुणैरम्बुजरूपौ तत्रानुरागरूपा भक्तिस्तस्या वैभवमुत्तरोत्तरोत्कर्षजनितप्रेमदार्ढ्यरूपमैश्वर्य्यं तेन प्रकर्षेणाचार्य्यद्वारोद्भूता या वेदान्तविचारणा दृढा प्रमाणप्रमेयगतासम्भावनोच्छेदकत्वेनाऽतिनिश्चला तदुत्थबोधेन तयाऽऽविर्भूतजाग्रदाद्यवस्थाविनिर्मुक्तसाक्षितत्त्वबोधेन विविक्ते देहादिभ्यः स्वत एव पृथक्कृते साक्षितत्त्वे धीर्निश्चयात्मिका चेतोवृत्तिर्यस्य सोऽज्ञानमयीं चतुर्विधामविद्याख्यामशेषतः सकारणां सविलासां निहन्ति नाशयतीत्यर्थः ॥ ६२ ॥

**एवं त्वमर्थे परिशोधितेऽञ्जसा**
**स्यात्तत्पदार्थेन विशुद्धवस्तुना ।**
**सहैक्यबोधः श्रुतिमौलिवाक्यतः**
**प्रत्यक्चितो ह्याशु ततो विमुच्यते ॥ ६३ ॥**

ननु साक्षितत्त्वज्ञानमात्रेण कथं समस्ताविद्यानाशः ? कथं वा मुक्तिः ? यतो वेदान्तानां ब्रह्मात्मैक्यमेव विषयः, तद्ज्ञानमेव

अज्ञानबाधद्वारा मोक्षसाधनमित्याशङ्क्याह—एवमिति । एवं पूर्वोक्तरीत्या त्रिविधाशुद्धिनिरासेन त्वंपदार्थे परिशोधिते सति तत्पदार्थेन विशुद्धवस्तुना सच्चिदानन्दानन्ताद्वयरूपेण सहैक्यबोधोऽभेदज्ञानं प्रत्यक्चैतन्यस्य श्रुतिमौलिवाक्यं तत्त्वमस्यादि प्रमाणमूर्द्धन्यं तज्जन्योऽञ्जसाऽनायासेन स्वत एव स्यात् सिद्ध्यतीत्यर्थः । साकल्येन पुरुषापराधविनिवृत्तौ सिद्धायां स्वत एव सिद्धे ब्रह्मात्मैक्यबोधे न तदर्थं पुनः पृथक् प्रयासोऽपेक्ष्यते इति भावः । तदुक्तं सङ्क्षेपशारीरकाचार्य्यैः—

"पुरुषापराधविनिवृत्तिफलः सकलो विचार इति वेदविदः ।
अनपेक्षतामनुपरुद्ध्य गिरः फलवद्भवेत्प्रकरणं तदतः ॥
पुरुषापराधशतसङ्कुलता विनिवर्त्यते प्रकरणेन गिरः ।
स्वयमेव वेदशिरसो वचनादथ बुद्धिरुद्भवति मुक्तिफला ॥"
(सं० शा० १ । १६—१७)

तथा च पूर्वोक्तत्रिविधोपायेन पुरुषापराधे त्रिविधाशुद्धिलक्षणेऽपसारिते सति अनन्तरं मुक्तिफला बुद्धिर्वेदशिरसो वचनात् स्वयमेवोद्भवति, न विचारस्य वाक्यप्रमित्युत्पत्तावप्युपयोग इति तात्पर्य्यम् । ततस्तस्माद् ब्रह्मैक्यज्ञानादाशु तदुदयसमसमये विमुच्यते कृतकृत्यो भवतीत्यर्थः ॥ ६३ ॥

**व्योमादिकर्त्तृत्वमपीश्वरेऽर्पितं**
**स्वमायया नित्यनिवृत्तयेक्षया ।**
**तथा परोक्षत्वमुखा गुणा विभौ**
**प्रकल्पितास्तच्च सदद्वयेऽक्षरे ॥ ६४ ॥**

वस्तुत एकमेवाद्वितीयं चैतन्यं तत्र मायाविद्योपाधिपरिकल्पितो जीवब्रह्मविभागस्तत्तदुपाधिनिरासेन स्वत एव ब्रह्मैक्यं सिद्धमित्यसकृदुक्तमेवार्थं पुनर्द्रढयति—व्योमादीति । ईश्वरे मायोपहितचैतन्ये

व्योमादिकर्त्तृत्वमपि स्वाधीनभूतमायया ऽर्पितम्, नहि जीवे इव स्वरूपावरणेन तत्रार्पितम्, किन्तु स्वतः सिद्धा या ईक्षा निरावरणस्वरूपाववोधस्तया नित्यनिवृत्तरूपया। तथा परोक्षत्वादयो गुणा नित्यापरोक्षस्वरूपेऽपि जीवव्यामोहार्थं तत्र सद्द्वयेऽक्षरे परब्रह्मणि विभौ परिपूर्णस्वभावे आरोपिता इत्यर्थः ॥ ६४ ॥

**त्वमर्थमात्मन्यपि जाग्रदादयः**
**कर्त्तृत्वभोक्तृत्वमुखाः प्रकल्पिताः ।**
**स्वाविद्यया साक्षिणि निर्विकल्पके**
**तुरीयतत्त्वेऽनुभवात्मनीति च ॥ ६५ ॥**

एवं तत्पदार्थे आरोपप्रकारं प्रदर्श्य त्वंपदार्थेऽपि दर्शयति—त्वमिति। त्वंपदार्थे आत्मन्यपि वस्तुतो निर्विकल्पकस्वरूपे तुरीयतत्त्वेऽनुभवात्मनि अविद्यातत्कार्य्यसाक्षिण्यपि स्वाविद्यया स्वस्वरूपावरणेन जाग्रदादयोऽवस्थाः, कर्त्तृत्वादयो गुणा दोषरूपाः प्रकल्पिताः। इति चेति निपातसमुदायेनैकस्मिन्नेव चैतन्ये नानाविरुद्धधर्म्मा अविद्यया मायया च परिकल्पिता इति सूच्यते इत्यर्थः ॥ ६५ ॥

**विशुद्धसत्त्वात्मतया महीश्वरो-**
**पाधिर्न तत्रावृतिविभ्रमप्रदः ।**
**सार्वज्ञ्य मुख्यास्तदुपाधिना गुणाः**
**समर्पिताः प्रत्युत दोषबाधकाः ॥ ६६ ॥**

धर्म्माणामुभयत्र कल्पितत्वसाम्येऽपि उपाधितारतम्यात्तयोर्विशेषमाह—विशुद्धेति। यद्वा, विद्याया ऐक्येऽपि तदुपहितचैतन्यस्याप्यैक्ये सत्त्वशुद्ध्यविशुद्धिभ्यां तया महद् वैषम्यं सम्पादितमित्याह—

विशुद्धेति। विशुद्धसत्त्वात्मतया शुद्धसत्त्वप्राधान्येन महेश्वरस्य तत्पदार्थस्योपाधिर्माया तत्र तत्पदार्थे परमात्मनि आवृतिरावरणं विभ्रमो विक्षेपोऽन्यथाभानलक्षणस्तदुभयप्रदो न भवति। प्रत्युत दोषबाधकास्तत्स्वरूपानुसन्धातॄणां पुंसामिति शेषः। सार्वज्ञ्यमुख्या गुणा निर्दुष्टास्तदुपाधिना मायया समर्पिता इति योजना॥ ६६॥

**रजस्तमोमिश्रितसत्त्वसावृते-**
**र्निधानमज्ञानमशेषदुःखदम्।**
**प्रत्यञ्चमानन्दमपीदमावृणो-**
**त्युपाधिरामोक्षमनादिभावतः॥ ६७॥**

तस्मिन्नेव चैतन्ये त्वंपदार्थे मलिनसत्त्वप्रधानेनाज्ञानेन वैपरीत्यमध्यस्तमित्याह—रज इति। अज्ञानं रजस्तमोभ्यामभिभूतसत्त्वमावृतेर्निधानमावरणशक्तिकमशेषदुःखमन्यथाभानलक्षणं विक्षेपरूपं च ददातीति। तथा प्रत्यञ्चं परमप्रेमास्पदतयाऽऽनन्दस्वभावमप्यावृणोति—तमाच्छाद्य बहिर्मुखं करोतीत्यर्थः। तच्चाज्ञानं तत्त्वज्ञानमन्तरेण दुरुच्छेदमित्याह—उपाधिरिति। अनादिभावरूपोऽयमुपाधिर्मोक्षपर्यन्तं तिष्ठति तत्त्वसाक्षात्कारमन्तरेण न विनश्यतीत्यर्थः॥ ६७॥

**उपाधियुग्मं परिहृत्य बाधितं**
**तदर्पितान् धर्म्मगणान् विहाय च।**
**विशुद्धचैतन्यमखण्डमद्वयं**
**द्वयोः स्वरूपं निगमेन बोध्यते॥ ६८॥**

उपाधिद्वयपरित्यागेन स्वयमेवाखण्डवाक्यार्थसिद्धिरित्याह—उपाधियुग्ममिति। मायाविद्यारूपमुपाधिद्वयं बाधितं स्वत एव बोध-

स्वरूपमहिम्ना निवृत्तं परिहृत्य नास्तीति विनिश्चित्य, तदर्पितान् ताभ्यां मायाविद्याभ्यां परिकल्पितान् परोक्षत्वापरोक्षत्वादीन् विरुद्धधर्म्मगणान् विहाय शुद्धस्वरूपनिधर्मकब्रह्मचैतन्यमहिम्नैव न सन्तीति निश्चित्य, विशुद्धचैतन्यमखण्डाद्वैततत्त्वं तत्त्वंपदार्थयोः स्वरूपं निगमेन तत्त्वमस्यादिवाक्येन बोध्यते इत्यर्थः। तथा च ब्रह्मात्मैक्यमविद्यातत्कार्य्यसकलप्रपञ्चस्य नित्यनिवृत्तत्वञ्च सिद्धमेव श्रुत्या बोध्यते इति भावः। तदुक्तं—

"नित्यबोधपरिपीडितं जगद्विभ्रमं नुदति वाक्यजा मतिः।
वासुदेवनिहतं धनञ्जयो हन्ति कौरवकुलं यथा पुनः" ॥ ६८ ॥

**विज्ञाय चैतन्यमखण्डमद्वयं**
**प्रत्यञ्चमानन्दमशेषसाक्षिणम्।**
**विमुच्यते शेषविकल्पकारणं**
**निहत्य मोहं भवपञ्जरात् सुधीः ॥ ६९ ॥**

अविद्यानिवर्त्तकतत्त्वसाक्षात्कारे सिद्धे "विमुक्तश्च विमुच्यते" (क० २।५।१) "निवृत्तश्च निवर्त्तते" इति श्रुतेः स्वत एव दृश्यात्यन्ताभावोपलक्षितस्वरूपावस्थानलक्षणा मुक्तिः सिद्ध्यति। अखण्डबोधफलं वदन्नुपसंहरति—विज्ञायेति। अशेषसाक्षिणं प्रत्यञ्चं चैतन्यमखण्डवाक्यार्थं विज्ञाय साक्षात्कृत्याशेषविकल्पकारणं मोहमज्ञानं निःशेषं निहत्यापबाध्य सुधीस्तत्त्वज्ञो भवपञ्जराद् विमुच्यते इति योजना ॥ ६९ ॥

**लब्ध्वाऽतिदुर्लभमिदं नरजन्म मोक्ष-**
**द्वारं यतेत निगमान्तगिरां विचारे।**
**त्यक्त्वाऽऽसुरीमतिमशोषत आत्मपातां**
**भोगस्पृहां जडजनाभिमतां विवेकी ॥ ७० ॥**

एतावदेव सर्वशास्त्रविचारफलं सर्वप्रयत्नेन सम्पाद्यम्, तत्सम्पादनञ्च विषयवैराग्यभगवद्भक्तिभ्यामेव नान्यथेति वदन् मुमुक्षून् शिक्षयति—लब्ध्वेति । अतिदुर्लभमनन्तसुकृतपरिपाकं विना दुष्प्रापं नरजन्माधिकारि शरीरमिदं लक्षश्रङ्करतयानुभूयमानं मोक्षद्वारत्वादेवातिदुर्लभं लब्ध्वा प्राप्य भोगस्पृहामासुरीम्—असून् प्राणेन्द्रियाणि रमयन्ति तर्पयन्तीत्यसुरास्तत्सम्बन्धिनीं मतिम्, अत एव जडजनाभिमतां देहाद्यभिमानिमूढजनाभीष्टाम्, अत एवात्मनः पातः संसारान्धकूपे यया तामशेषतः आमनुष्यादाविरिञ्च्यं साकल्येन त्यक्त्वा दृष्टानुश्रविकवैतृष्ण्यं प्राप्येत्यर्थः । तत्र हेतुः—विवेकीति । नित्यानित्यवस्तुविवेकवान् साधनचतुष्टयसम्पन्नः सन्निगमान्तविचारे तत्त्वमस्यादिवेदान्तवाक्यविचारे यतेत तत्त्वसाक्षात्कारपर्यन्तं प्रयत्नं कुर्यादित्यर्थः ॥ ७० ॥

**वैराग्यमेव विषयेभ्य उदारभक्त्या**
**जातं मुमुक्षुमपवर्ग्यपथे युनक्ति ।**
**विष्णोर्गुणश्रवणकीर्त्तनसंस्मृतिभ्यो**
**भक्तिर्भवेद्भगवतीश्वर आत्मनाथे ॥ ७१ ॥**

तत्त्वज्ञानस्य पुष्कलं साधनं वैराग्यमेव, तच्च भगवद्भक्त्यधीनमित्याह—वैराग्यमिति । उदारस्य भगवतो वासुदेवस्य भक्त्या विषयेभ्यो वैराग्यमेव जातं सत् मुमुक्षुमपवर्ग्यपथेऽपवर्गहितत्वात्तत्त्वज्ञानमपवर्ग्यं तस्य पन्थास्तत्प्राप्तिमार्गः श्रवणादिरूपस्तत्र युनक्ति योजयति । ननु भगवद्भक्तिर्जाता चेद्वैराग्यं जनयिष्यति तस्या एव कुतो जन्मेत्यत आह—विष्णोरिति । व्यापनशीलस्य भगवतो वासुदेवस्य गुणानुवादश्रवणकीर्त्तनसंस्मृतिभ्यो भगवति भजनीयगुणे भक्तिर्भवेदित्यावश्यकं तद्भजनं जीवानामिति बोधयितुम् 'ईश्वरे' इति, स्वामिप्रसादसिद्धये भृत्यैर्नित्यं यतितव्यमिति बोधयितुम् 'आत्मनाथे' इत्युक्तम् ॥ ७१ ॥

**वैराग्यभक्तियुत आत्मविचारमार्गे**
**सम्यग् भवेदधिकृतो विमलान्तरात्मा ।**
**तत्त्वंपदार्थपरिशीलनतो विपश्चित्**
**प्राप्नोति बोधममलं ह्यपवर्गनिष्ठम् ॥ ७२ ॥**

भक्तिवैराग्यसम्पन्नस्यैव वेदान्ततत्त्वविचारेऽधिकारो नान्यस्येत्याह—वैराग्येति । तथा च भगवन्नामश्रवणकीर्त्तनस्मरणादिभिरुपायैर्भगवति वासुदेवे प्रेमभक्तिः सम्पाद्या । तत्प्रसादादैहिकामुष्मिकफलभोगेभ्यो वैराग्यं भगवदैश्वर्य्यभूतं पुरुषधौरेयाणां स्वत एव सिद्ध्यतीति भावः ॥ ७२ ॥

**न त्वंपदार्थमविविच्य कदापि बोधं**
**प्राप्नोति कश्चन मुमुक्षुरखण्डनिष्ठम् ।**
**तस्मात्त्वमर्थमभियुक्तनिरूक्तरीत्या**
**सम्यग्विविच्य तत आत्मपदं भजेत ॥७३॥**

ननु भक्तिवैराग्याभ्यामेव तत्त्वज्ञाने सिद्धे कृतं त्वंपदार्थविचारेणेत्याशङ्क्य भक्तिवैराग्याभ्यामपि त्वंपदार्थविचारद्वारैव तत्त्वज्ञानं जन्यत इत्याशयेनाह—नेति । त्वंपदार्थं साक्षितत्त्वं देहादिभ्योऽविविच्य तस्याः कर्त्तृभोक्तृस्वभावत्वेन विवेचनमकृत्वा कश्चनापि मुमुक्षुः कदापि अखण्डवस्तुनिष्ठं बोधं न प्राप्नोति । तस्मादभियुक्तैः सूत्रकारभाष्यकारादिभिर्भगवद्बादरायणभगवत्पादादिभिर्निरुक्ता या रीतिर्निर्णयप्रकारस्तया त्वंपदार्थं सम्यग् विविच्य तत आत्मपदं वेदान्तप्रतिपाद्यमखण्डबोधरूपं ब्रह्मात्मैक्यं भजेत प्राप्नुयादित्यर्थः ॥ ७३ ॥

**देहादिवर्गगतनैजमतिं विहाय**
**प्रत्यञ्चमेकमजडं जडसाक्षिणं स्वम् ।**

ईक्षेत नित्यमचलं रहसि स्थितः सन्
ध्यात्वा तमेवमपरोक्षतया विभातम् ॥७४॥

तस्मात्त्वंपदार्थविचारोऽत्यावश्यकः, तं मुमुक्षुर्नित्यमेव कुर्यादित्यभिप्रेत्याह—देहादिवर्गेति । देहादिजडवर्गगता याऽऽध्यासिकी नैजमतिः स्वात्मत्वबुद्धिस्तां विहाय त्यक्त्वा तेभ्योऽनात्मरूपेभ्यो विलक्षणं प्रत्यञ्चमीक्षेत । प्रत्यक्त्वमेवाह—एकमिति । अनेकेषु देहादिष्वनुगतम्, अजडं चैतन्यम्, अत एव स्वस्मिन् कल्पितस्य जडस्य देहादेः साक्षिणं साक्षाद्द्रष्टारम्, नित्यं सत्यमबाध्यमिति यावत्, अचलं नित्यकौटस्थ्यादक्रियम्, स्वप्रकाशत्वान्नित्यापरोक्षतया विभातं स्वत एव स्वप्रकाशमानम्, स्वं स्वात्मानं रहसि विविक्तदेशे स्थितः सन् तमेवमुक्तस्वरूपं ध्यात्वा श्रुतं मतञ्च निदिध्यास्य ईक्षेत साक्षात्कुर्यादित्यर्थः ॥ ७४ ॥

श्रुत्वा श्रुतिभ्य उदितं गुरुणात्मतत्त्वं
युक्त्यावगम्य नितरां परमात्मनिष्ठः ।
ध्यायंस्तमेवमनिशं निजतत्त्वबोधं
साक्षात्करोति भवबन्धलयस्ततः स्यात्॥७५॥

उक्तमेवार्थं पुनर्द्रढयति—श्रुत्वेति । आदौ गुरुणोदितं श्रुतिभ्यस्तत्त्वमस्यादिवाक्येभ्य आत्मतत्त्वं श्रुत्वा सम्यगवधार्य्य पुनर्नितरामतिशयेन परमात्मनिष्ठो मुमुक्षुर्युक्त्या श्रुत्यनुकूलतर्कैरवगम्य सम्भावितमेवमनिशं नित्यं ध्यात्वा निदिध्यास्य निजतत्त्वं ज्ञानघनं साक्षात्करोति, ततः स्वत एव भवपाशहानिर्भवतीति योजना ॥ ७५ ॥

कर्त्तृत्वमुख्यमनिरस्य विकल्पजालं
न स्यात्त्वमर्थपरिशोधनमैक्ययोग्यम् ।

तस्माद्विविच्य निजतत्त्वधिया निरस्येत्
कर्त्तृत्वमुख्यमिह कल्पितमात्मतत्त्वे ॥७६॥

एवं तत्त्वंपदार्थज्ञानं तदैक्यज्ञानञ्च कर्त्तव्यत्वेन सङ्क्षेपेण निरूप्य तदेव पुनर्विस्तरेण वक्ष्यमाणं सप्तमप्रकरणे तदर्थं वक्ष्यमाणप्रमेयं सूत्रयति— कर्त्तृत्वमुख्यमिति। अध्यस्तकर्त्तृत्वादिविकल्पजालनिरासमन्तरेण त्वंपदार्थस्य शुद्धेरभावादखण्डवाक्यार्थबोधनयोग्यता न स्यात्। तस्मात्प्रत्यगात्मविवेचनेन कर्त्तृत्वादिविकल्पं निरस्य ब्रह्मैक्यसाक्षात्कारं कुर्यादिति तात्पर्यार्थः॥ ७६ ॥

कूटस्थमद्वयसुखं भ्रमभेदशून्यं
बुद्ध्वा त्यजेत्सकलसाधनमात्मनिष्ठः।
जीवन्विमुक्त इह तिष्ठति नित्यतुष्टो
नैनं तपेदपि कृताकृतवह्नितापः॥ ७७ ॥

वेदान्तजन्यसाक्षात्कारवतः कृतकृत्यत्वमनुवदंस्तस्य सकलानर्थनिवृत्तिं दर्शयति—कूटस्थमिति। कूटस्थं त्वंपदलक्ष्यम्, अद्वयसुखं तत्पदलक्ष्यम्, भ्रमभेदशून्यं भ्रान्तिप्रयुक्तो यो भेदस्तेन रहितमखण्डवाक्यार्थं बुद्ध्वा अयमहमस्मीति साक्षात्कृत्यात्मन्येव निष्ठा परिसमाप्तिर्यस्य स च ब्रह्मवित्सकलसाधनं प्रवृत्तिनिवृत्तिकाण्डप्रतिपादितं त्यजेत्, कृतकृत्यत्वात् सर्वत्रोदासीनतां भजेत्। "मुमुक्षोरुपदेशाय लिङः प्रयोगः।" अत एव जीवन् जीवनहेतुव्यापारं कुर्वन्नपि विमुक्त एव इह स्वमहिम्नि नित्येन निजानन्देन तुष्टः संस्तिष्ठति। कृतं पापमकृतञ्च पुण्यं ते एव वह्नितापः स चैनं तत्त्वविदं न तपेत् सतापं न जनयेदित्यर्थः। "नैनं कृताकृते तपतः" इति श्रुतेः॥ ७७ ॥

**सकलसुखनिधानं सर्वविद्यावभासं**
**भ्रमतिमिरविहीनं शान्तमूर्त्तिं विशुद्धम् ।**
**हृदि गतमभिरामं सर्ववेदान्तभूमिं**
**यदुपतिमभिवन्दे कृष्णमीशानमन्तः ॥७८॥**

इति प्रत्यक्तत्त्वचिन्तामणौ षष्ठं प्रकरणं सम्पूर्णम् ॥ ६ ॥

प्रकरणमुपसंहरन् मङ्गलमूर्त्तिं भगवन्तं वासुदेवं नमस्यति—सकलसुखनिधानमिति । मानुषानन्दमारभ्य हैरण्यगर्भानन्दपर्यन्तं सकलसुखलवानां निधानं निरतिशयसुखस्वरूपम्, सर्वविद्यावभासं सकलज्ञानप्रकाशस्वरूपम्, अविद्यावरणरहितम्, अत एव शान्तमूर्त्तिम् अविद्यातत्कार्य्यबाधोपलक्षिता मूर्त्तिर्यस्य, अत एव विशुद्धम्, हृदि गतं प्रत्यगभिन्नम्, अभिरामं सर्वसौन्दर्य्यसारसर्वस्वम्, सर्ववेदान्तपर्यवसानभूमिम्, यदुवंशपालकम्, ईशानं सर्वविश्वनियन्तारम्, अन्तः सर्वान्तरत्वेन श्रुतिस्मृतिविद्वज्जनप्रसिद्धं कृष्णं स्वेष्टदैवतं भगवन्तं वासुदेवमभिवन्दे मनसा कर्म्मणा वाचा प्रणमामीति योजना । ७८ ॥

आह्लादिनी सुमनसान्तमसः परं स्वं
प्रत्यञ्चमद्वयसुखं वितरत्यमोघा ।
शान्तिं तनोति भवदुःखभयस्य साक्षाद्
भक्तिर्हरेर्विजयते सहसान्ध्यनाशात् ॥ १ ॥

नन्दनन्दनपादाब्जमकरन्दे मतिर्मम ।
षट्पदीव रतिं लब्ध्वा तत्रैव रमतां सदा ॥ २ ॥

इति श्रीमन्मुकुन्दपदारविन्दमकरन्दाभिलाषिसदानन्दविद्वत्कृतायां प्रत्यक्तत्त्वचिन्तामणिव्याख्यायां स्वप्रभाभिधायां तत्त्वंपदार्थविचारमयूखाभिधं षष्ठं प्रकरणं समाप्तिमगमत् ॥ ६ ॥

---

# प्रत्यक्तत्त्वचिन्तामणिटीकायां प्रसङ्गादुद्धृतानां श्रुत्यादीनामकारादिवर्णानुक्रमेण सूचीपत्रम्

## अ

# प्रत्यक्तत्त्वचिन्तामणिश्लोकानामकारादि-क्रमेणानुक्रमणिका

श्लो० पृ०

अ

४१

---

# शुद्धिपत्रम्

| अशुद्धम् | शुद्धम् | पं० पृ० |
|---|---|---|
| प्रतिकूलभूताविघात त्कार्यवन्ध० | प्रतिकूलभूताविघात-त्कार्यबन्ध० | १७—९ |
| प्राह्वीभावेन | प्रह्वीभावेन | ४—१० |
| तदैक्यत्वञ्च | तदेकत्वञ्च | १—१४ |
| एकैवनिष्ठा | एकैव निष्ठा | १८—१९ |
| स्वच्छोऽत्यन्त निर्मलः | स्वच्छोऽत्यन्त-निर्मलः | ७—२१ |
| प्रत्यक्तत्व० | प्रत्यक्तत्त्व० | १४—२१ |
| मात्रादिहेतु | मात्रादिहेतुः | २४—२१ |
| च्छिन्न पदा- | च्छिन्नपदा- | १०—२३ |
| एष······निनीषते | "एष······निनीषते" | |
| परं | पदं | २१—२६ |
| रनुतिष्ठितस्य | रनुष्ठितस्य | १०—२८ |
| किं स्वरूपः | किंस्वरूपः | १६—३४ |
| त्वं पदार्थ | त्वम्पदार्थ | ३—३६ |
| तथा च वृथा शास्त्रारम्भोपदेशादि० | तथा च वृथा शास्त्रारम्भोपदेशः स्यादि० | २४—४० |
| प्रतिष्ठापरिसमाप्ति० | प्रतिष्ठा परिसमाप्ति० | १२—४१ |
| सत्वा० | सत्त्वा० | १६—४६ |
| ०फलाच्च | फलत्वाच्च | २४—४६ |
| ०वत्वात् | ०वत्त्वात् | १६—५० |

| अशुद्धम् | शुद्धम् | पं० पृ० |
|---|---|---|
| यस्य स | यस्य सः | २३—५१ |
| ०वत्वात् | ०वत्त्वात् | १६—५२ |
| ०तया निर्वा० | ०तयाऽनिर्वा० | २०—५३ |
| न हि | नहि | १५—५५ |
| नह्येको० | नैह्येको० | १२—६० |
| ०तत्त्वेशुष्क० | ०तत्त्वे शुष्क० | १—६४ |
| तर्का प्रतिष्ठानात् | तर्काप्रतिष्ठानात् | ७—६४ |
| सर्वाषु | सर्वासु | १३—६४ |
| ०द्युप्रक्रम्य | ०द्युपक्रम्य | २—६७ |
| प्राज्ञमन्यैः | प्राज्ञम्मन्यैः | ६—७६ |
| जीव | जीवः | ४—८१ |
| ०निधि प्रत्य० | ०निधिप्रत्य० (०निधिः प्रत्य०?) | १७—८२ |
| ०सिन्धु प्रत्यगात्म० | सिन्धुप्रत्यगात्म० | १—८३ |
| तारयितु | तारयितुम् | १८—८३ |
| तस्यानिवर्त्तकं | तस्या निवर्त्तकं | ६—६५ |
| वा व्यतिरेकतः | वाऽव्यतिरेकतः | १६—६८ |
| तदाश्रवणे० | तदा श्रवणे० | १४—१०१ |
| ०तत्त्वेन | ०तत्वेन | ६—१०५ |
| विधिनिर्दुष्टः | विधिर्निर्दुष्टः | १४—१०५ |
| ब्रह्मबुभूषुः | ब्रह्म बुभूषुः | १५—१०५ |
| प्रपञ्चंप्रत्य० | प्रपञ्चं प्रत्य० | १४—११४ |
| ०वकाशइति | ०वकाश इति | १५—११५ |
| सत्ता- | सत्ता | १३—११६ |
| सासहं | साहसं | ६—११८ |

| अशुद्धम् | शुद्धम् | पं० पृ० |
|---|---|---|
| अनात्मनो ज्ञातृतया | अनात्मनोऽज्ञातृतया | ८–१२० |
| ०विवादम् | ०नाम | १८–१२३ |
| ०नामित्यविषयत्वम् | ०विषयत्वमित्यविवादम् | १६–१२३ |
| आत्मनो ज्ञात० | आत्मनोऽज्ञात० | ३–१२४ |
| ०निवृति० | निवृत्ति० | १८–१२६ |
| ०वाथऽवेति | ०वाऽथवेति | २–१३० |
| प्रावृत्ता: | प्रावृता: | १०–१३५ |
| कल्पितेस्त: | कल्पिते स्त: | १६–१३५ |
| मूल बाधेन | मूलबाधेन | २०–१४० |
| यवान् | यद्भवान् | १६–१४४ |
| प्रसङ्गदा० | प्रसङ्गादा० | ७–१४५ |
| ०स्तवमते | ०स्तव मते | ५–१४६ |
| नेहनाना० | नेह नाना० | १७–१४८ |
| ०ऽनाधिगता | ०ऽनधिगता | ४–१५१ |
| तु शब्द | तुशब्द: | २०–१५३ |
| वाऽद्यानुपघातात् | वाऽघानुपघातात | ३–१६० |
| भवेत्भ्रान्ति० | भवेद्भ्रान्ति० | २१–१६२ |
| अन्तकरणा० | अन्त:करणा० | ४–१६५ |
| ०वृत्तत्त्वं | ०वृत्तत्वं | १–१६८ |
| ०दार्त | ०दार्त्त | २–१६८ |
| ०चन्द्राग्नाद्यव० | चन्द्राग्न्याद्यव० | ३–१७० |
| देशेकाले | देशे काले | १३–१७४ |
| अज्ञातत्त्व० | अज्ञातत्व० | १७–१७७ |
| निविकल्पे | निर्विकल्पे | २१–१८६ |
| प्रति जानीते | प्रतिजानीते | १४–२०४ |

| अशुद्धम् | शुद्धम् | पं० पृ० |
|---|---|---|
| अतः | अत | १–२२४ |
| ह्यपाय | ह्युपाय | १८–२४० |
| बुद्धाकलय्येदं | बुद्धावाकलय्येदं | १२–२५१ |
| ०महङ्कृति० | ०महङ्कृतिं० | २२–२८० |
| सार्वज्ञ्य मुख्या० | सार्वज्ञ्यमुख्या० | १८–२८४ |

---